श्रीः

# भारत स्वातंत्र्य संग्रामेतिहासः

रचयिता

**आचार्य डा० रमेशचन्द शुक्लः**
एम. ए., पीएच. डी.
साहित्याचार्यः, सांख्ययोगाचार्यः,
भू. पू. आचार्यः संस्कृत-विभागः,
श्री वार्ष्णेय कालेज, अलीगढ़.
सम्प्रति—निदेशकः,
महर्षि वैदिकानुसन्धान—विभाग
नयी दिल्ली



प्रकाशिका

**देववाणी-परिषद्, दिल्ली**

**६, वाणी-विहारः, नयी दिल्ली-११००५९**

**(भारतम्)**

**प्रणेता** : डॉ० रमेश चन्द्र शुक्ल:

**प्रकाशिका** : देववाणी-परिषद्, दिल्ली
६, वाणी-विहार:, नयी दिल्ली-११००५९

**मुद्रक** : देववाणी प्रिन्टर्स
उत्तम नगर, नयी दिल्ली-११००५९

**संस्करणम्** : प्रथमम्, ४.३.१९८१ ई

**मूल्यम्** :






*BHARAT SWĀTANTRYASANGRAMETIHASA*

**Author** : Shukla, (Dr.) Ramesh Chandra

**Publisher** : Devvani Parishad, Delhi
6, Vani Vihar, New Delhi-110059

**Printers** : Dev Vani Printers,
Uttam Nagar, New Delhi-110059

**Edition** : First, 4.3. 1981

**Price** : Rs.-35

श्रीः

समर्पणम्

यस्य त्यागतपोऽवदातभगवद्भक्तिश्रिताहिंसया
स्वातन्त्र्यं लभते स्म भारतमही पूज्यास्मदीयादृता
तस्मैगान्धिमहात्मने सविनयं ग्रन्थं करोम्यर्पितम्
एतं प्रह्वहृदा भवन्नतशिराः स्वातन्त्र्यवृत्तप्रियम् ॥

## प्रास्ताविकम्

'**देववाणी-परिषद्, दिल्ली**' इत्येतदाख्येयं संस्था सद्-ग्रन्थप्रकाशनरूपस्वोद्देश्यानुसारं डा० रमेशचन्द्र शुक्लप्रणीतं '**भारत-स्वातन्त्र्यसंग्रामेतिहासं**' प्रकाशयन्ती भृशं मुदमावहति।

इतिहासलेखनविषये सन्ति विदुषां विप्रतिपत्तयः। केचिद् विद्वांस इतिहासकारस्य ताटस्थ्यं वरणीयत्वेन प्रतिपादयन्ति, अपरे च पूर्णताटस्थ्यस्य सर्वथा असम्भवत्वमेव उद्घोषयन्ति। अस्यां स्थितावस्य इतिहासस्य विषयेऽपि विदुषां विसंवादा यदि भवेयुस्तदा न किमपि आश्चर्यंकरम्। आचार्यश्रीडाक्टररमेशचन्द्रशुक्लमहोदयानां परिवारः स्वतन्त्रतासंग्रामसैनिकानां परिवारोऽस्ति। तैरत्र स्वदृष्ट्या शब्दप्रमाणं प्रत्यक्षं चानुभूय यल्लिखितं तत्संस्कृतजगते उल्लेखनीयमस्ति।

अयम् इतिहासः सरलसंस्कृतभाषायां स्वदेश-भारतस्य स्वातन्त्र्यसंग्रामसम्बन्धिनम् इतिहासं निदधाति। एतमधीत्य संस्कृतविदः स्वकीयस्य राष्ट्रस्य स्वतन्त्रतासमरपरकमितिवृत्तन्तु वेत्स्यन्त्येव, तेषां हृदयं भारतस्य गरिमाणं, संस्कृतिं, संस्कृतभाषाञ्च प्रति कमपि प्रकर्षविशेषं गमिष्यतीति विश्वस्यते।

आचार्यश्रीडाक्टररमेशचन्द्रशुक्लमहाभागाः सुरभारत्यर्चनाय सादरं वर्धाप्यन्ते।

विदुषामाश्रवः<br>
रमाकान्तशुक्लः<br>
महासचिवः देववाणी-परिषद्, दिल्ली<br>
६, वाणी-विहारः, नयी दिल्ली—११००५६

महाशिवरात्रिः,<br>
४.३.१९८१ ई०

श्री:

# अनुक्रमणिका

प्रतिज्ञा, लवणनिर्माणाय म. गान्धिनो दाण्डी-यात्रा, शासनस्य जनतायां नेतृषु चातिकठोरकष्टप्रहारपूर्वकं दमनम्, गोलमेजपरिषदधिवेशनम्, भगतसिंहप्राणदण्डः, कराँच्यां राष्ट्रियमहासभाधिवेशनम्, द्वितीयगोलमेजाधिवेशनम्, म. गान्धिने राष्ट्रियमहासभाया नेतृणाञ्च बन्दित्वम्, मेकडानलस्यास्पृश्यानां हिन्दूभ्यः पृथक्करणाय कुप्रयत्नः, म. गान्धिन स्तत् कुप्रयासविरोधाय असूनामपि त्यागाय उद्यती भवनं, तदर्थम् अनशनम्, तृतीयगोलमेजाधिवेशनम्, १९३७ तमेशवीयाब्दे शासनप्रदेशेपूत्तरदायिशासनाय निर्वाचनम्, लाहौरे १९४० तमेशवीयाब्दे लीगधिवेशनं तत्र च पाकिस्थानस्थापनेच्छा, क्रिप्समण्डलस्यागमनम् भारतस्यकृते तदीयानि भविष्यत्काले करिष्यमाणानि वचनप्रत्याश्रवणानि, 'भारतं त्यजत' इत्येतद् आंग्लान्प्रति कांग्रेसस्योद्घोषणम्, जर्मनयुद्धस्य प्राबल्यपूर्णाया गते दर्शनम्,

सप्तमः परिच्छेदः

२४१ - २५२

लार्ड वेवेलस्य एटल्याश्च योजनानुसारेण भारते नवनिर्वाचनम्, तत्र राष्ट्रियमहासभाया आशातीत सफलता, सुभाषचन्द्र वसोः सेना, तत्प्रयत्नेन देशप्रेम प्रबल प्रवाहः मुस्लिमलीगस्तन्नेतुर्जिन्नाख्यस्य पाकिस्तानार्थं घोरदुराग्रहः, लार्ड माउण्ट वेटनस्य भारते महाराज्यपालत्वम्, घटनाचक्रस्य तीव्रागतिः, १५-८-१९४७ तमेशवीयाब्दे भारतस्य पाकिस्तानस्य च स्वतन्त्रदेशत्वम्, पाकिस्ताने हिन्दुषु नितान्त कठोरात्याचारा रक्तपातश्च, भारते स्वातन्त्र्यभानो रुदयः ।

卐

श्रीः

लेखकस्य रमेशचन्द्रशुक्लस्य परिचयः

ख्याते धौलपुरे तपोनिधिकुले यः कान्यकुब्जानिधे
ख्रैस्तेऽब्दे जनुरग्रहीदिति निधिव्योमग्रहेन्दुश्रिते
यस्य श्रीगुरुदेवशुक्लसुमति विद्वानुदारः पिता
गङ्गाख्या जननी च हृद्यहृदया साध्वीशिरोभूषणम् ॥
सांख्ये कापिलदर्शने सुविदिते योगे च पातञ्जले
साहित्ये समवाप्य मान्यपदवी माचार्यनाम्नीमयं
जातो मास्टर ऑफ आर्ट च ततः पीएच०डी० ह्याश्रवः
सः प्रध्यां नयते च जीवनमिदं स्वं संस्कृताराधने ॥

---

'भारत-स्वातन्त्र्यसंग्रामेतिहास' ग्रन्थ का प्रकाशन भारत सरकार के शिक्षा और समाज-कल्याण-मन्त्रालय द्वारा साठ प्रतिशत दी गई आर्थिक सहायता से हुआ।

श्री:

# निवेदनम्

अस्मदीयस्य पूज्यस्य भारतस्यास्ति भाषा संस्कृत-भाषा। इयं हि संस्कृतभाषास्त्यस्माकं मातृभाषा। अस्मदीया वेदा:, अस्मदीयानि धर्मशास्त्राणि, दर्शनानि, शास्त्राणि पुराणानि च सर्वाणि संस्कृतभाषाया मेव विद्यन्ते। अस्मद्देशस्याखिल: प्राचीन इतिहास: संस्कृतभाषायामैव गीतोऽस्ति; किं बहुना, सर्वेऽप्याचारा विचारा नीतयश्च संस्कृतभाषायामेव संशोभन्ते। एतद्धेतोस्तस्या: सुरक्षणमस्मदीयोऽस्ति प्रमुखो धर्म:। सर्वथैव सा सर्वत्रास्माभि र्व्यवहर्तव्या। व्यवहरणादेव तस्या: सुरक्षाभवितु मर्हति। एतदेव विचार्य स्वकीयस्य देशस्य स्वातन्त्र्यसंग्रामेतिहास: संस्कृतभाषायां निहितोऽस्त्यत्र ग्रन्थे। व्यवहारे प्रचारे च सरला भाषा प्रयोक्तव्येतिमम विचार-स्तस्मात् कारणादिह सरला भाषा गृहीतास्ति आशासे, देशानुरागिणो मनीषिणो विद्यार्थिनश्चास्य ग्रन्थस्यैतद्विधत्वं नावमंस्यन्ते।

अत्र याश्च बहुला बहुविधाश्चाशुद्धय: सन्ति, संस्कृत-जगती कृपया ता: क्षंस्यते इति विश्वसिमि।

ग्रन्थस्यास्य मुद्रणादिककार्याणि 'देववाणी प्रिण्टर्स' संज्ञकेन मुद्रणालयेन कृतानि सन्ति किञ्च प्रकाशनं देववाणी परिषदा कृतमस्त्यतो मुद्रणालयाधीशं श्रीनरेशचन्द्रम्प्रति किञ्च देववाणी-परिषदं तन्महासचिवं श्रीडॉ०रमाकान्त-शुक्लं च प्रति सादरमहं भूयो भूयो धन्यवादानभिव्यनज्मि।

केन्द्रीयशिक्षा-संस्कृति मन्त्रालयेन प्रतिशतं षष्टि रूप्य-काणि आर्थिकसाहाय्यत्वेन ग्रन्थस्यास्य मुद्रापणादिनिमि-त्तेन प्रदत्तानि सन्त्यतोऽयं रमेशचन्द्र: शुक्ल: सादरं तदर्थं नत-

निटिलो भवन् कृतज्ञताञ्जलिमर्पयति धन्यवादपूर्वकम् ।

**प्रमाणसिद्धान्तविरुद्धमत्र**
**चेत्किञ्चिदुक्तं मतिमान्द्यदोषात्**
**मात्सर्यमुत्सार्य तदार्यचित्ताः**
**कृपालवस्तत् कृपया मृजन्तु ॥**

विदुषां विधेय :—

ए-१/२०३, जनकपुरी,
नई दिल्ली-११००५८

**रमेशचन्द्रशुक्लः**

श्रीः

# भारत-स्वातन्त्र्य-संग्रामेतिहासः

## प्रथमः परिच्छेदः

श्रीगणेशमहं वन्दे विघ्नोत्सादनकारणम् ।
सर्वान्तरायहरं देवं करुणाब्धिशिवात्मजम् ॥१॥

विश्वस्य बीजं मुनियोगिचित्ते
प्रत्यक्षरूपेण प्रकाशमानम् ।
प्रभुं निरालम्बसमाधिवेद्यं
कृपामयं तं शरणं नमामि ॥२॥

तद् भारतं भारतमादरेण
वन्दे महर्षिप्रियजन्मभूमिम् ।
भवत् स्वतन्त्रं जगतीह भाति
यत् साम्प्रतं गान्धिमहात्मयत्नैः ॥३॥

स्वातन्त्र्यलब्ध्यै निजजीवनं ये
संग्रामभूम्यां समुदं व्यमुञ्चन् ।
तान् देशभक्तान् प्रणमामि सर्वान्
राष्ट्रार्चनापावनचारुचित्तान् ॥४॥

आचारसाधुप्रथितोज्ज्वलस्य
गायाम्यतीतप्रियभारतस्य ।
राष्ट्रानुरागोद्भवकारि रम्यं
स्वातन्त्र्यसंग्रामपवित्रवृत्तम् ॥५॥

यदा हि कोऽपि देशः केनापि देशेन परतन्त्रः क्रियते तदा परतन्त्रतापत्तिपातनकारी देशः स्वकीयवशंगततां नीतस्य देशस्य सर्वस्वमप्यपहर्तुं सर्वविधतया प्रयतमानः सञ्जायते । स तदीयां भाषां सभ्यतां कलाकौशलादिकञ्च

हिनस्ति । स तस्य सम्पदं-धनम्-अनेकानीतिमार्गेणापहृत्य स्वकीयं देशं नयति । भारतं न केवलं चिरन्तनात् कालादाध्यात्मिकतायां विश्रुतं परं तत् प्रभूतार्थवत्तायामपि सुविदितमासीदतो भारते भूमण्डलस्य सर्वेऽपि देशाः स्वां दृष्टिं निदधतः समलक्ष्यन्त। देशान्तराणि प्रति देशस्यास्मदीयस्य भारतस्य नानाविधानि भूयिष्ठानि कलाकलितानि वसनाभरणपात्रादीनि प्रेषितान्यजायन्त; अतोऽस्मद्देशभारतस्यैकैको गेहो धनधान्यसम्पन्नो भूत्वा भुवि विबभौ। यदा सिकन्दरमुहम्मदगौरीप्रभृतय इहाक्रमणं चक्रुस्तदा भारतं विपुलवैभवविलसितं सद् भृशं चकासाञ्चक्रे। मेगस्थनीज--फाह्यान--नीकोलो--डीकॉण्टी--कासरफ्रेडेरिक--सेवा--इशनमॉनरिक-मेण्डेरलीप्रभृतयोऽनेके वैदेशिका यात्रिण इहाययुस्तैः सर्वैरपि भारतस्यापरिमितप्रचुरधनधान्यवैभवसमृद्धिमत्त्वमभिहितम्; सुविदिताः डॉ०साईस-श्रीजेक्सन-श्रीहिरोडोटस-प्रो० डें-जर्मनपण्डितवोनबूलन-प्रो० वी० बॉल श्रीथार्नटन्स-प्रभृतीतिहासलेखकाश्च भारतस्य महासमृद्धिमत्त्वं स्वस्वेतिहासे सहर्षं लिखन्तो दृश्यन्ते। भारतस्यैषा समृद्धिशालितैव यवनानांग्लांश्चावर्जयाम्बभूव। यवनाः स्वकीयं शासनमधिष्ठाप्य स्वकीयेन क्रूरेण कुटिलेन च शासनेन तानि सर्वाण्यपि निन्द्यानि साधनानि प्रयुयुजुर्यैः कस्यापि देशस्य पतनं भवितुमर्हति। तच्छासनानन्तरमाङ्ग्लाः स्वकीयया छलवञ्चनाकपटकुटिलया नीत्या भारते स्वप्रभुत्वं स्थापयामासुः। ते व्यापारिणो भूत्वा नैजाधिकारस्थापनार्थमचेष्टन्त। स्वाभीप्सितसिद्ध्यर्थं त इह 'ईस्ट इण्डिया कम्पनी' इत्येतदाख्यां संस्थां स्थापितवन्तः। व्यापारव्याजमादाय ते वस्तुतः स्वशासनसंस्थापनोद्देश्येन तां कम्पनीं स्थापयाञ्चक्रुः। गच्छतानेहसा द्रागेव सा कम्पनी भारतस्य बहून् भागान् अधीनतायामानिनाय; शासिका च सा तत्र बभूव। तामवलम्ब्य यदा आंग्लाः सुदृढशक्तिजुषः सञ्जातास्तदा ते कम्पन्या अनुपयोगित्वं विमृश्य तामपसार्य स्वयं भारतस्य शासका अभूवन्।

इंग्लैण्डस्य सम्राज्ञी विक्टोरिया भारतस्य सम्राज्ञी बभूव। आंग्ला यवन-शासनं केन प्रकारेणोत्सादयामासुः कीदृशांश्च निन्दनीयानत्याचारान् विधाय यवनसाम्राज्यमुन्मूलयाञ्चक्रुरित्येषास्ति कथा परमकरुणापूर्णा।

भारतेतिहासे प्लासी-युद्धं स्वमहत्त्वं निदधाति। युद्धमिदं भारते सिताङ्गानां शासनस्याधारशिलेव समजायत। आंग्लरचितं तद् युद्धं कूटनीतिपरिपूर्णमासीत्। यथा कश्चिन्न्यायप्रियो वीरः स्वकीयेनाजेयेन शौर्य्येण विजयश्रियमश्नुते तथा नांग्लास्तत्र समरे विजयमलभन्त। ते तु तत्र कूटच्छलमाश्रित्यैव जयमवाप्तुमशकन्। आंग्लानां छलकपटादिपरिपूर्णकुत्सितनीतिपरत्वं तु तदैव स्फुटतया दृग्गोचरतां गतमासीद् यदा ईस्ट इण्डिया कम्पनीह शासिकासीत्। तस्याः कर्मचारिणः सर्वत्रैव प्रजासु कर्कशा अभूवन्। सर्वत्रैवोत्कोचा अत्याचारा विश्वासघाताः वञ्चनाश्च बहुविधाः स्वस्वमुखं विवृतीकृत्य सन्तिष्ठमानास्तदावालोक्यन्त।

भयङ्करे दुर्भिक्षे यदा सहस्रशो जना अन्नाप्राप्त्या प्राणानजुहवुः कम्पन्या अधिकारिणस्तस्यां दुःस्थित्यां निर्दयतया परमकठोरहृदया राक्षसा इव भवन्तो राजस्वं प्रजातो गृहीतवन्तः। हा हन्त! ते दीनहीनदरिद्राः स्वकीयानि स्थाल्यादिपात्राणि विक्रीय करं प्रायच्छन्। ऑबर *(Auber)* महोदयः स्वकीये 'ब्रिटिश पावर इन इण्डिया *(British Power in India)*' नामकेतिहासे कम्पनीकृतानत्याचारांस्तानुल्लिखन् प्राप्यते।

प्राचीने भारते लघुलघुतरगणतन्त्रराज्यानायः सुदृढतया सान्द्रतया च वितत आसीत्। प्रथमन्तु यवनानां शासनं तं समन्ताच्छेत्तुं प्रायतिष्ट; ततश्चांग्लानां शासनं तं समूलमुन्मूलयाम्बभूव। गणतन्त्रराज्यं पञ्चकप्रथां ग्राममण्डलस्य स्वरूपञ्च मेटकाफः सम्यगालिखन्नवेक्ष्यते; तल्लेखस्य सार इह लिख्यते :—

अधिभारतं ग्राममण्डलस्य लघुलघुतरलोकसत्तात्मकान्यभूवन् राज्यानि। तानि स्वापेक्षितव्ययानां पूर्त्यै स्वयमेव क्षमाण्यासन्। तदर्थं न तानि बभूवुः परावलम्बितानि। अत्यान्यव-

स्थानान्यनश्यन् परं तानि तु न। आक्रमणकारिण आगता गताश्च, परं ग्राममण्डलं यथापूर्वमवातिष्ठन्त। अरात्याक्रमणानेहसि कोऽपीदृग्ग्रामो नालक्ष्यत यो नासीद् विविधबहलशस्त्रास्त्रसुशोभितः। प्रबलैक्यबलाद ग्राममण्डलं बलीयो राज्यमिव समलक्ष्यत। अतएव तदनायासेन प्रत्यवायानचूचूर्णत्, स्वातन्त्र्यसुखञ्च विन्ददजीवत्। मण्डलमधिकृत्य सर चार्ल्स ट्रेवेलियनो लिखति :—

*One foreign conquerer after another has swept over India but the village municipalities have stuck to the soil like their own Kuśa grass* (बहवो वैदेशिका· विजेतार एकैकश आक्रमणं चक्रुः परमत्रत्यानां ग्रामाणां मण्डलं यथापूर्वं कुशो भुवमिव संश्लिष्यैव समवातिष्ठत)

ईस्ट इण्डिया कम्पन्याः शासनात् प्राक् सर्वाङ्गीणतया देशः समृद्धिश्रिया देदीप्यमानोऽवर्त्तत; परं तच्छासनं देशस्य धनं हृत्वा हृत्वा स्वदेशं धनवन्तं कर्तुमारभत। एतद्धि सत्यं 'ट्रेक्ट्स ऑफ इण्ड़िया', 'हिस्ट्री ऑफ बङ्गाल', 'हिस्ट्री ऑफ मराठाज़', 'दी फ्रेण्ड ऑफ़ इण्डिया' इत्येतदादिग्रन्थेभ्यो विदिततामुपैति।

कर्षकास्तच्छासनेऽनुदिनं क्षीणतामगुः। न तेषां वपुषि जीर्णमपि वसनं दृष्टमभवन्न च भोजनार्थं चणकचतुष्टयमपि। अविहा, दारिद्र्यपरिपूर्णायामपि दशायां कम्पनी तदुत्तरकाले चांग्लशासनं तेभ्योऽसमर्थेभ्यः कर्षकेभ्यो राजस्वं निर्दयतापूर्वकं ग्रहीतुमारभत।

आंग्लजातेः सुसभ्यत्वं सदाचारवत्वञ्च कियदित्येतत् श्रीकुक्स-एडम्सादिरचित 'लॉ आफ सिविलाइज़ेन एण्ड डिके-प्रभृतिग्रन्थेभ्यः, सम्यगवगतं जायते। श्रीहरवर्टकॉम्पटनः स्वग्रन्थे 'इण्डियन लाइफ़' नामके लिखतिः- ब्रिटिशसाम्राज्ये भारतीयः कृषीवल इव करुणोत्पादको नान्यः कोऽपि मनुष्यः *(There is no more pathetic figure in the British empire than Indian peasant.)*

आंग्लानां कुत्सितकुटिला नीतिर्देशं सर्वविधतया दरिद्रं

चकार। आग्लानां शासने भारतं धनहीनं कलावाणिज्योद्योगादिविहीनं बल-ज्ञान-विद्यारहितञ्च समजायत। स एव देशः स्वकीयां कलां, स्वकीयां विद्यां, स्वकीयं बलं, स्वकीयं धनं जनञ्च पातुं प्रभवति यो न भवति दरिद्रः। भारतं तु हा! आंग्लशासनेन नितरामेव दरिद्रतां नीतम्। श्रीहिण्डमेनः स्वकीये *'Bankruptcy of India'* नामकग्रन्थे लिखति यत् तस्याशयोऽयम्—

भारतस्य जना दिने दिने निर्धना निर्धनतरा निर्धनतमाश्च भवन्तः परिवीक्ष्यन्ते। करभारस्तेषामुपरि नितान्तदुःसहः। वैदेशिकं शासनं देशादस्माद् धनं प्रभूतं हृत्वा हृत्वा दरिद्रमिमं देशं कर्तुमारभत।

अस्ति जगत् परिवर्तनशीलम्। ध्वान्तानन्तरं प्रकाश आयाति। दुःखानन्तरं सुखं समुपैति। अस्त्ययमविचलो विश्वस्य नियमः। अतः परमप्रगाढान्धकारावृते भारते कानिचन ज्योतींषि उदितान्यभूवन्। तानि भारते नवजीवनस्फुलिङ्गानां ततिमुद्भावयाञ्चक्रुः। जनता तु चिरात् त्रस्ता विषण्णोद्विग्ना पीडितासीदेव। तानि ज्योतींषि तज्जीवने पुनः शक्तिं समचीचरन्। राजा राममोहनरायस्तेषु ज्योतिःषु प्रथमज्योतिरिह प्रादुर्बभूव। स तस्मिंस्तमसि प्रकाशं प्रसारयामास। स विश्वप्रेमोद्देश्यकं समग्रमानवजात्यैक्यपरकं सन्देशमुद्भावयंश्चकासाञ्चक्रे। स भारतीयायाः संस्कृतेर्भारतीयस्य च धर्मस्यात्मानमभिजज्ञौ। प्राच्याः प्रतीच्याश्च संस्कृतेः समन्वयं विधाय नवीनायाः संस्कृत्यारुद्भावनं तज्जीवनस्यासीत् प्रधानं लक्ष्यम्। स भारतीयसमाजे सर्वाङ्गीणमुदात्तमुत्क्रमणं द्रष्टुमचीकमत। एतं हि महान्तमुद्देशं साधयितुं स भारतौकसां धार्मिकाचारविचारेषु क्रान्तेः समुत्पादनमपेक्षाञ्चक्रे। अस्ति धर्मः समाजस्य हृदयम्। सामाजिकेषु व्यवहारेषु परिवृत्तिश्चेदपेक्ष्यते तदा प्रथमं तद्धृदयं परिवर्तनीयम्।

**राममोहनहृदुज्ज्वलराजा**
**भारतीयजनताहितलग्नः।**
**वर्तमानयुगमार्जनदक्षः**

**काङ्क्षति स्म परिवीक्षितुमाशु ॥**

**त्यक्तरूढिमलदूषितमार्गम्**
**उन्नतं चरितचारुपवित्रम् ।**
**आत्मबोधरतभौतिकविद्या–**
**कोविदं हि निजभारतराष्ट्रम् ॥**

ब्रह्मसमाजस्य संस्थापनां विधाय सः स्वकीयमभिमतं मूर्तं विदधौ ।

(क) **ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम् ॥**
(वाजसेनीयपनिषदि १)

(ख) **अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो वहिश्च ॥**
**(कठोपनिषदि, ५, ९)**

इत्येतदाद्युपनिषन्मन्त्रप्रतिपादितोपदेशं ब्रह्मसमाजः स्वसिद्धान्तत्वेन स्वीचक्रे । सन्त्युपनिषदो भारतीयायाः संस्कृतेः समुज्ज्वलतमानि रत्नानि । ताभिरध्यात्मदर्शनालोकेन मानवजातिम्प्रति ज्ञानपथः प्रदर्शितः । राजा राममोहनराय उपनिषदेशान् स्वजीवनस्याचारे परिणमयितुं सततमेवोद्युयुजे । समाजे प्रचलितामस्पृश्यतां मानवसमाजापकारिणीः कुरीतीर्विरोद्धुमसौ बलीयांसं प्रयत्नं व्यदधात् । अस्यस्पृश्यता दुर्धर्षो रोगः । स भारतीयं समाजमहर्निशं क्षिणोति । सा भारतप्रियविश्वत्वस्याध्वन्यस्ति महाशूकशिखेति तस्य विचार आसीत् । भारतीयं समाजं छेत्तुं भेत्तुञ्च, कर्तुञ्च निर्गतसारं व्यापृतं जातिभेदभावं पर्यवलोक्य तस्योपरि कठोरकुठारप्रहारमनुतस्थौ । सः स्त्रीजातिमप्युत्थापयितुं स्वरमुदनीनमत् । विधवाविवाहनारीसमानता-नारीशिक्षापरकमान्दोलनञ्च स आयूयुजत् ।

एकोनविंशे शतके स वस्तुतस्तं संघर्षमजीजनद् यो महन्नैतिकमाध्यात्मिकञ्च बलमशिश्रियत् । भारताधःपतनकारीणि कारणान्युत्सादयितुं स महान्तमेव श्लाघ्यं प्रयासं विदधौ, प्रातिष्ठिपच्च देशस्य पुरः समुज्ज्वलं यथार्थं धर्मम् ।

यस्मिन् काले राजा राममोहनराय उद्बभूव सः कालो

भारतार्थमासीत् तमसावृतः। मुगलसाम्राज्यस्यावसाने या अराजकता देशे प्रससार सा देशमजूणात्। कलहो द्वेष ईर्ष्या रोगिणं रोगा इव देशमक्षिण्वन्। जनानां राजनीतिकभावना विनाशं गता वा क्षीणतामुपेता परं तदानीमपि राजा राममोहनरायो जनताया अधिकारार्थं प्रायत्तिष्ट। ब्रिटिशविधानं तदन्तर्गता च भूत्वा विभासमाना नागरस्वतन्त्रता राममोहन राये प्रबलं प्रभावं चिक्षिपतुः। सोऽतो व्यष्टिपरकनागरस्वातन्त्र्यस्य कृतेऽयुध्यत।

राजा राममोहनरायो मानवीयायाः स्वाधीनतायाः पक्षे आसीत्; स तदर्थं भृशं प्रायतत। स विचारस्वातन्त्र्यं, मुद्रणस्वातन्त्र्यं, धर्म-स्वातन्त्र्यञ्चातितरां पर्यपूपुषत्। यथा धर्मे तस्य विश्वकल्याणभावनाः अशोभन्त तथैव तदीया राजनीत्यामपि विश्वकल्याणभावनाः शुशुभिरे। स जगत्यवितथां स्वाधीनतां स्थापयितुमियेष; तं समाजञ्च स जनयितुमचीकमत यत्र राष्ट्रं राष्ट्रान्तरं न शोषयेत्; परस्परं प्रेमपूर्वकं मिथः सर्व एव देशाः सहयोगकारिणो भूत्वा निवसेयुः।

राजा राममोहनरायः स्वाभीप्सितं साधयितुं शिक्षा-प्रचारमुपयुक्ततरं साधनमवागमत्। अतः कलिकातायां स हिन्दूकालेजस्थापने प्रमुखं भागं जग्राह। संस्थेयं कतिपयानीदृशान् प्रतिभापेशलांश्छात्रान् ससर्ज ये भारतमुद्बोधयितुं युगान्तरकारिणो विचारान् उद्बोधयन्। तेषु ताराचन्द्रचक्रवर्ति-दक्षिण निरञ्जनमुखोपाध्याय—रसिककृष्णमल्लिक—रामगोपालघोष—प्यारीचन्द्रमित्रादिकाः सन्त्युल्लेखनीयाः। तेषु यूरोपीयक्रान्तिकृद्विचारा महान्तं प्रभावमक्षिपन्। ते वङ्गजनतायां राजनीतिकभावनानामुन्मेषणे प्रबलं कार्यमकार्षुः। हिन्दूकालेजे प्राध्यापयितुर्हेनरीविवियनडेरोभियो इत्येतदाख्यस्य दिद्वद्वरेण्यस्य व्यक्तित्वं शिक्षणञ्च तेषु च्छात्रेषु वस्तुतो भृशं प्रभावं चिक्षिपतुः। आसीद् डेरोभियो तत्त्वज्ञानी प्रतिभाशाली उत्साहवान् दिव्यः कविः। आसीच्च स महाँल्लेखकः। तत्तत्पत्रेषु प्रकाशितास्तदीया राजनीतिकविचारविभाविता वैदुष्यविभूषिता लेखाश्छात्रान् नितरामावर्जयामासुः। अतस्ते

तं श्रद्धया सततमपश्यन्। ते तं बङ्गनिर्माणकर्तृष्वन्यतम-ममंसत।

प्यारीचन्द्रमित्रेण स्वग्रन्थे '*Life of David Hare*' इत्येतदाख्ये तमधिकृत्य यदलिख्यत संक्षिप्ततया तदिह निधीयते :—

'विद्यार्थिनः स्वयमेव विचारेषु प्रवर्तेरन्निति डेरोजियो छात्रान् स्वकीयान् निर्दिदेश। सत्यनिमित्तेन ते जीवेयुर्म्रियेरंश्चेति तान् स उपदिदेश। सर्वविधान् सद्गुणान् आत्मन्युद्भावयितुं दोषेभ्यश्च दूरीभवितुं स तानचकथत्। प्राचीनेतिहासग्रन्थेभ्यो न्यायप्रेमस्वदेशभक्तिरसेवात्मत्यागप्रभृत्युदाहरणानि गृहीत्वा स तान् सत्यस्य यात्रिणो भवितुमन्वरोत्सीत्। तस्य शिक्षया वस्तुतश्छात्राणां हृदयानि तस्मिन्ननमन्। ते प्राप्तगम्भीरप्रभावा अजायन्त। उत्साहवन्तो भूत्वा छात्राः स्वविचारानभिव्यक्तीकर्तुं पत्राण्यनेकानि प्रकाशयाञ्चक्रुः। तेषु पत्रेषु "हिन्दूपायोनियर–" "बंगालस्पेक्टेटर–" "ज्ञानान्वेषण–" "पार्थेनन" नामकपत्राणि सन्त्यतितरामुल्लेखनीयानि। लेखेषु राजनीतिकदेशानुराग-भारतीय-संस्कृति-समाजाभ्युत्थानपरा उज्ज्वलोज्ज्वलतरा उदात्तोदात्ततरा भावा अवतेरुः। एतेन सिद्ध्यति यत् १८५७ तमेशवीयाब्दात् प्रागेव भारते स्वाधीनतानुरागविषयका भावाः प्रगाढा भवन्तो नवयुवमानससरोवरे उत्तरलाः समजायन्त'।

**निन्दार्हमस्ति भरतावनिमानवानां**
**शोच्यञ्च जीवनमिदं नितरां समेषाम्।**
**यत् साम्प्रतं श्वसिति दारुणपारतन्त्र्ये**
**एतद् भृशं हि हृदयं विचचार यूनाम्॥**

राजनीतिकीं सामाजिकीञ्च स्थितिं परिमार्ष्टुं संस्कर्तुमवदातीकर्तुञ्च युवानः संगठिता भूत्वा समजागरुः। ते तदर्थं दृढीयसीं संस्थाञ्चायूयुजन्। स्वदेशभक्त्युद्भावनं लोकोद्बोधनञ्च तदीयमुद्देश्यं बभूव। अष्टत्रिंशदधिकाष्टादशशततमेशवीयाब्दे श्रीतारिणीचरणवन्द्योपाध्याय-रामगोपालघोष-रामतनुलाहिरी-ताराचन्द्रचक्रवर्ति-राजकृष्णाश्च संयुक्ता भूत्वा

साधारणज्ञानार्जनसमितिसंज्ञकायोजनेन देशस्य यथार्थां स्थिति-मवगन्तुमुपयोगिज्ञानं प्रसारयितुं जने जने ऐक्यबलं जनयितुं भारतमातृभुवः सेवायाः पावनं भावं समुत्पादयितुञ्च कठोरं श्रमं कर्तुमारेभिरे ।

द्विचत्वारिंशदधिकाष्टादशशततमेशवीयवर्षे आगामिनि च सम्वत्सरे हिन्दूकालेजस्य च्छात्रस्ताराचन्द्रश्चक्रवर्ती 'क्वील' *(The Quil)* पत्रं प्रकाशयितुं सम्पादयितुञ्चोपचक्रमे । बभूव तत् पत्रमुग्रराजनीतिकविचारसमुल्लसितम् । 'हिन्दू-पायोनियर'ञ्च पत्रं छात्राणामुद्योगेन प्रचचाल । स्वाधिकाराणां ज्ञानं कारयितुं, दातुञ्च शासनविज्ञानविषयिणीं शिक्षां[1] तत्पत्रं प्रकाशितमक्रियत ।

न यूनां प्रवृत्तयस्तावत्येव क्षेत्रे विदधुरात्मबलं सीमितम् । ता मानवीयसमानतापरकमूतनतामयसिद्धान्तानां प्रचारणेऽपि स्वशक्तिं प्रायूयुजन् । उच्चपदेष्वांग्लानामेकाधिकारं युवानो विरुरुधुः । शासनसत्ताया अयोग्यत्वे सति न्यायशासनं प्रविष्ट-भ्रष्टाचारं भवेत्; तथात्वेन जनानां नैतिका गुणाः पतेयुरित्यें-षस्तेषां विश्वास आसीत् । अतस्तस्य शुद्धत्वं निर्लिप्तत्वञ्च तेऽङ्गीकमन्त ।[2]

हिन्दूकालेजस्य स्नातको रसिककृष्णमल्लिकश्च स्वकीयान् राजनीतिकान् विचारान् निर्भीकतापूर्वकमभिव्याञ्जीत् । गुणगुणत्रयुसोमवत्सरेशवीयें ज्ञानान्वेषणाख्ये मासिकपत्रे लिलेख सः—"शासनेन हि निरपेक्षेण शुद्धेन च भवितव्यम् । परमेतत् तदैव सम्भवं यदा शासितहिताचरणं शासितस्य कल्याणानां रक्षणं सर्वकारस्य स्यादुद्देश्यम् । परं भारते नेयं स्थितिरीक्ष्यते । तादृशां स्थितिमुत्पादयितुं प्रयतितव्यम् । ब्रिटिशभारते यादृशं शासनं वीक्ष्यते तदस्ति न्याय्यसिद्धान्त-विपरीतम् । भारते ये जनाः शास्तारः सन्ति ते स्वार्थमतयो भवन्तः कार्यमाचरन्ति । तस्मात्कारणाच्छासनमन्यायलिप्त-मवाप्यते । शासनस्थिता जना द्रव्यार्जनभावनावशंगता भूत्वा

1. *Calcutta Quarterly Magazine and Review 1833.*
2. *India Gazette, 12-4-1833.*

कार्यं विदधति न तदीयं कार्यमीदृशमेकमपि यत्र न स्यात् स्वार्थोद्दामभावना। यावद् वर्तमानशासनपद्धतिः सन्तिष्ठते तावन्मार्जनस्य पावनतायाश्च समुद्भवो नो भवितुमर्हति।'' इत्येतं मल्लिकः स्वविचारं प्रदर्शयन् ईस्ट-इण्डिया-कम्पन्याः शासनं संवरीतुमुच्चैः स्वरमुत्थापयमास।

धृतदेशहितैकव्रताः प्रगतिशीलराष्ट्रियसामाजिकभावनाविभाविताः स्त्रीशिक्षापक्षपातिनस्तरुणास्तदानीन्तना अनेके 'स्वतन्त्रता', 'वैदेशिकानामधीनतायां भारतम्', 'इदमाङ्गलशासनं पूर्णतयाभिजाततन्त्रीयम्' इत्येतदादिकान् विषयानवलम्ब्य पत्रेष्वोजस्विन्यां भाषायां जनमात्रहृदयस्पर्शकारिण्या रीत्या प्रबलोत्साहप्रचण्डसाहससमुत्पादनदक्षेण प्रकारेण लेखान् प्रकाशयाञ्चक्रुस्तानधीत्य संश्रुत्य च जना अजागरुः।

'हिन्दूपयोनियर' पत्रेणैकदा स्वविचारा इत्थं प्रकटीकृताः- ''शासनतन्त्रे नास्ति जनानां कोऽपि स्वरः। देशविधिनिर्बन्धने न तेषां हस्तः। शासनस्योच्चोच्चतरपदेषु गौराणामेवाधिकारः। शासनस्य व्ययो गुरुतरः। एतादृशीमसहनीयां स्थितिं विरोद्धुं बलीयस आन्दोलनस्य प्रवर्तनं राष्ट्रभक्तस्यास्त्येकैकस्य धर्मः। भयभेदहिंसात्मकैरुपायैर्वैदेशिकैर्देशेऽस्मिन् स्वीयमाधिपत्यं संस्थापितमस्ति। ते जनतामवजानन्तो देशे शासति। ईदृशीं स्थितिं कोऽपि स्वाभिमानी राष्ट्रभक्तः सोढुं न शक्नुते। शासने भागग्रहणादेव जनता न विप्रलब्धा, सा महत्त्वपूर्णपदेभ्योऽपि च्युतीकृतास्ति। सर्वत्रैवांग्लानामेकाधिकारो वर्तते।[1]

एतेन वर्णनेन ज्ञायते यत् सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दे प्रवृत्ताद् भारतीयस्वातन्त्र्यायोधनात् प्रागपि जनजागरणार्थं युवानो बलवत्तरमुद्योगमकार्षुः।

भारतस्य हिते आंग्लशासनं स्वां दृष्टिं नो निदधाति; तत्र तस्य मनागपि ध्यानं न वर्तते। तत्तु भारतादनुदिनमर्थमाकृष्य स्वराष्ट्रमिङ्गलेण्डमेव समृद्धं विधातुं सततं चिन्तय-

1. *Hindu Pioneer Quoted in the Asiatic Journal of May August: 1888.*

तीति सम्प्रेक्ष्य ये भारतीयाः भारतदेशभक्ताः शासनस्य ध्यानमावर्जयितुमयतिषत तेषु द्वित्रीणां संस्तव इह निधीयते।

**रसिककृष्णमलिकः**

मल्लिको हिन्दूकालेस्य विद्यार्थिषु प्रबुद्धः प्रतिभावांश्छात्र आसीत्। स युवसमाजे भृशादृतो भूत्वा प्रादीप्यत। तमनेके तु स्वगुरुमिव मेनिरे। स 'ज्ञानान्वेषण' पत्रस्य सम्पादक आसीत्। सः स्वकीयान् राजनीतिकविचारान् निर्भीकतापूर्वकमभिव्यानक्।

"तस्याः प्रजायाः नैतिकं पतनमवश्यं भवति यां तत्छासनं शास्ति यदयोग्यं भ्रष्टाचारपूर्णमक्षमञ्च भवति। न्यायस्य मूलस्रोतसो मलिनत्वे, तत्र समाजो न नैतिकदृष्ट्या न च भौतिकदृष्ट्या परिपोषमाप्तुमवसरं लभते। भ्रष्टन्यायपद्धतेः सद्भावाद् धनवन्तः स्वकीयान्यायान्वितेष्वपि कुकृत्येषु सफलतामधिगच्छन्ति। परं निर्धना वराकास्तत्र निपीड्यन्ते। अस्ति सर्वकारस्य प्रथमं कर्त्तव्यमिदं यदसौ निष्पक्षविशुद्धन्यायप्रणालीं व्यवस्थापयेत्। परमेतादृशीं व्यवस्थां तदेव शासनं कर्तुं शक्नोति यदात्मानं लोककल्याणभावनासु रमयति। दुर्नियतिवशान्नाधिभारतमीदृशी स्थितिः प्रेक्ष्यते।

ब्रिटिशभारतन्यायशासनमिदं वर्तमानं शासनविज्ञानापेक्षिणो न्याय्यान् सिद्धान्तान् विरुणद्धि। व्यापरकारिणां मण्डलं शासकत्वेनास्माकमुपरि निपतितमस्ति। व्यापाररतायाः स्वार्थमग्नाया मनोवृत्तेर्हेतोस्तद्विधं शास्तृमण्डलमीदृशान् विधीन् नियमांश्च कथं घटयितुमिच्छेद् यैरस्मदीयानां स्वत्वानां रक्षणं भवितुमर्हेत्।

प्रचलितान्यायव्यवस्थेयं सर्वथैव स्वार्थभावनया प्रेर्यमाणास्ति। दोषमेतं कम्पन्याः राजनीतिकाधिकारा निराक्रियेरन्। यावदाधुनिकपद्धतिपरकं शासनं जीवेन्न दोषा निरस्ताः स्युः।[1]"

इत्येतदादिविचारान् स ज्ञानान्वेषणपत्रे सम्पादकीयले-

1. *Gyananveana quoted in the India Gozette of 8.4.1833.*

खेऽवातारयत्। राजा राममोहनराय इव मल्लिकोऽपि शासन-सम्बन्धिन्याः भृतेर्भारतीयकरणगतत्वमिष्टममनुत। शासन-प्रबन्धे भारतीयानां सहयोग इष्यते; लघुगुरुपदेषु च भूयसां भारतीयानां नियुक्तिराकाङ्क्ष्यते—इति सोऽचकथत्। एतावदेव न, सः शिक्षाप्रचारणायाप्युदात्तस्वरमुदतिष्ठिपत्।

यावज्जनता न भवति सुशिक्षिता सर्वकारस्य न किमपि शासनतन्त्रं सफलं भवितुं शक्नोति। अतः सर्वकारः शिक्षां प्रसारयितुं प्रयतेत; स्वकीयस्य चायस्य भूयांसमंशं जनानां बौद्धिकविकासनिमित्तेनोपयुञ्जीत। एतत्कार्यस्य सिद्ध्यर्थं-ज्ञानं प्रचारयितुं— सत्पुस्तकानि प्रकाश्य तानि विना मूल्यं किं वाल्प-मूल्येन शासनं प्रददीत। ज्ञानप्रचार एव जनचरित्रं मार्ष्टु-मुत्थापयितुञ्चोत्तमं साधनम्।

सः कर्षकाणामधिकाराय च भृशं लिलेख। तन्निमित्तेन च सर्वकारमनूनुदत्। कृषीवलस्वत्वमधिकृत्य लिखन् स भूमिधरक्रियमाणाचारानपि व्यवृणोत्। बङ्गेषु स्थायिनीं व्यवस्थामुद्दिश्यासावलिखत्:—स्थायिनी व्यवस्था कामं सदुद्देश्येन कृता स्यात् परं तत्र दोषाः सन्तिष्ठमाना एव प्राप्यन्ते। तस्माद्धेतोर्निर्धनवर्गस्याधिकारा कृत्स्नतयोपेक्ष्यन्ते।

वस्तुतः १८५७ तमेशवीयाब्दवर्तिविद्रोहाच्चिरप्राग् ये युवानो भारतहिताय प्रायतिषत तेषु रसिककृष्णमल्लिकोऽन्यतमः।

**ताराचन्द्रश्चक्रवर्ती**

चक्रवर्ती तत्कालवर्तिनां नवतरुणानां सर्वमान्यो नेतासीत्। इंगलिशमेनादिपत्रैरपि तस्य सा मान्यतादृतासीत्। श्रीशिवनाथशास्त्रिणा श्रीरामतनुलाहिडीमहाभागस्य जीवन-चरित्रे सः चक्रवर्ती स्वतन्त्रतायाः उपासक आसीदिति मुदोप-श्लोकितोऽस्ति। ब्रिटिशइण्डियासोसायटीसंस्थायाः प्रधानेन जॉर्जथॉमसनेन स्वाध्यक्षीयभाषणे तत्स्फूर्तिप्रद उत्साह उपकारभावना विशुद्धं चरित्रञ्च तदीयं मुहुः प्रशंसितम्।

ताराचन्द्रचक्रवर्ती महान् राजनीतिकान्दोलनकर्तासीत्। विद्वानपि स महानासीत्। स मनुस्मृतिमांग्लभाषायामनूदितवान्। आंग्ल-बङ्ग-भाषयोश्च कोषं व्यररचत्। इतिहासानु-

सन्धातापि स आसीत्। ऐतिहासिकान्वेषणे स तदानीं कार्यमपि चक्रे। 'बंगालस्पेक्टेटर'-पत्रे सः सम्पादकीयानां लेखानां लेखकोऽप्यासीत्।

प्रगतिशीलेषु राजनीतिकेषु विचारेषु स रुचिं निदधौ। १८४२ तमेशवीयाब्दे सितम्बरमासेऽसौ बङ्गालस्पेक्टेटरे लिलेख-······नागराणां जीवनं यथा समुन्नतं श्रेष्टजीवनयापनयोग्यं भवेत् तथा सर्वकारेण प्रयत्नः करणीयः। सर्वकारस्य तत् श्रेष्ठं कर्त्तव्यमस्ति। येऽधिकारिणो लक्षशो जनानां शासनस्य भारं निदधति; ते चेद् राजस्वस्य संग्रहणं केवलं स्वकर्त्तव्यं मन्यन्ते ते प्रजानां कृते स्वकर्त्तव्यस्य पालनं कथं कर्तुमर्हन्ति? सर्वकारस्य त्वयं धर्मो यत् स विकासोन्मुखतारुण्येषु जनेषु नितरामुपकारिणीं शिक्षां वितनुयात्। प्रजाः प्रति स्वकर्तव्यमिदं पालयन् यदि सः स्वव्यापारोद्योगसञ्चालने रतो भवति तदा तदुचितम्।

जनाः स्वाधिकाराणां रक्षणाय स्वसुखसमृद्धीनाञ्चोत्थापनाय शासनम्प्रति स्वसत्तां समर्पयन्ति अतस्तस्येदं कर्त्तव्यं भवति यद् येषु जनेषु यस्मिन् देशे वा शासनं क्रियते; तेषां जनानां वा तस्य देशस्य सर्वाङ्गीणाभ्युत्थानाय तदुचितां व्यवस्थां कुर्वीत; शिक्षां तत्र तद् वितन्वीत; शिक्षायाः सैद्धान्तिकत्वमेव नेष्टमपि तु तस्या औद्योगिकत्वमप्यभीष्टम्।

हिन्दूकालेजस्य च्छात्रास्त्रिचत्वारिंशदधिकाष्टादशशततमेशवीयाब्दे कलिकातायां सभामेकामायूयुजंस्तत्र सर्वकारीयाया भृतेर्भारतीयकरणत्वनिमित्तेन भाषणान्यनेकान्यभूवन्; श्रीताराचन्द्रस्तेषामस्मिन्नुपक्रमणे प्रमुखं भागमगृह्णात्। स "ईस्ट इण्डिया कम्पनी यदि न शृणुयात् प्रकृतं विषयं तदा सम्राजः सर्वोच्चन्यायालयस्य पुरोऽयं विषयो निहितः स्या" दित्येतद् ओजस्विन्यां भाषायामाचष्ट।

**दक्षिणरञ्जनमुखोपाध्यायः**

त्रिंशदधिकाष्टादशशततमेशवीयाब्दात् सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दपर्यन्तं बङ्गसार्वजनिकजीवनमथ च षष्ट्यधिकाष्टादशशततमेशवीयसम्वत्सरतश्चतुस्सप्तत्यधि-

काष्टाशशततमेशतीयाब्दं यावदवधवासिनां जनानां सेवायै स्वजीवनमर्पयाम्बभूव दक्षिणारञ्जनमुखोपाध्याय इत्येतच्छ्रीमन्मन्मथनाथस्तस्य जीवनचरित्रं निबध्नन्नादरपूर्वकमुपावीणयत्। तज्जीवनचरित्रं गायता परं तेन तदीयविचाराणां राजनीतिविषयकाणां प्रकाशने न स्वाभिरुचिर्दर्शिता अतएव 'बङ्गालहरुकारु' पत्रे तस्य यानि व्याख्यानानि प्रकाशितान्यजायन्त तेषु कानिचनेवाधारीकृत्य तद्विचारा दिङ्मात्रेण प्रदर्श्यन्ते।

दक्षिणारञ्जनो मानवस्वाधीनतायाः सिद्धान्तानुपासाञ्चक्रे। एकस्मिँल्लेखे स लिलेख-"न्यायप्रियेण परमेश्वरेण सर्वे मानवास्तज्जन्माधिकारदृष्टया समाना एव समुत्पादिताः सन्ति। भारते जना नैसर्गिकीं समानतां पूर्णाञ्च स्वतन्त्रतां पुरा निदधुः। यदा तत्र विकृतिरुदपद्यत तदा भारतस्य पतनारम्भः समजायत। तत्पतनस्य मूले कारणभूता बभूवुर्ब्राह्मणप्रमुखाः। ब्राह्मणा भारतीयं समाजं नानावर्गेषु विभक्तमकार्षुः। अखण्डे च समाजे साम्प्रदायिकतां वितेनुस्ते। सत्साहसमाश्रित्य भारतीया राष्ट्रियात् समाजादेतं दोषं दूरीकुर्युः। क्षयरुजेव स भारतस्य सामाजिकं जीवनं हिनस्ति।

दक्षिणारञ्जनो भारतीयसमानतां लक्ष्यीकृत्य देशपतनस्य च कारणानि शरव्योकृत्य यान् विचारानभिव्याञ्जीत् ते सर्वत्र कम्पनमुदपीपदन्। इङ्गलेण्डस्य सुविश्रुतो ग्रन्थकारो विचारकश्च हेनरीथॉमसबकले स्वकीये 'हिस्ट्री ऑफ सिविलाइजेशन' ग्रन्थे तस्य तान् विचारानाद्रियते स्म। बङ्किमचन्द्रश्च तान् विचारांस्तदीयान् स्वीकुरुते स्म।

दक्षिणरञ्जनः पराधीनतां महाशापमिव मेने। 'वैदेशिकाः पारतन्त्र्ये निपातिते देशे न कदापि सद्भावनां निदधति। ते तं शासतस्तस्य सर्वमपि धनबलादिकं हृत्वा हृत्वा तं क्षिण्वन्ति। सुवर्णलोभवशात् ते राष्ट्रं दासत्वशृङ्खलया निबध्नन्ति। भारतस्य निर्धनतायां कारणमस्ति देशान्तरीयजनानां शासनम्। अस्मद्देशस्य साधनसम्पदो विपुला महीयस्यो महत्यश्च। ता देशस्य सनस्तानामावश्यकतानां पूर्त्यै

पर्याप्ताः । केवलमिह स्वातन्त्र्यमपेक्ष्यते ।

अस्मिञ्छासने न्यायाधिकरणेषूत्कोच उच्चैर्विततो वर्तते । एकैकः स्वस्थान-पद-महत्त्वानुसारेण परिगृह्णात्युत्कोचम् ।

दोषाणां विकृतीनाञ्चोत्सादनाय शासनभृतीनां भारतीयकरणं, जनमत-संगठनञ्चापेक्ष्यते । अपेक्ष्यते च शिक्षायाः प्रसारो येन जनता स्वाधिकारानवगच्छेत् ।

त्रिचत्वारिंशदधिकाष्टादशशततमेशवीयाब्दे, सितम्बर, मासे द्वितीयस्मिन् दिनाङ्के प्रकाशं गते 'बङ्गालहरकारु' पत्रे स ओजस्विशब्देष्विमं विचारमभिव्यनक्ति स्मः—"अपि किमिदं नोचितं न्यायोपेतञ्च ये जना एतस्मिन् देशे भारते समुत्पन्नाः; अत्र पोषणं प्राप्तवन्तोऽत्र च शिक्षामगृह्णन्; इमं देशं विदन्ति च ते. उच्चवेतनवत्सु उत्तरदायित्वपूर्णेषु पदेषु स्युरासीना येषु देशान्तरीयाः (आंग्लाः) स्वैकाधिकारं कृत्वा निषीदन्ति ।" अग्रे चासौ तत्र लिलेख—

"भ्रष्टाचारस्योत्कोचस्य च निवारणाय तयोर्विरोधनाय जनमतबलं संग्राह्यमस्ति । इदं तावत् सम्भवं नाभविष्यद् यावज्जनास्तत्परमनिन्दनीयदोषयोर्भेदनं नाकरिष्यन् । इङ्गलेण्डस्य न्यायप्रणाल्याः विशुद्धत्वे कारणमस्ति लोकमतम् । जनमते सति बलवति कुत्सितेयं स्थितिर्निराकृता भवितुं शक्यास्ति न च सर्वकारोद्योगेन । चेज्जनाः सत्यं, न्यायं, प्रामाणिकताञ्चावरिष्यंस्तदा न कदाचरणानि स्थातुमशक्ष्यन् । गरीयोगरिष्ठमपि वा शासनं लोकमतसंश्रयणमन्तरेणासदाचरणानां विनाशने न समर्थं सञ्जायते ।

दक्षिणरञ्जनो लोकप्रतिनिधिव्यवस्थापिकासभाया विधानं प्रादीदृशत् प्रस्तावञ्च तत्र तदा स इमं न्यदधात्—"प्रतिप्रदेशं लोकप्रतिनिधिपरिषद्भिर्भाव्यं, तत्र च सर्वकारमनोनीताः प्रजानिर्वाचिताश्च सदस्याः स्युः । ते प्रतिनिधयः प्रतिमण्डलगतनिर्वाचकैर्विचेयाः भवेयुः । सर्वोच्चपरिषच्च (*Supreme Council*) स्थापनीया ।"

सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दोद्भूतविद्रो-

हात् प्रागेव दक्षिणारञ्जन ईदृशानि तत्त्वानि प्रकाशयाञ्चकार यानीदानीमपि बह्वंशतोऽनुकरणीयानि सन्ति ।

**अक्षयकुमारदत्तः**

अक्षयकुमारदत्तो दार्शनिको महान् विचारक उग्रराजनीतिविन्नेता बभूव । स हून् ग्रन्थानजग्रन्थत् तेष्वनेके हिन्द्यामप्यनूदिताः सन्ति । राज्ञो राममोहनरायस्य विचारस्तस्मिन्नपप्तत् । न स तस्य सान्निध्यमाप्तुमशकत् परं राममोहनरायस्य दार्शनिकसिद्धान्तानध्येतुमवश्यमनेहसमाश्नुत । स ग्रहगुणवसुविधुसम्वत्सरेशवीये महर्षिदेवेन्द्रनाथटैगौरस्य सन्निधिमगात् । तत्त्वबोधिनीसभाया बभूव च सदस्यः । स भारतोपासकसम्प्रदायाभिधस्य द्वियोयस्मिन् भागे राज्ञो राममोहनरायस्य महतीं देशसेवां भृशं प्रशशंस । तेन तत्रोक्तं राममोहनरायो राजैव न, स देशहृदयसम्राडपि समवर्तत । इदञ्च तेनाभिहितं यच्छास्त्राणां वैज्ञानिकाध्ययनपरकं प्रेम राज्ञो राममोहनरायादेवावगतीकृतम् ।

१८४३ तमेशवीयाब्दतः १८५५ तमेशवीयाब्दपर्यन्तं तत्त्वबोधिनीं पत्रिकामतियोग्यतापूर्वकमक्षयकुमारदत्तः सम्पादयन् सञ्चालयाञ्चकार । तस्यां पत्रिकायां भारतराष्ट्रोत्थानार्थं निर्धनकृषीवलानाञ्च स्थितेः समुन्नयनार्थं सः प्रभावशालिन्या रीत्या विचारानाकलयाञ्चकार । हिन्दूसमाजञ्च नवीनतया घटयितुं सोऽनेकान् लेखानलिखद् । पाश्चात्यसंस्कृतिसम्मेलनमायोजयितुञ्च सोऽचकमत ।

महामहोपाध्यायेन हरप्रसादशास्त्रिणा 'भारतीयोपासकसम्प्रदायाख्य'स्य ग्रन्थस्य द्वितीयखण्डे भूमिकायां लिखितमेतत्- "अक्षयकुमारदत्तः प्रथमो लेखक आसीद् यो बङ्गयूनां कृते पाश्चात्यदृष्टिकोणं मनोवृत्तिञ्च प्रतीच्यानामवगमयामास । स नवबङ्गप्रदेशस्य प्रथमो नैतिक आचार्य आसीत्" ।

अक्षयकुमारदत्त एरिस्टॉटल-बेकनलॉक-काण्ट-लाप्लेस-मनथसकृतान् ग्रन्थान् गम्भीरतयाध्यगीष्ट । तेन रचितेषु ग्रन्थेषु निर्दिष्टप्रतीच्यग्रन्थानां प्रभावः स्फुटतया प्रतिलक्ष्यते । शिक्षायां शासनविषये च दत्तस्य विचारा ग्रीकदार्शनिकविचार-

प्रभावेण समुद्ग्रथिताः सन्ति ।

शासनसत्तामधिकृत्य दत्तस्य विचारेषु प्रौढत्वं विराजते । स धर्मनीतिनामधेये ग्रन्थे लिखति—"सर्वकारिता जनानां प्रतिनिधित्वाय कल्पते । जनेभ्यः कर ग्रहणाय शासनं न पैत्रिकमधिकारं निधत्ते । जनाः स्वकीयामचलसम्पदि स्वकीये च जीवने नैसर्गिकमधिकारं निदधते शासनं जनताया जीवनं धनं प्रतिष्ठाञ्च पातुं करमादातुं प्रभवति । ब्रिटिशशासनं स्वप्रजां प्रति स्वकर्त्तव्यं पालयन्न् संलक्ष्यते: प्रजाया दीनहीना दशात्र प्रत्यक्षं प्रमाणम् । शासनस्य कर्त्तव्यानि कार्याणि सन्ति प्रभूत विस्तृतविविधक्षेत्रव्यापीनीत्यक्षयकुमारो मन्यते स्म । जनजीवनधनादिरक्षणं जनभौतिकप्रगतेः संत्राणञ्च प्रति शासनं केवल मुत्तरदायि न, अपितु जनानां दैहिक-नैतिकाध्यात्मिकाभ्युदयस्याप्युत्तरदायित्वं तस्य कर्त्तव्यक्षेत्रे सन्निविष्टं भवति । तेषां सर्वेषामपि साधनानां समुचितां व्यवस्थां शासनं कुर्वीत येभ्यो जनाः स्वजीवनं स्वस्थं नीरोगं सुशिक्षितं सुखितं समृद्धिसुसेवितञ्च कर्तुं साहाय्यं लभन्ते । एतत् सर्वमपि कार्यं तत् सम्यगवहिततया विदधीत । कुर्याच्च तत् प्रजाः भौतिकमानसिकज्ञानविज्ञानालङ्कृताः ।

ब्रिटिशशासने भारतौकसां दैहिक्या मानसिक्याश्च स्थितेर्भृशं निपातनं संवृतमिति दत्तो वदति स्म । ग्रामाणा जनता निर्धना कृतास्ति, सा येनकेन प्रकारेण जीवनं नयति । अस्त्येतद् ब्रिटिशशासनस्य कृते निन्दाकारकम् । तदस्ति तनूमस्तकस्य महालाञ्छनमिति च सोऽसकृद् व्याजहार ।

अक्षयकुमारस्तत्त्वबोधिन्यामोजोमयलेखेषु ग्रामजनतायाः निःस्वतां तस्या दुःखार्णवनिपतितत्वाज्जातां शोचनीयां दशां मर्मस्पर्शिण्या गिराकूवियय्याऽऽलिखन् प्राप्यते । तदीयामिमां चिन्तनीयामवस्थां प्रति कारणमस्ति ब्रिटिशशासनमिति निर्भयं निजगाद सः । दारिद्र्येऽपनीते सति सा (ग्रामजनता) विकासोन्मुखी भवितुमर्हति; तस्या अभ्युदयः सर्वविधो भवितुं शक्य इति सोऽमंस्त ।

एकस्यैव समाजस्य विभिन्नेषु सदस्येष्वर्थगतवैषम्यं

तमक्षयकुमारमतितरामदुनोत् । प्रतिदेशस्य समृद्धाः संसार स्योत्कृष्टतमान्यपि सुखानि स्वयमेवोपभोक्तुमभिलषन्ते । किञ्च तदितरे तद्दासतायां शुष्करूक्षभोजने च स्वजीवनं क्षिपन्त्विति ते कामयन्ते-इत्येतत् तथ्यं सः स्वलेखेषु प्रकटीचकार । यस्मिन् समाजे जनानां बह्वी संख्या धनवतः सुखयितुमहर्निशं स्वजीवनमपि हुत्वा कार्याणि कर्तुं बाध्यते तत्र न सामाजिक्युन्नतिर्भवितुं शक्यास्ति न च समाजे शान्तिरपि दृष्टा भवितुं शक्यास्ति ।

ईश्वरस्य दृष्टिः सर्वत्रास्ति समा । अत्याचारपरः समाज एव मानवानां वराकाणां समाजं विविधासु व्यथासु निपातयति । स एवास्ति तदर्थमुत्तरदाता । श्रमिकाः कर्षका दरिद्राश्चोन्नत्यर्थं मनुकूलतां लभेरन्नित्येतन्निमित्तेन समर्था धनवन्तश्च सततं चेष्टेरन् । असमर्था अपि ज्ञानार्जनाय सदवसरं समुचितानि च साधनान्यवाप्नुयुरित्येतद्धेतोः प्रभविष्णवः प्रयतेरन् । यस्मिन् शासने निर्धना जनाः स्वजीवनं समुत्थापयितुं न शिक्षामधिगन्तुं, न स्वास्थ्यं रक्षितुमनुकूलानि भोज्यानि अपि लब्धुं प्रभवन्ति तच्छासनन्तु व्यर्थमेव । अक्षयकुमार एतद्विषयकान् लेखान् बहून् लिलेख; भाषणेषु चेदृशानेव विचारान् व्यक्तीचकार ।

अक्षयकुमारो मनोदुर्बलतायाः, बालविवाहस्य च कारण मशिक्षामेव मेनेऽतोऽसौ पुनः पुनः अशिक्षां दूरीकर्तुं शासन मनूनुदत् । जनसंख्याया वृद्धिः सन्तानोत्पत्त्या मनिग्रहणञ्ज दारिद्र्यादेव प्रवर्तते तस्मात् स दारिद्र्यं विनाशयितुं शासनं नुदतिस्म मुहुर्मुहुः ।

निर्धनानां निर्धनतातो धनवन्तः स्वार्थपूर्तिं न विदधीरन्; ते न तमत्याचारं कुर्वीरन् येन निर्धनानां निर्धनता निर्धनतरता च प्रपद्यते । धनवतां निर्धनजनशोषणप्रवृत्तौ सोऽनिश मशोचत् । शोषणं विरोद्धुमसौ भृशमयुध्यत ।

स तानुपायानप्यदीदृशद् यैर्निर्धनता कृशतां मलिनतां विनाशञ्च गन्तुमर्हेत्—

(अ) सा शिक्षा निर्धनेषु स्यात् प्रचलिता या तेषां

नैतिकं भौतिकञ्चोत्थानं विदधीत। सा शिक्षा भवेत् निःशुल्का अनिवार्य्या च। (आ) तद्विधानां नियमानां प्रथानाञ्चायोजनं यद्विधा नियमाः प्रथाश्च निःस्वेषु सद्गुणान् सृजेयुः।

विविधलघुलघूद्योग-कला-शिल्पादिकानां व्यवस्था कार्या यत्र निर्धना बहुलायां संख्यायां तत्र तत्र संलगेयुः। अक्षयकुमार स्तद्राज्यमायोजयितुं कल्पनामाकलयद् यत्र जनता स्वापेक्षितव्यानि पूरयितुं शक्नुयात्; सम्पदश्चौचित्येन विभाजनं भवितुं शक्यं स्यत्त्।

भारतीयानां राजनीतिकाधिकारोद्देश्येन अन्ये चानेके प्रसन्नकुमार टैगोर-किशोरी चन्द्रमित्र-गोविन्दचन्द्रदत्त-गिरीशचन्द्रघोषहरिश्चन्द्रमुकर्जीप्रभृतितरुणजनाः प्रायतिषत। ते तदर्थं कठोरं श्रमञ्चक्रुः स्वरञ्च स्वकीयमुच्चैस्तरामन्वतिष्ठन्।

द्वारकानाथ टैगोरस्य महर्षिदेवेन्द्रनाथस्य च जीवनं यथास्वसमये देशवासिना मादर्शपथमदर्शयत् तथैव तदद्यापि दर्शयितु मीष्टेऽतस्तदिह वर्ण्यते—

**द्वारकानाथटैगोरः—**

त्रिंशदधिकाष्टादशशततमेशवीयाब्दात् षट्चत्वारिंशोत्तराष्टादशशततमेशवीयाब्दपर्यन्तं भारतस्य सार्वजनीन जीवने श्रीद्वारकानाथष्टैगोरोपाह्वो नितरां महनीयतां महत्ताञ्च विन्दन् समलक्ष्यत। स राजाराममोहनरायस्य दक्षिणभुज इत्येतया ख्यात्याख्यात आसीत्। श्रीद्वारकानाथसंस्मरणग्रन्थे श्रीभोलाचन्द्रो लिखति :—

अनुकरणीयचरितो राजाराममोहनरायो द्वारकानाथस्याभ्यन्तरान् भावाननल मिव विदधत् प्रापुस्फुदत्; स तमोजोमयोत्साहवन्तं सर्वजनसेवारतं सेवक मकरोत्। अतष्टैगोरः स्वसमये परमसुविदितप्रशंसास्पदनेता मतो बभूव।[1] सः सामाजिके राजनीतिके च क्षेत्रे यां सेवामकार्षीत्, सा सा मुहुर्मुहुः प्राशंस्यत जननिवहेन। तत्सेवया जनानां राजनीतिविषयका भावनाः जनानां जजागरुः। ब्रिटिशशासनेन जनानां राजनीतिकाधिकारेषु कृतान् कुठाराघातान् सः प्राबल्येन

1. *The Bengal Harukarn, Fele, 7, 1883.*

व्यरौत्सीत् रसगुणवसुसोमाब्देऽष्टादशे दिनाङ्के जूनमासे कलिकातायां सः सभायां निर्भीकतापूर्वकं व्याहार्षीत्-"आङ्गलैभरितवासिनां किं नापहृतमस्ति? अथ भारतीयानां जीवितं, तेषां स्वाधीनता, तेषां सम्पदन्यच्च सर्वमेव तेषां सिताङ्गशासनस्य दयाया निध्नतायां सन्ति।"

द्वारकानाथो मुद्रण-स्वातन्त्र्ये समाचारपत्राणाञ्च स्वातन्त्र्ये प्रकृष्टतरबलं प्रयच्छत् स्वाभिरुचिमदर्शयत्। सरचार्ल्स मेटकॉफकाले सः स्वप्रेयत्नेषु काञ्चन सफलतामप्यविन्दत्। तदानीं स लिलेख-"मुद्रणस्वातन्त्र्यं यथास्मिन् विशाले देशे सर्वकारस्य कृते शासनकार्ये साहाय्यकृद् भवति तथैव शासकाभिलाषे न्यायप्रियता सच्छासननिष्ठा च वर्ततेऽथ च भारतीयाच्छासनालोचनातो न बिभ्यतीत्येतद्विधं विश्वासं तत् (मुद्रणस्वातन्त्र्यम्) जनेषु जनयति"।

द्वारकानाथो न्यायाधिकरणेषु रक्षि (पुलिस) विभागे प्रसृतमुत्कोचमुच्चैर्व्यरौत्सीत्। सः पुलिससुधारसमित्याः पुरः साक्षित्वेनोदीरयामास "गुल्मस्य यविष्ठ निरीक्षकमारभ्य यविष्ठं सेवाकारिणं यावत् सर्वेऽपि सन्ति धृतोत्कोचादानमनसः। नास्ति किमपि कार्यं तद् यदुत्कोचमन्तरेण सिद्ध्येत्। धनाढ्या धनबलेन सर्वमपि चिकीर्षितं कार्यं साधयन्त्यायासं विना। निर्धनानत्याचारपेषणी पिनष्टि निरन्तरम्। योऽधिकतमं धनं प्रयच्छति स जयमाप्नुते। यदि कोऽपि ग्रामो दस्युभिर्लुण्ठ्यते तदा रक्षिविभागयविष्ठनिरीक्षकस्तदधीनाश्च जना घोरान्धान्यायं कुर्वन्तो यदृच्छया कमपि जनं धरन्ति तस्मिश्च बहुविधान् दोषानारोपयन्ति। तत्र निर्दोषा निगृह्यन्ते दोषवन्तस्तु निर्मुच्यन्ते। उत्कोचमालम्ब्य अन्याय एव स्वशंखं धमन् विचरति"।

इत्थं द्वाकानाथः स्वजीवनं देशजीवनं देशसेवायां प्रवर्तयदेवप्रैक्ष्यत।

**महर्षिदेवेन्द्रनाथष्टैगोर :-**

महर्षिर्देवेन्द्रनाथष्टैगोरो द्वारकानाथटैगोरस्यात्मजो विश्वविश्रुतकवेः रवीन्द्रनाथटैगोरस्यासीत् पिता। महर्षिः स्वाभिरुचिं राजनीत्यां न निधायाध्यात्मिकतायां निदधौ; स तस्या एव

विकासने स्वां प्रीतिं निबबन्ध। स्वसमये बङ्गेषु स आध्यात्मिकीं भुवमुत्थापयितुं महान्तं प्रयत्नमन्वतिष्ठत्। स वर्तमान- वङ्गनिर्माणकारिष्वन्यतमौ बभूव।

तदेवं सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दे प्रवृत्तात् स्वातन्त्र्यसमरात् प्राग् बहवो देशभक्ताः स्वातन्त्र्याय देशोदयाय च कार्यं कुर्वन्तोऽदृश्यन्त। ते जनतां राजनीतिकाधिकारान् प्रति पूर्णतयावगतान् कर्तुं चेष्टमानाः सर्वकारं प्रजाम्प्रति स्वकर्तव्यपालनार्थं समये समये चेतयाम्बभूवुः। शिवनाथः शास्त्री तु निर्दिष्टायोधनादारम्भात् प्रागेवांग्लशासनमुत्सादयितुं षड्यन्त्रकारिसंगठनमायूयुजत्। तस्य सः स्वयमेव सञ्चालकोऽप्यासीत्। आंग्ल-पारतन्त्र्याद् भारतस्योन्मोचनमेव तस्य संगठितस्यषड्यन्त्रस्य मुख्यमुद्देश्यमासीत्। परं तदायोजनं न चिरञ्जीवितुमशकत्। न तत् स्वप्रयासे कामप्युल्लेखनीयां सफलतामध्यजगाम। परमेतेषु सत्सुसमुद्यमेषु नांग्लशासनं सुखेन शयितुं शशाक।

**दक्षिणभारते राजनीतिकजीवनारम्भः**

द्वित्रिंशदधिकाष्टादशशततमेशवीयाब्दस्य प्रत्यासत्त्यां महाराष्ट्रे राजनीतिसम्बन्धिगतिविधिरवततार। श्रीबालशास्त्री जाम्बेकरस्तदा महाराष्ट्रभाषाया 'दर्पण' साप्ताहिकं पत्रं 'दिग्दर्शनम्' च नाम मासिकंपत्रं प्रकाशयितुं प्रचक्रमाते। शास्त्रिमहोदयः कुरीतिष्वजुगुप्सत। यत् यत् समाजमपचकार तत्र तत्र शास्त्रिमहाभागः स्वकीयं प्रबलं कठोरञ्च विरोधं प्रादीदृशत्। तस्य पत्रद्वयमपि समाजापकर्षं न द्रष्टुं शशाक। विधवाप्रोत्साहनं शुद्ध्यान्दोलनप्रवर्तनञ्च निर्दिष्टयोः पत्रयोः कार्ये बभूवतुः। प्रतीच्यविद्यायाः प्रचारं विना न भारतोद्धार इति श्रीबालशास्त्री विशश्वास। श्रीशास्त्री द्विचत्वारिंशदधिकाष्टादशशततमेशवीयाब्दे एल्फिन्स्टनकालेजे प्रोफेसरपदमध्यासाञ्चक्रे परं सः १८४६तमेशवीयाब्दे दिवं गतोऽभवत्।

श्रीबालशास्त्रीव दादोबापाण्डुरङ्गाभिधः सज्जनश्चत्वारिंश दधिकाष्टादशशततमेशवीयसम्वत्सरे 'परम हंसमण्डली'

इत्येतन्नामधेयां गूढां संस्थां स्थापयामास। भारतेप्रवृत्तं जातिभेदोपभेदान् विनाश्य सर्वत्र ऐक्यस्य स्थापनं तस्याः संस्थायाः उद्देश्यमासीत्। जातिभेदेन भारतं विनाशितमित्येतद् दादोवा व्यतर्कयत्। जातिभेदेन भारतं वहुषु शकलेषु विभक्तीकृतं; तेन तद् दीनहीनदशां नीतमतः सबलं राष्ट्रं कर्तुं जातिभेदस्य विनाशनमेकान्ततोऽपेक्ष्यते। सर्वमपि भारतमैक्यसूत्रेण निबद्धं स्यादिति च सर्वत्रैवाकाङ्क्ष्यते इति स विचारयामास। कार्यञ्च तत्र चिरञ्चक्रे। वस्तुतस्तस्मिन् काले समाजोत्थानाय च प्रयत्नोऽभूत्।

समाजोत्थापनकारिषु श्रीबालशास्त्रि-दादोबाप्रभृतिमहाराष्ट्रविपश्चिद्वरेषु स्वकर्त्तव्यप्रवृत्तेषु सत्स्वेव सरदारगोपालरावहरिः 'लोकहितवादी' पत्रद्वारेण समाजस्य परिमार्जनाय प्रबलवेगेनान्दोलनं प्रवर्तयामास। 'लोकहितवादी' पत्रमेकदा स्वविचारमिमं प्रकटीचकार—

"अस्माभिः सर्वैर्धनिकाधनिकैः एकमतैर्भूत्वा देशसम्राज्ञ्याः सेवायां वर्तमानशासनपद्धतिर्नास्त्यस्माकं कृते हितकरी। तस्यां सत्यामस्मदीया अधिकारा निहन्यन्ते। आंग्लाः इव हिन्दवोऽपि मनुष्याः सन्ति। अतः समाननीतिमाश्रित्य भारते संसत् संस्थापनीया। जनहितदृष्टया मुम्बय्यामधिवेशनस्यायोजनं कर्त्तव्यम्। अधिवेशने च तस्मिन् सर्वेषामपि जातीनां प्रतिनिधयः स्युः। न्दृणां दारिद्र्यं भारतीयानां केन विधिनापहृतं भवेदित्यत्र तस्मिन् अधिवेशने विचारः प्राधान्येन भवेत्। सन्ति भारतीया मूर्खा इत्येषोऽस्ति भ्रम एवांग्लेषु। तत्र तन्निरासाय तेवसरं लभेरन्। एतावदेव न, राज्ये जनहितकारीण्युत्तमानि कार्याणि भवितुमर्हेयुः। राज्ञः शासने किं सुखं किञ्च लोकसत्तात्मके राज्ये सुखमित्येतच्च सम्यग् विदितं भवेत्।

एतेनोक्तस्य पत्रस्य लोकहितवादितायाः बुद्धिमत्तायाश्च भावनावगता जायते।

तदानीन्तन एवानेहसि विष्णुबुवा ब्रह्मचारी 'सुखदायकराजप्रकरण' निबन्धे समाजवादं प्रत्यपीपदत्। स मेधावी

ब्राह्मणः अस्मदीयायाः प्राचीनाया संस्कृतेरेव भाव्यभ्युदयस्य मार्गो निर्गतो भवेदित्येतां धारणां निदधति स्म। स देशहिताय जनहिताय च यान् विचारानभिव्यानक् तेषु साम्यवादिताया मनोज्ञता परिलक्ष्यते। आसीत् स विष्णुबुवाब्रह्मचारी कार्लमार्क्सेऽनभिज्ञः, परं तदीया विचारावलिस्तन्मतसाम्यवादितायां रममाणा दृश्यते।

वस्तुतो बाह्यां परिस्थितिं सम्प्रेक्ष्य सात्विके राजसे च मानसे भिन्नभिन्नाः परिणामाः समुत्पद्यन्ते। इन्द्रियाणि मनसि मेधायाञ्च संस्कारान् आरोपयन्ति। यादृशं मनो यादृशी च धी भवति तादृशा एव भूत्वा संस्कारास्तत्रोत्तरला भवन्ति। मनसो धियश्च सात्त्विकत्वात् सात्त्विकसंस्कारश्रितो मानवः पारमार्थिकतायां किञ्च तयोः राजसत्वाद् राजसग संस्कारनिषण्णो जन ऐहिकतायामात्मानं रमयति।

आंग्ला व्यापारव्याजेन भारते स्वकीयां स्थितिं कृतवन्तः। परं ते भारत मान्यायैर्नानाच्छलकपटपूर्णया नीत्या विजित्य स्वकीयं शासनं संस्थाप्य स्वकीयं देशमिङ्गलेण्डमपरिमितसम्पद्भिः समृद्धिं विधातुं भारतस्य सर्वविधाः कलाः शिल्पमन्यार्थार्जनकरीं क्षमतां विनाश्य तद् (भारतम्) दैन्येन दारिद्र्येण च समन्वितं कर्तुं कृत्स्नतयाचेष्टन्त। ते तथा प्रायतिषत यथा भारतीया सभ्यता नाशं गच्छेत्; तदीयं ज्ञानं, तदीयं बलं तदीयञ्च चरित्रं क्षीणतां प्रपद्येत। स्वकीयेन असच्छासनेनाल्पीयसैवानेहसा भारतीये समाजे यदपि महत्त्वमद्योतद्, यदपि गौरवमभ्राजत तत्सर्वमपि रजसि ते पर्यवीवृतन्। ते भारतीयं समाजमेव धराशयिनं विधाय तं शतशो बभञ्जुः। भारते बहव आभ्यन्तराः कलहा अभूवन्; आक्रमणानि च बहूनि जातानि; दुर्भिक्षापदश्च शतशो निपतिताः परं न तास्ता विपदो भारतं तथाक्षिण्वन् यथांग्ल-शासनम्। तत्तु शासनं तस्यान्त्यं तलं प्रयाय तद् (भारतम्) निपातयामास। हन्त, तद् भारतीयप्राचीनपरम्परां भारतीयेतिहासञ्च कठोरतया प्राहरदस्य तस्य सम्बन्ध एव ततः समुच्छिन्न इति प्रतिभाति।

उपरिसमुपस्थापितेऽवतरणे तस्य लेखस्याशयः प्रदत्तो

वर्तते यो हि मार्क्सेन न्यूयार्कस्य हेरल्डे, ट्रिब्यूने च लिखितः। एतस्माद् विवरणादायासं विनैवाङ्गलशासनमचिरादेव भारतस्य नाशञ्चकारेति ज्ञातं सञ्जायते। एतां निर्दिष्टां शोचनीयां स्थितिं भारत माङ्गलशासनं तदैव निनाय यदा १८५३ तमेशवीयाब्दः समतिष्ठत।

**इमां धरित्रीं भरतस्य सर्वां,**
**व्यनाशायत् कृत्स्नतयैव ह्यांग्लः।**
**विलोक्य तस्याः शोचनीयां,**
**न कोऽरुदद् भारतदेशभक्तः॥**

## द्वितीयः परिच्छेदः



सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दस्यावतरणात् प्रागेव भारतस्य जनता आंग्लशासनविरोधिनी सञ्जाता। सा तत्र भृशं जुगुप्सां न्यदधात्। कृषीवलेषु नितरामशान्तिरदृश्यत। कर्नलमालेसनः कर्षकाणामुद्वेगमधिकृत्य लिलेख "आंग्लशासनम्प्रति नितान्तासद्भावना कर्षकेषु ववृधे। अतोऽनेके कृषीवलविद्रोहाश्च प्रावर्तन्त"।

तदानीन्तने काले सर्वत्र देशे जनतामुद्बोधयितुं परिपत्राणि प्रसारितान्यभूवन्, तेषु परिपत्रेषु कथितमिदमभूत्– "आंग्लैर्विश्वासघातं विधाय-विधाय चानेकच्छलछद्मानि भारतेऽधिकारः कृतोऽस्ति। तैरत्याचारपरैर्भारतस्य सर्वथैव शोषणं कृतमस्ति। तैर्भारतस्य धर्मः प्रथाश्च विध्वंसिताः; तैर्भारतं पूर्णतया विनाशं नीतमस्ति।

तस्मिन् काले आंग्लानां व्यापादनाय सैनिकाः प्रोत्साहिताः अक्रियन्त। ग्रामे ग्रामे जना आंग्लान् निन्दन्तोऽभ्रमन्।

१८२४ तमेशवीयाब्दे भारते केषुचन स्थानेषु विद्रोहानलः पुस्फोट। सहारनपुर-मुरादाबाद-दिल्लीमण्डलेषु विद्रोहज्वाला पर्यलक्ष्यत। आंग्लशासनावसाननिमित्तेन कतिपयेषु स्थानेषु कोलाहलोऽश्रूयत। सप्तविंशत्यधिकाष्टादशशततमेशवीयसम्वत्सरस्य प्रत्यासन्नतायाम् उमाजीनायकस्य नेतृत्वे पूनानगरे भयावहो विद्रोह उदतिष्ठत्। त्रिंशदधिकाष्टादशशततमेशवीयाब्दे बिहारप्रदेशे कोलजना विद्रोहपताकामुत्थापयन्ति स्म। चतुश्चत्वारिंशदधिकाष्टादशशततमेशवीयवर्षे महाराष्ट्रप्रदेशस्य सावन्तवाडीराज्ये तावता बलेन विद्रोह उत्तस्थौ यावता बलेन सह न प्राक् क्वापि सोऽदृश्यत। भीतो भवन् आंग्लसेनानीः आउटरेमस्तं विद्रोहं धर्षयितुमुत्सादयितुञ्च दशसहस्रसंख्यकसैनिकान् प्राहिणोत्। १८४८ तमेशवीयाब्दे

कांगा-जसवार-दातारपुराधीशा नूरपुरमन्त्रिसहयोगमवाप्य ब्रिटिशशासनं विरोद्धुमुत्कटविद्रोहज्वालाः व्यतानिषुः । ब्रिटिशराज्यस्य समाप्तिर्जातेति ते उद्घोषयाञ्चक्रुः ।

भावोऽयं १८५७ तमेशवीयाब्दस्य प्रादुर्भावात् प्रागेव देशे सर्वत्राशान्तिरसन्तोषः क्षोभश्च पुस्फुटुः । भयङ्करविद्रोहरुद्रस्य ताण्डवार्थं भूमिः कृतसज्जा समजायत ।

सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दे भारतीयजनस्वान्तगामी यः संक्षोभो 'विद्रोह' इत्येतेन शब्देन प्रख्यापितोऽभूत् स वस्तुतो भारतीयानां स्वातन्त्र्ययुद्धमासीत् । तद् युद्धं तैर्वैदेशिकशासनात् स्वदेशमुन्मोचयितुं प्रवर्तितमित्येतत् तथ्यं श्रीविनायकदामोदरसावरकरेण स्वसुविदितग्रन्थे "भारत का स्वातन्त्र्य युद्ध" इत्येतन्नामधेये बलीयसीभिर्युक्तिभिः सुदृढैः प्रमाणैश्च प्रतिपादितमस्ति ।

जनसामान्ये ह्यांग्लानां शासनं प्रति महती जुगुप्सा, असन्तुष्टिर्घृणा च प्रबलतया समवस्थिता प्राप्यन्त अतः १८५७ तमेशवीयाब्दप्रवर्तनात् प्राक् स्वातन्त्र्यसमरस्याहोस्विज्जनविद्रोहस्य भूमिका तु प्रागेव निर्मिताभवदित्यनुपदमुक्तमेव ।

आंग्लशासनेन भारतीयेषु सैनिकेषु आंग्लसैनिकेषु च महान् भेदभावो व्यवहारतः कृत आसीत् । भारतीयानां सैनिकानां कृते न तावद् वेतनं प्रदत्तमभूद् यावदांग्लाः समलभन्त । भारतीयः सैनिको नोच्चपदमवाप्तुं प्राभवत् । न स उच्चपदे कदाप्यासीनतां नीतः । भारतीयस्य सैनिकस्योच्चतमं वेतनं चतुस्सप्तत्यधिकशतरूप्यकमितमासीत् । इदं वेतनन्तु निम्नतमस्तरस्थांग्लसैनिको यद् वेतनमलभत तस्मादपि न्यूनमासीत् । न भारतीयः सैनिक आंग्लशासने उन्नत्यवसरं प्राप्तवान् । तस्य पदोन्नतिरपि नाक्रियत कदापि । पदोन्नतिः का भवतीति सोऽजानादेव न । स तु सदा निरादरमेव प्राप । आंग्लाः सर्वदा तमवामन्यन्त । तं ते घृणादृष्ट्या पश्यन्ति स्म ।

साम्राज्यवादिन आंग्ला भारतीयान् सैनिकान् भारताद् बहिरपि योद्धुं प्रेषितवन्तः । १८२४ तमेशवीयाब्दे वराकपुरस्य सैनिका बर्माख्यं देशं गन्तुं यदोद्यता नाजायन्त तदा ते तत्क्षणं

न्यहन्यन्त। प्रवेशणाधिनियमश्च पारितो येन न कोऽपि सैनिको भारताद् बहिर्यातुं प्रतिषेधं कर्तुमुद्यतो भवितुमर्हेत्। अन्यैश्च कारणैः सैनिका भृशमसन्तुष्टतां गमिताः। अवधप्रदेशे तु तेषु निर्दयताच्छलकपटमयो व्यवहारः कृतोऽभूत्। सैनिका अवध-प्रदेशे कृतं तं परमनिन्दनीयं व्यवहारं सोढुं नाशक्नुवन् यं कुटिलं दुष्टतामयं साधनमाश्रित्यांग्ला अवधप्रदेशमांग्लराज्ये समावीविशन्। एतेनांग्लकुत्सितकार्येण सैनिकेष्वशान्तिज्वाला परमतीव्रप्रण्डतामुपेता। सैनिकानां संरम्भानलमांग्लानां तद्-धूर्ततासम्पृक्तं कठोरताजुष्टं कुकृत्यमतीतिजत्। अवधप्रदेश आसीत् सैनिकानां केन्द्रस्थलम्। अवधस्यांग्लराज्येऽन्तर्भूतत्वा-च्छष्टिसहस्रसंख्यकसैनिका अभूवन् विगतभृतिकाः। एतेन च तेषां द्वेषाग्निरदीप्यत। तेऽग्रेजानां राज्यं समूलमुन्मूलयितुं समुद्यताः समजायन्त। वङ्गसेनायामपि पर्याप्ता अवधवासिनः सैनिका आसन्। तेऽपि नितरामक्षुभ्यन्। एतेषां सैनिकानां राष्ट्रियभावनापि व्याहताभूत। अतश्च प्रतिशोधनभावन-भर्षिणा भूत्वा प्रास्फुटत्।

इतोऽवधप्रदेशेऽशान्त्यपरितोषावुद्बभूवतुस्ततो डलहौजी-स्वकीयया कुटिलया नीत्या सतारा-नागपुर-तञ्जौर-झाँस्या-द्यनेकराज्यानि राज्ञां वशीकृत्य तानि ब्रिटिशराज्यान्तर्गता-नि चकार; तस्मात्कारणात् तत्र तत्र च नितान्ताशान्ति-रुत्पेदे।

अनेनैव प्रकारेण ब्रिटिशशासनं बाजीरावपेशवानरेशस्य दत्तकपुत्राय नानासाहबाय प्रदत्तं निवृत्तिकाललभ्यमानवेतनं निरुरोध। बाजीरावे सत्युपरते नानासाहबस्तस्याधिकारी आसीत्। एतदर्थं स लन्दनस्थन्यायाधिकरण-सञ्चालनाधि-कारिणः सेवायां प्रार्थनापत्रं प्राहिणोत्। परं व्यर्थतामियाय सः प्रयासः। ततस्तु निराशो भूत्वा नानासाहब आंग्लशासनं विरोद्धुमसिं जग्राह। देशे बहुषु भागेषु आंग्लानामत्याचाराः संवर्धिता भवितुमारेभिरे। मैनपुरीशस्य षोडशाधिकशतग्रामा आंग्लैरपहृताः। उत्तरप्रदेशीयस्यान्यस्याप्येकस्य भूमिपतेः २१६ ग्रामाणां मध्ये १३८ ग्रामा वश्यतां नीताः; अनेनैव विधिना

बहवो भूपतयोऽनेकनेकाग्रामविहीना अक्रियन्त। केषाञ्चन तु भूमिपतीनां भूमिपतित्वमपि समाप्तं कृतम्। एतावति कृतेऽप्य न्याये नांग्लानां पिपासा शान्ताभवत्। ते कृषीवलेष्वपि नादयन्त। भूमिकरस्य वृद्धिरेतावती विहिता या सर्वथैवानुचितासीत्। वस्तुतः सा करवृद्धिर्नासीत्; सा तु दस्युतासीत्। अन्यविधानेककर भारास्तेष्वारोपिताः। एतदन्यायपूर्णं कार्य्यञ्च तेषु कृषीवले ष्वपि द्वेषमांग्लान् विरोद्धुमजीजनत्। सर्व एव देश इत्थमांग्लेषु घृणाधियं निदधौ सः कालस्तदेदृग् दृष्टोऽभवद् यत्रांग्लान् प्रति द्वेषस्तीव्रः प्रचण्डश्च भूत्वा जजागार। यवनाश्चापि यवनशासनविनाशकत्वादांग्लानां, नितरामेव तदुत्कटपरिपन्थिनः सञ्जाताः। एतया दुःस्थित्या वातावरणेन चैतेन सरहेनरी लॉरेन्सो लॉर्डकैनिंगं तदा अवगमयाञ्चकार।

द्विपञ्चाशदधिकाष्टादशशततमेशवीयवर्षे पाटलिपुत्रस्य मण्डलस्याधीशोंऽग्रेजशासनम्प्रति प्रतिवेदनं प्राहिणोत्—

"अस्मिन् नगरे विरोधिनां संख्यास्ति वृद्ध्युन्मुखी। जनाः प्रत्यक्षतया राजविद्रोहप्रचारणे संलग्नाः सन्ति। आरक्षिणोऽपि सन्ति तत्साहाय्यकृतः। मौलवी अहमद उल्ला विद्रोहिणामेषामस्ति नेता। जनानां सप्तशती तदादेशपालने तत्सदने स्थिता वर्तते।

यवनानाम् अपरो नेता फैजाबादवासी मौ० अहमदशाहोऽवधरहेलखण्डोत्तरपश्चिमभागेषु च प्रलयोपमधावनेन जने जने विद्रोहभावनां समाविविशत्। स महान्तं जनसमवायमांग्लविरोधिनं विधाय खड्गमुत्थापयितुं प्रोत्साहितञ्चकार।

अस्ति तत्कथनस्यैतस्याशयोऽयं यत् सर्वेऽपि जनाः— हिन्दूमुसलमानभूमिपतिकर्षकादिकाः — प्रबलविद्रोपभावनाविष्टा अभूवन्। जना देशान्तरीय (आंग्ल)-सत्तातो देशमुन्मुक्तम् विधातुं स्वदेशीयाञ्च सत्तां पुनः स्थापयितुं भृशोत्सुकाः समजायन्त। सेनायाञ्चैष विद्रोहपावको भीषणो भवन् दीप्तो भवितुमारेभे। जनास्तं समयमुत्सुकतया प्रतीक्षमाणाः समतिष्ठन्त यदा सर्वेऽपि संभूय विद्रोहपताकामुत्थापयेयुः। सेनाया

1. *W.W. Hunter Indian Musalmans. pp. 22.3.*

अपरितुष्टत्वाद् वस्तुतस्तु विद्रोह आत्मान माविर्भावयितुमवसरं सत्वर मेव लब्धं शशाक। एतस्मिन् महति विप्लवे वङ्गानीकिनी परमवीरतया सफलतापूर्वकं विद्रोहाशुशुक्षणिमुद्दीपयितुं प्रावर्तत। शनैः शनैश्चतुरस्रतया विद्रोहस्य भयङ्करज्वालाश्चकासाञ्चक्रिरे।

विद्रोहो भयावहं बहुभूव्यापि रूपं धृत्वा सर्वास्वपि ककुप्सु वितनुतामगच्छत्। तस्य सा भीषणताऽंग्लशासनमकम्पयदभाययच्च नितान्तम्। देहली-मेरठ-रुहेलखण्डागरा-वाराणसी-प्रयाग-पटना-नीमचाजमेरादिनगरेषु बहुषु चान्येष्वपि तत्सन्निधिस्थितेषु मण्डलेषु स्वस्वगेहाज्जनानां वर्हिर्निर्गमोऽपि प्रतिषिद्धोऽभवत्। एतावता विद्रोहस्य व्यापकता बलवत्ता च ज्ञाता जायते। देहली-रुहेलखण्ड-बुन्देलखण्ड-अवधप्रदेशैस्तु वैदेशिकी सत्तोत्सादिता। ते खण्डाः शासनबन्धनादात्मान मुन्मोचयामासुः। सर रिचर्ड टैम्पलो विद्रोहवृत्तमाकर्ण्य सत्वर मिटलीतः प्रतिनिवृत्तः। परं सः पाञ्चालप्रदेशस्य सर्वानपि वर्त्मनः पूर्णतयावरुद्धान् ददर्श। जनरल हैवेन्लोकोऽपि पेरिसान्निवृत्य देहलीगामिनोऽध्वनो निरुद्धानद्राक्षीत्।

विद्रोहो भूत्वा विशङ्कटः क्वचित् क्वचित् परां भीषणां दुःस्थितिमररचत्। नर्मदासन्नराज्येष्वपि सकला जनता ब्रिटिश शासनप्रतिकूला भवन्ती धृतविद्रोहपताकाहस्ताऽदृश्यत। पश्चिमीयविहार-पटनागरामेरठाख्यभागेषु जनता सेना च द्वेऽपि मिलित्वा युगपद् विद्रोहं कर्तु मुद्यते बभूवतुः।

एकस्मिन्नेवाहनि रुहेलखण्डे विद्रोहपावको दारुणंरूपं धारयामास। बरेली-शाहजहाँपुर-मुरादाबादादिबहुस्थानेषु सेना, रक्षिणां ततिर्जनता च स्वतन्त्रताघोषणामकार्षुः। यमुनायाः पश्चिमीयतटवर्तिषु राज्येषु केचन क्षितीशाः स्वजनतां विद्रोहाय नान्वमन्यन्त। गङ्गायमुनामध्यभागगामिनो ग्रामसमुदायास्तु वैदेशिकीं सत्ताञ्चोत्सादयाञ्चक्रुः। अवधप्रदेशे विद्रोहस्य नेतृत्वं सेना कृतवती। यस्मिन्नपि मण्डले विद्रोहानलः प्रजज्वाल, तन्नभूयः आंग्लानां निघ्नताया मात्मानं चिक्षेप। दशभिरेवाहोभिर्निर्दिष्टेषु स्थानेषु सिताङ्गराज्यस्य बहुभागः

कृत्स्नतया विलुप्ततां ययौ। न तस्य किमपि चिह्नमप्यवाशिष्यत्। सेना व्यद्रुह्यत्, जनता चांग्लसत्ताधिपत्यमवज्ञाय विद्रोहे स्वां समर्पयामास। स्वतन्त्रतातरङ्गावलिः समस्तेष्व्यवधप्रदेशे प्रससार। आबालस्थविराः सर्वेऽपि सैनिकता मवाक्षुः। अल्पेनैवानेहसा सुसज्जिता सेनैव सेना सर्वत्र लोचनगोचरता मगच्छत्। एकलक्षसंख्यकाजनाः सैनिका अभूवन्। सकलोऽपि मध्यभारतप्रदेशः स्वतन्त्रः समजायत। तदेवं सर्वत्रैव प्रायेण देशे आंग्लशासनविरोद्धा विस्तृतो विद्रोहो दारूण माननं व्यादाय सन्तस्थे। कलिकातास्थशास्तारो न प्रदेशान्तरविद्रोहोदन्तं वेत्तुं क्षमा अभुवन्नित्येतेनैव बिद्रोहिणां सफलताया अनुमानं सुगमतया कर्तुं शक्यं भवति। देहल्यां जातो विजयो विद्रोहिणां सर्वाधिकमहत्त्वभाक् तेजस्वी विजय आसीत्। विद्रोहिणो बहुविधान्यायुधानि प्राप्नुवन्। एतद्धि मनोविज्ञानपरकं प्रभावं न्यपातयत्।

देहलीं स्वनिघ्नताया मानेतुमाङ्ग्लाः परमकठोरसङ्कटसाम्मुख्यं चक्रुः। विद्रोहिभिः सह तेषां नितान्तकष्टप्रदसंघर्षोऽभवत्। यदा चांग्लाः कतिपयासफलप्रयासानन्तरं देहलीं प्रविविशुस्तदा तिलपरिमाणधरित्र्याः अपिकृते विद्रोहिभिः सार्धं योद्धुं तेऽबाध्यन्त। यदांग्ला देहलीं विजिग्यिरे तदापि पार्श्वस्थेषु पत्तनेषु युद्धं न विरराम। ग्रामनिवासिनो जना घृणासूचकशोणितपटावृतललाटा अवालोक्यन्त। विहारप्रदेशे जना आंग्लान् निरन्तरमतियुक्तियुक्तरीत्यानृतसूचनाभिर्विप्रालभन्त। अवधस्य विद्रोहकारिणोऽन्तरेण भोज्यानि विचरन्तोऽदृश्यन्त। तत्रत्या जनता स्वयं तेषां कृते भोज्यसामग्र्याः व्यवस्थाञ्चकार। ते (विद्रोहिणः) विनाशङ्कां स्वपरिच्छदं मुमुचुः। न तदीयान् परिच्छदान् कोऽप्यस्पृशत्। क्षणे क्षणे तेऽपेक्षिताः सूचनाश्चाप्यधिजग्मुस्तस्मात् ते स्वकीया मांग्लानां च स्थितिं ज्ञातुं क्षमाः अभूवन्। तद्विरोधे कस्यापि षड्यन्त्रस्यापि सम्भावनानासीत्। तेषां गुप्तचरा हि अङ्ग्रेजानामावासे आवासे उपस्थिताः अवालोक्यन्त। अतः पुनः षड्तन्त्रस्य सम्भावनैव कुतः सम्भवासीत्? राजकीयाः कर्मचारिणोऽपि तेषां कृते स्वकीयं

योगं प्रायच्छन्। धनवन्तश्च तदर्थं साहाय्यकारिण आसन्। न धनसम्पन्ना वस्तुत आंग्लानां शासने विशश्वसुः। एतेनांग्लशासनं प्रभूतामार्थिकक्षतिं ययौ। सार्धैककोटिपौण्डमितधन हानि स्तदीया तदा बभूव। इंगलेण्डात् कश्चिपोरनागमनाद् व्यापार आंग्लीयो भृशमक्षीयत।

आंग्लशासने जनानां घृणाया द्वेषस्य, विपर्यासस्य च नितान्तप्रगाढतयोत्पन्नत्वाद् देशे कोऽपीदृग् वर्गो नावाशिष्यत य आंग्लशासनविपक्षे भूत्वा; यां हि शक्ति सन्यदधात्, तामवलम्ब्य नायुध्यत। परं हन्त भारतीयानां तं स्वातन्त्र्योत्कटाभिलाष माङ्ग्लाः 'विद्रोह' इति नाम्ना सम्बोधयामासुः। जनया सर्वदेशानुरागिणी भूत्वाऽऽंग्लशासनमुन्मूलयितुं तदात्मानं सुदृढनिश्चयं गमयाञ्चकार। सा आंग्लशासनविरोधिषु योद्धृषु कृत्स्नतया सहानुभूतिं निदधाति स्म। अत एवातिक्षिप्रतया सफलतयाच सह सोऽग्निः प्रदिदीपे। तदानीन्तनेऽनेहसि देशस्य सर्वाअपि दिशः आंग्लशासने स्वकीयामसहयोगभावनां दधत्यः प्राप्यन्त। जनरलो हैवेलॉक स्तस्य च वाहिनी सरितं तरीतुं तरी मध्येकां न लेभे। इत्येषा स्थिति र्जनता आंग्लेषु कियन्तं संगठित मसहयोगं तदान्वतिष्ठदिति ज्ञापयति। कानपुरे श्रमिकाणा माङ्ग्लविरोधनाय कृतोऽसहयोगः परमविस्मयावह एवालक्ष्यत।

सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दे सर्वतः प्रसृत आंग्लशासनप्रतिकूलभावो नैकदेशग आसीत्। हिन्दवो मुसलमानाश्च साम्प्रदायिकताबन्धनं भङ्क्त्वा आंग्लशासनं नाशयितुं स्वकीयं जीवनं बलिवेद्यांहोतुं सन्नद्धा अजायन्त। परमांग्ला हिन्दूमुसलमानयो रन्तराले द्वैधीभावं समुत्पाद्य तं प्रचण्डं विरोधं कृशं निहतञ्च कर्तुमनारतं भृशमचेष्टन्त। तदा तेषां कृतः कुप्रयत्नो न साफल्यमवाप्तु मशकत्। ते तत्र बभूवु निरर्थकाध्यवसायाः। इचिसनः स्वासफलतां स्पष्टतया स्वीचकार। स लिखति—"नांग्लशासनं तत्र सद्योऽधिकार माप्तुं प्रबभूव। न ते हिन्दुभ्यो मुसलमानान् मुसलमानेभ्यश्च हिन्दून् पृथक् कर्तुं तदानीं क्षमा अजायन्त। हिन्दूसुमलमानास्त्वन्योऽन्यसहकारिणो

भवन्तो युद्धे प्रावर्तन्त ।

बरेल्यां नवाबखानबहादुर खाँ महोदयस्य नायकत्वे मुसलमाना हिन्दूनां मुसलमानसाहाय्यकृत्त्वात् गोहत्यां न विधास्यन्तीति निश्चियवयुः । एतस्य निश्चयस्य घोषणोच्चैः कृता । हिन्दवस्तु प्रारम्भादेव मुसलमानशुभकाङ्क्षिणः सहयोगभावनाभृतो भवन्तश्चांग्लशासनं पातयितुं संलग्नधियोऽदृश्यन्त ।

दिल्लीपति मुसलमानः सम्राट् तु स्वयमेव स्वहस्तेन जयपुर-जोधपुरोदयपुरालवरादिनरेशान् प्रति लिलेख पत्रम् । तत्र तेनालिख्यत 'आंग्ला भारतभुवो निष्कामिताः स्यु रित्येष मामक आभ्यन्तरोऽभिलाषः । अहं सकलमपि भारतं स्वतन्त्रं द्रष्टुकामः । परमेष विप्लव स्तावत् पूर्णतया सफलो न जायेत यावदस्य सञ्चालनस्य भारं कोऽपि सुयोग्यो नीतिमान् मतिमान् शक्तिसमृद्धिमान् न वहेत । तस्य कार्य्यं स्यात् समग्रया शक्त्या सिनाङ्ग्विरोधिविप्लवं सञ्चाल्य सकलानामपि भारतीयाना मैक्यसूत्रेण निबन्धनम् । भारतादांग्लेषु गतेषु भारतमहमेव शिष्यामित्येषा न मामकीनेच्छा । चेत् सर्वेऽपि राजानः संगठिता भूत्वा भारस्यास्य वहनार्थं सन्ति सन्नद्धा स्तदा सहर्षं महं राज्यस्य सर्वानप्यधिकारान् समर्पयितुं प्रस्तुतोऽस्मि' ।

हिन्दवोऽखिला ऐक्यगता भूत्वान्दोलनसञ्चालनाय भृशोत्सुकमानसा आसन् । तस्मिन् काले सर्वेषामपि पुरस्तादेकमेवोद्देश्यमुल्ललास–"पारतन्त्र्याद् भारतस्योन्मुक्तिः" । हिन्दवो मुसलमानाश्च स्वांस्वां विद्वेषभावनां हित्वा लक्ष्यमधिगन्तुं रता आसंस्ते सर्वेऽपि तदर्थं शोणितं स्वकीयं प्रावोवहन् । सिक्खाश्च तस्मिन् विप्लवे सतर्का भवन्तः स्वां स्थितिं तादृशीं विधातुं निधातुञ्च कामयाञ्चक्रिरे या स्यात् स्वातन्त्र्यलाभाय नान्तरायकारिणी ।

आंग्ला जनविद्रोहत्वादेव तं विद्रोहं शमयितुं वलीयस्यां चिन्तायां निपतिता भवन्ति स्म । केन प्रकारेण जनसमवायस्य स विद्रोहमयी परमौजःसम्पन्नोद्दामभावना निरस्ता स्यादित्येतदर्थं मांग्लाः प्रयासवन्तो बभूवु स्ते जनतां विद्रोहाद्

दूरीकर्तुं नृशंसतामयं राक्षसीयं दुर्व्यवहार मकार्षुः ।

स्वराज्याधिगतिप्रयोजन मादाय न स जनताप्रवर्तितो विद्रोह आसीदपितु धर्मरक्षणविषयकः प्रश्नोऽपि तस्याः पुरतः समतिष्ठत । विद्रोहिणा मेकैको वर्गो मौलवीं पण्डितञ्च धर्मरक्षार्थं मार्गनिर्देशकत्वेन पर्यपुष्णात् । साधवो फकीराश्च गुप्तचरसम्बन्धिकार्य मपि विदग्धतया समपीपदन् ।

स जनविप्लवो राजनीतिधरित्रीमेवाधारीकृत्य यद्यपि प्रावर्तत परं तत्र भागग्रहीतारः पृथक्पृथग् धर्मं सम्प्रदायञ्चाशिश्रियन् । आश्चर्यमिदं, सत्स्वपि भिन्नभिन्नधर्मसम्प्रदायावलम्बिषु तेषु विप्लवकारिषु न विमनस्कता मनागपि स्थातुं शेके । अतस्तदांग्लशासनपरिपन्थ्यान्दोलनं नाश्लथत । यत्राप्यतेत् स्वातन्त्र्यान्दोलनं विजय मगमत् तत्र पुरातनमेवशास्तारं न्ययूयुजत् ।

इदं भारतस्यापि संयुगं संगठितं विधातुं वैदेशिकीञ्च सत्तां विध्वंसयितुं प्रयनेमातषु जनेषु राज्ञी लक्ष्मीबाई प्रथमं स्थानमध्यास्ते ।

**राज्ञी लक्ष्मीबाई—**

भारतस्वातन्त्र्येतिहासे राज्ञ्याः लक्ष्म्याः शुभं नाम सुवर्णाक्षरेषु वर्ततेऽङ्कनोचितम् । सा वीराङ्गना स्वकीयेन लोकोत्तरेण तेजसा दिव्यया प्रतिभया श्लाघनीयया च शक्तिश्रिया समस्तमपि भारतमतितरां विस्मापयामास । तां संस्मृत्य कस्य न भारतीथस्य शिरो गौरवमनुभवदुक्चैस्तरां न स्यात् । तस्यां राज्ञ्यां व्यराजन्त भूयांसोऽनुपमाः सद्गुणाः । तदीयांस्तांस्तान् सद्गुणान् स्मारं स्मार मद्य वयं प्रेरणां प्राप्नुमः । तज्जीवन चरित्रादनवद्याद् देशप्रेम्णो वीरतायाश्चोदात्तभावैरन्विता भवन्तो वयमस्मान् धन्यान् मन्यामहे । तस्या वीराङ्गनायास्तु गुणान् भूयांसोऽग्रेजाश्च समुदमुपश्लोक्य भृश मेव स्वान् धन्यानमंसत । श्रीमार्टिनो नामेतिहासकारो राजकुमाराणां वीराणां तुलनां विदधद् राज्ञ्याः लक्ष्म्यास्तेजस्वितामित्थमुपावीणयत् :—

"राज्ञी लक्ष्मीः स्वतारुण्ये परामेव दिव्यां सुन्दरतां शिश्राय । आसीत् सोत्साहवती मनसि, दढीयसी च वपुषि । सुवि-

दितराजपुत्रमहाराजरत्नामरसिंह इव सापि 'प्राणाः कामं यान्तु परं न मानहानिं कदापि सहेय' इति प्रत्याशुश्राव" ।

सर एडविन आर्नोल्डश्च राज्ञ्याः वीरतां साश्चर्यामोदमगासीत्—

"सा न राजकीयकार्यकलापं सम्पादयितुमीशीत इति यामुद्दिश्याभिहितं बभूव सैव प्रभूतापरिमितशौर्य्यसम्पन्नां सेनां शासितुं कृत्स्नतया प्रबभूव" ।

महाराज्ञीं लक्ष्मीं श्लाघमानोऽसौ तामिङ्गलेण्डस्य राज्ञी वोडिशिया[1] मिव मन्यमानोऽरातिभिः सार्धं वीरतयायुध्यत इति कथयामास ।

डब्ल्यू० सी० टॉरस : संसत्सदस्यो फ्रांसदेशस्य ऑन ऑफ़ आर्क-समा सा राज्ञी लक्ष्मीरभवदिति ब्रवाण "स्तुमुलभयावहजन्येऽनेकहोरापर्यन्तं कठोरसंघर्षप्रलम्भं संयुगं श्रमेण विदधत्यपि न सा संग्रामाजिरात् पलायिष्ट" इति समभाषिष्ट[2] ।

जण्टिनमेकार्थी स्वकीयया सत्यप्रियश्लक्ष्णवाचा तां तेजस्विनि वीरमण्डलेऽजीगणत् । "आसीत् सा ह्यू रोजः । स इव साप्युदारमानसा योद्धृषु श्रेष्ठा[3] । ...... शत्रुसमुदाये सर्वोत्तमो मनुष्यो यदि कश्चिदासीत् तदा सा झांस्या राज्ञी लक्ष्मीबाई बभूव" ।

राज्ञ्या लक्ष्म्याः विमलसद्गुणसौरभं प्रतीच्यानामन्तःकरणं नितरामेवाप्रीणयत् । प्रतीच्यैस्तच्छौर्यं प्रेक्ष्यातितरामम्न्दमानन्द मविन्दन् । धन्योऽयं सौभाग्यवांश्चायं देशो यत्र महाराज्ञी लक्ष्मीरिव वीररत्नमहिला महीयत । तस्या उत्तमगुणप्रकाशेन भारतीयस्य स्वान्तं गौरवावलेपमनुभवत् तस्यां पूज्यधियं विनिवेशयन्नितरां हृष्यति ।

राज्ञ्या लक्ष्म्याः यशो न भारतेतिहासमेवापि तु संसार-

---

1. *Dalhousies Administration of British India VII, P 152.*
2. *Empire in Asia, P. 376.*
3. *It istory of our own times, P III.*

स्य वीरताया इतिहासं धवलयति। यावन्तीतिहासपृष्ठानि प्रेक्ष्यन्ते तावत्सु सकलेष्वपि नैतादृशी शौर्य्यशोभिता पराक्रमावदाता महिला निदर्शनत्वेन प्राप्यते या वीरह्यूरोज इव कुशलसेनानायकगुणान् बिभ्रती आधुनिकशस्त्रास्त्रसुसज्जिता च सती विशालायाः अनीकिन्याः साम्मुख्यं निर्भयहृदयेन विदधती सेनायाः शत्रोः सेनानायकस्य च तस्य मममचूचूर्णत्। संग्रामाजिराच्च सेनासमन्वितं सैन्याधीशमचिरादेवाद्रावयत्।

राज्ञ्याः लक्ष्म्याः भर्तरि गङ्गाधररावे दिवं प्रस्थिते सति आंग्लाः अन्यायपूर्वकं राज्ञ्याः सर्वमपि राज्यं हर्तुं सन्नद्धाः अजायन्त। आंग्लानामिदमन्यायाचरणं लक्ष्म्याः क्रोधकृशानुमदीपयत्। नितान्तन्यायपूर्णानि तानि सर्वाण्यांग्लकृतानि कुकृत्यानि विचिन्त्य तस्या मन्युरिन्धाञ्चक्रे। स्वदेशस्य हिताय सा राज्ञी आंग्लेभ्यः स्वां झांसीं रक्षितुं सर्वथैवोद्यताजायत। सा ब्रिटिशरेजीडेण्टं स्पष्टैः शब्दैराचख्यौ–"अहं यावऽजीवामि न झांसीं दास्यामि"।

• आंग्ला राज्ञ्यां लक्ष्म्यामकुप्यन्त। ते कुशलपृतनानायकानां नेतृत्वे विशालां वरूथिनीं झांसीं प्राहिण्वन्। राज्ञी लक्ष्मीरपि पूर्णतयैतो युद्धायोद्यता बभूव। सा अनुपमं शौर्यमद्भुतञ्च पराक्रममवलम्ब्य परमशक्तिशालिषु निपपात। भीषणप्रतिद्वन्द्वितामयीं प्रत्यर्थितां प्रकटयन्ती आंग्लसेनाया मदममर्दयत्। अरातयस्तच्छौर्य्ये मुग्धा भवन्तो विस्मयसागरे निममज्जुः। राज्ञी वैरिणः सेनायाः शतशः सैनिकान् धराशायिनो विदधौ। परम् आंग्लसेनाया विशङ्कटत्वाज्जनसंहारकायुधानां प्रकृष्टतरत्वात्, सेनाचराणाञ्च चातुर्य्यादन्ततो गत्वा झांसी निपपात। हा, एतस्मिन् कुकाले विपद्गिरिरेव झांस्यामपप्तत्। पुरस्य सर्वास्वप्याशासु महान् हाहाकारमय आर्तनादः प्रससार। पुर-दुर्ग-राजभवनानि भृशमालुण्ठयन्त्यांग्लसेना महालक्ष्मीमन्दिरमरौत्सीत्। तत्रत्यानि सा सर्वाण्यपि रत्न-मणिभूषणादिमहर्घद्रव्याणि जहार। त्रीणि दिनानि तन्निन्द्यं लुण्ठनं निरन्तरं प्रावर्तत। नगरवासिषु दारुणा अत्याचारा अभूवन्। •
'सेण्ट्रल इण्डिया'भिधाने 'ले' महोदयरचिते ग्रन्थे झांस्याः सा

शोचनीया स्थितिः सविस्तरं वर्णितास्ति ।

राज्ञी लक्ष्मीः निर्गत्य झांसीतः कालपीं गन्तुं विचचार । परं पथोऽन्तराल एव भाण्डेरग्रामं निकषा ससैन्यो बोकरः सेनाधिकारी तां रुरोध । तदानीं तस्या वीराङ्गनायाः सविधे चन्द्रहासं विहाय नान्यत् किमप्यवर्तत । सा स्तनंधयं स्वकीयं शिशुं दामोदररावं पृष्ठे निबध्यात्मानमरेः पातुं प्रायतिष्ट । इतो बोकरः सेनानीः कतिपयैस्तुरङ्गारोहैः सार्धं वायुरंहोऽपि कुर्वन् पराजितं, तां धर्तुं यतमान आसीद् इतो राज्ञी लक्ष्मीः ब्राह्मणाबला-एकाकिन्येवासिपाणिरासीत् । परं सा न धृतिममुञ्चत् । अलौकिकं साहसं, सुदृढं निश्चयम्, आश्चर्यजनकं शौर्य्यमवलम्ब्याद्वितीयेन समरदाक्ष्येणानुधावन्तं तं रणवीरं बोकरं किञ्चिदुपसृत्य ततश्च रंहसा ओजसा स्फूर्त्या च स्वेन खड्गेन प्रजहार । स आहतो भूत्वो द्विजमानोऽधः पपात । समयकिममुपलभ्य तत्काल एव स्वकीयं वाजिनमद्रावयदतिवेगेन । कालपीञ्च साश्वारूढा दिनं यावन्निशि सम्प्रपेदे । एतेन तस्याः वीराङ्गनायाः अद्भुतं साहसं, प्रबलं कष्टसहिष्णुत्वं, मनोनिग्रहणमश्वारोहणबलवत्तनुसामर्थ्यमवगम्यन्ते । तदानीं कालप्यामेव कृतावासः पेशवावीरः स्वचम्वा सह तस्यां मिमेल । स राज्ञ्याः लोकोत्तरं बलं मुहुः प्रशशंस ।

कालप्यां महाभयानकं जन्यं प्रववृते । राज्ञी लक्ष्मीः पेशवानीकिन्याः नेतृत्वं विदधाना प्रत्यक्षचण्डीव युयुधे । उभाभ्यामपि बाहुभ्यामसिं चालयन्ती सा शतैश आंग्लवीरान् स्वर्गमगमयत् । तस्यास्तां वीरतां प्रेक्ष्य पेशवा-सेना नितरां प्रबलमुत्साहमध्यगमत् । सापि ततः पूर्णया शक्त्याऽऽत्मानं संयुगाजिरे दृढीयसीं विधाय प्राणानप्युपेक्ष्यायुध्यत । आंग्लसेना न तत्पुरतः सम्परायक्षेत्रे स्थातुं शेके । राज्ञी लक्ष्मीः पेशवानीकिनीमादाय तस्याश्च नेतृत्वं कुर्वाणा सवेगमांग्लवरूथिनीं विध्वंसयन्ती रणे युध्यत इति यदा सरं ह्यूरोजोऽवजगाम तदासौ महतीं सेनां क्रमेलकारोहिणाञ्च वाहिनीमादाय तामाचक्रमे । सेना यदा पेशवा वीरेन्द्रस्य आंग्लसैन्यप्रहारेण विध्वस्ता भवितुमारेभे तदा सा युद्धभुवं परितत्याज । निराशा च भूत्वा राज्ञी स्कन्धा-

वार माडुढौके ।

पेशवावीरं पराजयाद् दूयमानं विलोक्य राज्ञी लक्ष्मीस्तमाचचक्षे--"अद्यपर्यन्तं येऽपि वीरा युद्धकुशलतामदीदृशंस्ते सर्वेऽपि सुदृढदुर्गमाश्रयितुं बाधिता अभूवन्। छत्रपतिः श्रीशिवाजिर्मुसलमानानधरीकृत्य हिन्दूराष्ट्रं स्थापयितुं तदैव समर्थोऽजायत यदा सः सिंहगड़-राजगड़-तोरणादिदुर्गाणां शक्तिनालम्बे । स आदौ स्वं रक्षितुं प्रचण्डयुद्धार्थमुचितदुर्गश्रेणीमधीनतायां निनाय। ततोऽसौ शौर्य्यं प्रदर्श्य राजसत्तां प्रतिष्ठापयामास। प्रत्नानुभवेनापि सिद्ध्यतीदं यद् विना दुर्गसंश्रयणं युद्धं व्यर्थम् । तस्मात्कारणात् सम्प्रति प्रथमं सुदृढदुर्गवद्भिरस्माभिर्भाव्यम् । जीवनरक्षणोद्देश्येन यत्रापि वयं पलायिष्यामहे तत्रांग्लपृतनास्माननुयास्यति, सास्माकं नाशं विना न कदापि विश्रामं ग्रहीष्यति । यद् भविष्यति तदवश्यमेव भविष्यति। तत्र ध्यानं न प्रदाय साम्प्रतं दुर्गमस्माभिः स्वाधिकारे करणीयम् । तत्साहाय्येनांग्लेष्वस्माभिर्योद्धव्यम् । इदमेवेदानीं प्रथमं करणीयत्वेनावशिष्यते। गवालियरनरेशसिंधियामहाराजः सम्प्रति साहाय्याय निवेदनीयः। तद्दुर्गाश्रयणेन कानिचन दिनानि युद्धं प्रवर्त्स्यते; विजयाभिलाषं पूरयितुमाशापि बद्धा भवितुमर्हति"- राज्ञ्याः लक्ष्म्याः सम्मतिः सर्वैरप्यादृता भृशं पुनः पुनः प्रशंसिता च।

सङ्कटकाले राज्ञ्या प्रदत्ता सम्मतिर्युक्तिर्निर्देशाश्च कर्नल मैलेसननीकाशैराङ्ग्लग्रन्थकारैर्भूयो भूयोऽश्लाघ्यन्त । तैः स्वेतिहासेषु तस्या भृशं प्रशंसा कृतास्ति ।

तत्प्रशंसायामुक्तान् कांश्चन विचारान् प्रस्तवीमि :—

"विद्रोहिनायकानां कृते सः समयो महासङ्कटग्रस्तोऽभूत् । विपदि तत्प्रतीकारोपायोऽपि तस्या बुद्धिपथेऽवातरत् । चेन्महाराज्ञी लक्ष्मीस्तमुपायं नामार्गयिष्यत् तदान्यः कोऽपि तादृशं तमुपायं प्रादर्शयिष्यदित्यत्र संशय एव महान् । चतुर्ष्वपि तेषु रावमहोदयः पेशवा बाँदा-नवाबश्चेत्येतौ द्वावपि न तमुपायं प्रदर्शयितुं क्षमावास्ताम्। तयोः प्राक्तनकार्यपद्धत्या तु सिद्ध्यतीदमेव। तृतीयस्ताँत्याटोपीरपि न तमन्वेष्टुं समर्थ आसीत्।

यतो हि सः स्वयमेव वक्ति :—राज्ञ्याः अभावे न तमुपायं कोऽप्यन्यो ज्ञापयितुं शक्नुते स्म । तदुपायबोधनार्थन्तु वयं राज्ञ्याः कृते पुनः पुनः कृतज्ञतासहितान् धन्यवादान् व्याहराम: । यादृशं साहसं यादृशञ्च धीमत्त्वं तदानीन्तने कालेऽपेक्षितमासीत्तादृशं तत् तद् राज्ञ्यामेव व्यराजत । तस्यां स्वशत्रुम्प्रति द्वेषधीः, निर्यातनायाः प्रतिशोधस्य च निशित उत्कटाभिलाषो हृदयेऽजस्रप्रज्वलितवह्निराजीवनं संख्याय स्वसमर्पणमित्येतदादीनि प्रबलानि कारणानि विदिद्युतिरे; तानि तां तं मार्गमाश्रयितुमबाधन्त । तदध्वनि या आपदोऽविद्यन्त ताः सा सम्यगज्ञासीत् । प्रथमं कामं सा जयं लभेत परमन्ततो गत्वा तस्याः पराभवो निश्चित इत्येतदपि सा समीचीनतया विवेद । सा स्वकीयेषु कार्यकर्तृषु पेशवाप्रथितवीरे च गुरुतरं भारं निदधाति स्म । सर्वमपि सम्यक् सा पर्यालोच्य यमुपायं दर्शयाञ्चकार तमुपायं तत्सहचरा गोपालपुरे समशिश्रियन्निति निःसन्दिग्धतापूर्वकं वक्तुं सुशकम् ।

महाराज्ञ्या दर्शितां युक्तिं पेशवान्वमूमुदद् भृशम् । ताँत्या टोपीः पेशवा च द्वावपि राज्ञीं प्रशशंसतुः । राज्ञ्याः प्रस्तावे सति पारिते, तत्क्षण एव गवालियरे आक्रमणं कर्तुं सेना प्रचक्रमे ।

अत्रेदमुल्लेखनीयमस्ति यच्चत्वारिंशदधिकाष्टादशशततमेशवीयाब्दे आंग्लपराजितेन सिंधियानरेशेण जयाजीरावेणांग्लेषु सन्धिः कृत आसीत् । तस्मात्समयाद् वस्तुतः स तदधीनतां गत आसीत् । सोऽत एव स्वातन्त्र्यसंग्रामस्य वीरान् लक्ष्मीराज्ञी पेशवाप्रभृतीन् सर्वथैवावाजानात् । तदा युद्धं प्रावर्तत । सेन्धिया पराभूतोऽभूत् । गवालियरे तत्रत्ये च दुर्गे स्वातन्त्र्यसंयुगशूराणामधिकारोऽजायत ।

पेशवा तं विजयमवाप्योदमाद्यत । स तस्मिन् समये करणीयं कार्य्यं व्यस्मरत् । देशस्य शत्रव आंग्लाः सन्ति ततो बलीयांस इति सः स्मृतिपथाद् व्यभ्रंशयत् । राज्ञी लक्ष्मीः बभूवातिदुःखदुःखिता । सा निपीड्यमाना दूयमाना च पुनः पेशवामचेतयन्नितरां सा । "नायमनेहा वर्तते सुखविनोदानाम्; परमस्ति योद्धुं सज्जायाः" तमचकथत् । सा च तं

"संधियानरेशस्य कोशागारः सेना च भवन्निध्नतायां स्तः; चेन्नैतयोः सदुपयोगो विहितस्तदा सर्वाशा पांसौ परिणतः स्यादि" ति निजगाद। "आंग्लाः सन्ति धूर्ता उद्योगिशिरोमणयः; कदा तेषामाक्रमणं स्यादिति न विदितम्। एषः प्रमादोऽवश्यं विनाशयिष्यति; भवन्त इममामोदं प्रमोदञ्च हित्वा युद्धार्थं समुचितदृढतरोपादानानि संगृह्णन्तु। सेनां सन्नद्धां कुर्वन्तु। तस्या वेतने वृद्धिं विदधतु; प्रोत्साहयन्तु च नानोपायैः स्वकीयान् सेनायाः वीरान्। नास्ति विनोदार्थं समयं एषः। कठिनतयैवानुकूलः समयः कार्यंसिद्ध्यर्थं प्राप्यते। अतो भवन्तो युद्धार्थं सर्वविधामपेक्षितां सामग्रीं सञ्चित्य भवन्तु युद्धोचितसर्वसाधन-क्षमतासम्पन्नाः" इत्येतैः शब्दैः पेशवावीरेन्द्रं प्रेरयामास सा।

परं राज्ञ्यास्तत्कथनस्य न कोऽपि प्रभावः पेशवोपरि, अज्ञत्वात् तस्य निपपात। सः पूर्ववदानन्दे विनोदे च निलीन एवादृश्यत। ताँत्याटोपीश्च स्वां सेनां बलीयसीं मत्वावलेपावलिप्तः समतिष्ठत। इतस्तु दशेयमवर्तत परं ततः सरह्यूरोजो जनरलो नैपियरश्च नितान्तनिशितगत्या गवालियरं यातुं प्रचक्रमाते। तत्कालवर्तिनो लॉर्डकेनिंगस्य स्वीकृतिमधिगम्य ६-६-१८५७ तमदिनाङ्के सर ह्यूरोजो, यस्तत्र गन्तुं सन्नद्ध आसीत्, गवालियरं कालपीतः प्रतस्थे।

तदानीं मध्यभारतस्य राजनीतिकाभिकर्ता सर रॉबर्टहेमिल्टनो गवालियरस्य चांग्लावधाता (रेजीडेंटः) मेकफरसनश्च सर ह्यूरोजेन सहास्तामतोऽसौ युक्तमनुकूलञ्च समयं परामर्शाय प्राप्तुमशक्त्। ११।६।१८५७ तमदिनाङ्के इन्दौरस्य सकाशे स्टुअर्टाधिनायका सेना च मिमेल। आंग्ला अतः गवालियरसन्निधिगामिमुरारस्थस्कन्धावारमाचक्रमिरे। पेशवासीदांग्लानामस्मिन् गतिविधावनभिज्ञः। आंग्लीयायां सेनायामागतायां सत्यां पेशवामहाभागस्य नयने उन्मीलितेऽभूताम्। स योद्धुं ताँत्याटोपीमादिदेश। सेना च पेशवीया रणक्षेत्रोन्मुखी बभूव। सर ह्यूरोजस्तु पूर्णां सज्जां विधाय भीषणोत्कटबलमादाय समागत आसीत्। सः पेशवा-सेनायाः उपरि परम-

रंहसाक्रमणञ्चकार। अतः पेशवासेनोद्विविजे। तस्मिन् काले यद्यपि सेंधियानरेशस्य सेनाँग्लेषु नितरामेव द्वेषं घृणां जुगुप्साञ्च निदधौ परं तथाविधायां सत्यामपि तस्यां, महत्त्वपूर्णेषु स्थानेषु कृताधिकारत्वात् सरह्यूरोजस्य, सांग्लसेनां भयङ्करप्रस्फोटवृष्टिभिर्नापकर्तुं प्रबभूव। आंग्ला मुरारे स्वाधिकार स्थापने सफला अजायन्त।

इत आंग्लसेनान्यो गवालियरं वशीकर्तुं प्राणपणेन प्रायतिषत, ततो रावसाहबपेशवा सैन्यसज्जायां रतो बभूव; ताँत्याटोपी च स्वसेनां व्यवस्थापयितुं समलगत्। पदे पदे शतघ्नीधरा निर्धारितेष्वयनेष्ववस्थिता अजायन्त। महाराज्ञी लक्ष्मीश्च सैनिकवेशं परिधाय योद्धुमुदयतत। स्वकीयं कुशलं हयमध्यारुह्य परमप्रियरत्नतरलत्सरुकरवालेन पाणिमलङ्कृत्य स्वकीयायां सेनायां युद्धोत्साहं सञ्चारयन्ती तस्यां युद्धोचितं दर्पं सृजन्ती च सा वीराङ्गना समुत्तस्थौ। तस्यास्तद् भव्यं स्वरूपं, गम्भीरं स्वरं सुदृढं स्वाभिमानञ्च सम्प्रेक्ष्य तदीयसैनिकानामन्तः करणान्याजसोत्साहेन दर्पेण चाश्लिष्टान्यभूवन्। ते वीरसैनिकाः सवेगमावेशाविष्टा भवन्त आंग्लान् पेष्टुं प्रावर्तन्त। तस्मिन् काले राज्ञ्या लक्ष्म्याः देदीप्यमानं तेजोमयं स्वरूपं, मूर्ध्ने च प्रतापाग्नेर्धूमधारामिव तदीयां चञ्चच्चारुचञ्चलतां विकिरन्तीमसिलताञ्च विलोक्य, अहह, कस्य न हृदयं वेपाञ्चक्रे।

अस्मिन्नायोधने राज्ञी लक्ष्मीः यमलौकिकं पराक्रमं प्रकटीचकार, स वीरत्वेतिहासे स्वर्णाक्षरैर्लेखनार्होऽस्ति। सा तस्या वीरसेना च शत्रोः शतशः सैनिकान् धराशायिनश्चक्रतुः। सा तदा स्वयुद्धविदग्धतया स्वकीयवीरानीकिन्याः स्वान्ते वीरतां समचीचरत्। तस्याश्च प्रतिस्नायु नवजीवनं सा प्रावीवहत्। अनेकेषु महासंग्रामेषु लब्धविजया आंग्लसैनिका अपि राज्ञीलक्ष्म्याः अद्भुतं शौर्य्यं तेजश्च दिव्यं सम्प्रेक्ष्याश्चर्यिता अभूवन्। तत्र तदा सम्परायापेक्षिण्याः स्तुत्यायाः वीरतायाः पराकाष्ठां सा राज्ञी प्रादीदृशत्। राज्ञ्याः वीराश्चाश्वारोहिण आवेशाविष्टा भवन्तो भृशमेव भयङ्करं तुमुलमररचन्।

ते स्वस्वचन्द्रहासं चकासयन्तः प्राणेष्वपि ममत्वं मुञ्चन्तो विजयश्रियाः प्राप्त्यर्थमांग्लारातिषु परमवेगभाजा बलेन न्यपप्तन् । तेषामुद्भटानां भटानां पुरः सिताङ्गा वीरा जीवनेऽपि निराशाः अजायन्त । तस्मिन्नेवान्तराले कर्नलरेन्सः कर्नलपेलीश्चैकां नवतरलतारुण्यबलजुषां भटानां वर्चस्विनीं वरूथिनीमुपासीसरताम् । राज्या लक्ष्म्याः शौर्यवन्तो भटाग्रण्यश्चतुरस्रमागत आंग्लसेनाभिराक्रान्ता अभूवंस्तेषु ते प्राणग्राहिणः प्रहारांश्चक्रुः । तेषामद्भुतयुक्तिजुषां कुत्सितनीतिभृतां कुटिलताकुटिलानामाङ्ग्लानामहमहमिकया प्रवृत्तायाः समन्तान्निपतितायाः पृतनायाः पुरस्तेऽल्पीयांसो भटाः स्वपराक्रमे कथं हि सफलतामधिगन्तुं क्षमा भवितुमर्हन्ति ?

ह्यूरोजो मुरारे पेशवासेनामारुध्यायनद्वये स्वाधिकारं स्थापयामास । एषा दुःस्थितिर्हि राज्याः सेनायामाकुलतामुद्विग्नतां च व्यकिरत् । परं राज्या लक्ष्म्याः धैर्यसागरो युद्धनयः साहसमुत्साहञ्च निदधत् समवीक्ष्यत । वीरा भटास्तदीयाः सैन्येऽपि संख्यायां लघीयांसः शौर्य–शस्त्र-सञ्चालनचातुर्याद्यनेकगुणवैशिष्ट्याद् गरीयांस एव समलक्ष्यन्त । सत्स्वपि सहस्रशो वीरेषु हताहतेषु राज्ञी पदातीनां पृतनायां शस्त्रेषु च स्वकीयेष्वाशां निबबन्ध । परमन्ततो गत्वा साप्याशा व्यगलत् । स्वकीयं प्रियमाभासमानञ्चन्द्रहासं विहाय नान्यस्य कस्याप्याश्रयं सा प्रेक्षाञ्चक्रे ।

अन्त्यं जन्यं हि राज्याः गवालियरेऽघटत । तत्रांग्लानां समरविशारदा सेना तां सर्वदिशात आरुरोध । तस्याः सेना छिन्ना भिन्ना च भूत्वा इतस्ततः सञ्जाता । सम्प्रति कतिपयसेवक-सेविकास्तामन्वगच्छन्त्योऽवालोक्यन्त । सा तदैकाकिन्येव विशालायाः सुसज्जितायाः आंग्लसेनायाः मध्ये तुमुलं प्रविदारणं तन्वन्ती समदृश्यत । तदा सा येनाद्भुतशौर्येण युयुधे तदिव वीरत्वं नारीजगत्याः इतिहासे कदाचिदेवाङ्कितं भवितुमर्हेत् । आंग्लसेनासोऽनरविध्वंसकभयङ्करानेकविधप्रहरणयुक्ता । तस्याः निर्देशकाश्चासन् समरशौण्डाः प्राप्तानेकयुद्ध विजयाः । आंग्लसेना सा तामेकाकिनीं वीरबालां निहन्तुं प्राय-

स्यत्। महाराज्ञी रणनीतिनिपुणतया चिरमयुध्यत; बहूंश्चाांग्लसैनिकान् नाकमगमयत्। परं तस्याः सर्वविधसाधनसम्पन्नायाः सेनायाः पुरः कर्कशकर्मणामनीतिनिष्ठानां सेनाधीशानाञ्चाग्रे कं कालं यावत् तस्या वीराङ्गनायाः स्थितिः सम्भवासीत्! सा तस्माद् विशङ्कटात् सैनिकव्यूहान्निर्गन्तुमचेष्टत परमसकृत् कृतेऽपि प्रयासे न साफल्यमाससाद। अन्ततो गत्वा स्वासूनप्युपेक्ष्य खड्गं स्फुरितं विदधती स्वाल्पानुचरैः साकं तस्माद् व्यूहाद् बहिराययौ। परं दुर्नियतिरिहापि न तां मुमोच। ब्रिगेडियरः स्मिथः कतिपयैः शूरप्रवरैरश्वारोहिभिः सह तामन्वधावत्। अश्वारोहिणो हि महाराज्ञीं धर्तुं हन्तुं वान्वचलन्। महाराज्ञीं लक्ष्यीकृत्य तैर्गोलिका क्षिप्ता। सा तया विद्धाभूत्। अतः साश्लथत। परं तामपि दशां गता धृतपुरुषवेशाभिः स्वसेविकाभिर्वीराङ्गनाभिरनुसृता युयुधे। ताः सेविका वीराङ्गनास्तदा प्राणेष्वपि मोहं विहायाश्चर्यंकरीं वीरतां दर्शयाम्बभूवुः। राज्ञी लक्ष्मीः स्वासिकौशलेन पुरः उपससार परं तदन्तराल एव "मृताहं मृताह" मित्येतं शब्दं स्वदास्याः निशम्यैकस्याः राज्ञी पुनः दूयमानहृदया भवन्ती निववृते। सा सरयं निवृत्य साटोपं दासीहन्तारमांग्लसैनिकं कीनाशनिकेतनं सपदि गमयाञ्चकार। सा पश्यतामेव तेषां हयारोहिणां पुनरपि समर्थासीदग्रे प्रयातुं परमेकां क्षुद्रां कुल्यां निकषा तदीयः कृताभिनिवेशस्तुरङ्गो न तिलमपि पुरश्चचाल। एतस्मिन्नेव समये निर्घृणा अश्वारोहिण आगताः। सा तदा पुनर्युध्यमाना तत्प्रहारं व्यर्थतामनैषीद् योधांश्च कतिपयानाहतान् व्यदधात्। परमन्ततो गत्वांग्लैराहता जातातस्तच्छरीरमधोऽपप्तत्। परं सपदि तदीया विश्वासपात्रानुचरास्तच्छरीरं पर्णशालामेकामानिन्युः। तत्र पर्णशालायां सान्त्यं श्वासं गृहीत्वा नाकं जगाम। तत्रैव तस्या वीररमण्यास्तेऽनुचरा अनुचर्यश्च ताः अन्त्येष्टिं विदधुः।

"हिस्ट्री ऑफ दी इण्डियन म्यूटिनी" ग्रन्थे कर्नलमालेसनेन राज्ञ्याः प्रकृष्टतरं शौर्यं विचित्रञ्च वीरत्वमधिकृत्य लिखितम्—

"विद्रोहिण्याः अनीकिन्याः प्रमुखेषु वीरवरेषु राज्ञी लक्ष्मीः परमधैर्य्यवती वीरयुवतिरासीत्। सा विद्रोहिणामात्मासीत्। सा सत्परामर्शप्रदाने, युद्धार्थं प्रोत्साहने च परमविदग्धा बभूव। पुरुषवेशं दधाना राज्ञी लक्ष्मीः स्वसेनायामसीममुत्साहं सञ्चारयन्त्यलक्ष्यत। यदांग्लसेना कथमपि पुरः उपसरणे यतमानावालोक्यत, यदा च स्मिथस्तुरङ्गमारोहिणः प्रहर्तुमन्वज्ञासीत् तदा झांस्या राज्ञी वीरतया ससाहसञ्च झटित्यांग्लसैनिकेषु प्रतियोगितां कर्तुं समुदयतत। यदा राज्ञ्येकाकिन्येवावर्तत अश्वश्च तदीयः स्कन्धावारं निकषा नदपारीकरणप्रयासे चस्खाल; तदैव तामनुधावन्नश्वारोही निजघान। राज्ञ्याः सहचरास्तच्छरीरं तस्यामेव यामिन्या मग्नौभस्मीचक्रुर्येनांग्लाः राज्ञ्याः मृतं देहं स्प्रष्टुं शेकुरित्येतद्दर्पमपि कर्तुं न क्षमाः स्युः।

**जज्ञे क्व लक्ष्मीसदृशीह राज्ञी**
**वीराङ्गना भारतभूविभूतिः।**
**सम्मर्द्य शत्रून् बलदारुणान् या**
**राष्ट्रस्य कीर्ति व्यतनोद् धरित्र्याम्॥**
**प्रीणाति सः कं न हि देशभक्तं**
**प्रौढं प्रकृष्टं व्यदधात् प्रयासम्।**
**वीराङ्गना वैरिवनानलो यं**
**स्वातन्त्र्यहेतोर्भरताचनेः सा॥**
**क्रूरारातिश्वेतकायप्रगाढ-**
**ध्वान्तस्तोमध्वंसनादित्यराज्ञी।**
**लक्ष्मीः झाँस्या वीरतायाः पयोधिः**
**भूत्वा दुर्गा जन्यभूम्यां विरेजे॥**
**दृप्यद्विरोधिहरिणावलिसिंहभामा**
**भीष्मव्रतातिशयदारुणशक्तिदीप्ता।**
**सन्न्यायनिष्ठजनचातकमेघमाला**
**विद्योतते स्म भुवि या परिणयतेसा॥**

**पेशवानाना—**

पेशवानाना द्वितीयवाजीरावपेशवात्मजो ब्रिटिशसत्ता

मुत्सादयितुं सशस्त्रां क्रान्तिमाश्रित्य देशव्यापि संगठनमकार्षीत्। एतद्गुरुतमकार्यार्थं तदीयोऽनुजो बालारावसेनानीस्ताँत्याटोपी भांसीराज्ञीलक्ष्मीश्च प्रमुखतया तम्प्रति स्वकीयं सक्रियं सहयोगं प्रायच्छन्। वस्तुतोऽसौ सप्तपञ्चाशदधिकाष्टादशशततमेशाब्दियाब्दोद्भूतस्य क्रान्तिकृत्सम्परायस्य सञ्चालकेष्वग्रणीरासीत्। क्रान्तिकारिणीभिर्ध्वजिनीभिरांग्लसैन्ये सति विनाशिते, कृते च सति तस्मिन् पराभूते स्वातन्त्र्ययोद्धारः कानपुरं यदा स्वनिघ्नतायामनैषुस्तदा पेशवेतिप्रतिष्ठया तं सम्मानयाञ्चक्रुः।

दुर्नियतिर्यदा तस्य पेशवामहाभागस्य भाग्यं परावर्तयामास; आंग्लसैनिकाश्च यदा तदीयाखिलापि वरूथिनीमच्छैत्सुरमैत्सुश्च तदासौ कतिपयैः स्वसहचरैः सार्धं नेपालराज्यसीमायां प्रविवेश। स तत्र रूपं परिवर्त्यात्रासेति पूनास्थेतिहाससंशोधकमण्डल-प्रकाशिते ग्रन्थे प्रकाशितात् तत्सम्बन्धिनः पत्राद् ज्ञायते।

श्रीमद्वीरवरसावरकरेण स्वकीये "*War of Indian Independence*" ग्रन्थे तमधिकृत्यालिख्यतेदम्।

"नानापेशवा १८५७ तमेशवीयाब्दक्रान्तेर्मस्तिष्कत्वेन मतोऽभवत्। स तु चिरादेव क्रान्त्यर्थमात्मानं गम्भीरसुदृढविचारे न्यपीपतत्। असावतः परतोच्चश्रेणीयान् सुदृढायसकरवालान् आधुनिकशतघ्नीप्रभृतिभीषणप्रभूतायुधानि च संजग्राह"।

"स दिल्लीतो मैसूरं यावत् स्वातन्त्र्यायोधने भागमादातुं स्वकीयान् राजप्रणिधीन् बहूनां भूपानां सकाशे प्रजिधाय। सः स्वयमपि त्रिविधा विभिन्नाः शृङ्खलाः संयोजयितुं तत्तद्बहुलस्थानान्ययाञ्चक्रे। स्वानुजेन बालारावेण परामर्शप्रदात्राजिमुल्लाहेन सह क्रान्तिकर्माण्यनुष्ठातुं दिल्लीमव्राजीत्। तत्र च मुगलसम्राजि बहादुरशाहे मिमेल सः। समग्रामपि व्यवस्थां विलोक्य निरीक्ष्य च ततोऽम्बालामयासीत्। अम्बालातः स लखनऊमियाय; तत्र पौरेषु सोऽगाधमुत्साहमुत्कृष्टञ्चोद्दमासाहसं समचीचरत्। लखनऊ स्थिता राष्ट्रानुरागा जनास्तं

सोत्साहं प्रत्युद्ययुः प्रशंसाभिश्च ते तमुपश्लोकयाञ्चक्रुः। ततः सः कालपीमसेधीत्। तत्र स जगदीशपुरप्रथितक्रान्तिकारि कुमारसिंहेऽमेलीत्। तदनन्तरं स राष्ट्रपदस्थाखिलस्कन्धावारानद्राक्षीत्। अन्यानि चानेकानि स्थानानि यात्वा प्रधान-प्रधाननेतृषु सम्पर्कं संस्थाप्य स भाविसंयुगयोजनायाः कार्यक्रमं निश्चितं चकार तत्पश्चादसौ मासेऽप्रेले १८५७ तमेशवीयसम्वत्सरे ब्रह्मावर्तं डुढौके"।

सः स्वातन्त्र्यसंग्रामे नितान्तोल्लेखनीयप्रशंसनीय-कार्याणि व्यदधात्। इयेष च स्वदेशमांग्लबन्धनादुन्मुक्तं विधातुं परं देशे भारते न विधिरनुकूलो बभूव। स तस्य च साहाय्यकर्तारो न साफल्यमविन्दन्।

**ताँतियाटोपी–**

नानामहाभागस्य देशभक्तमूर्धन्यस्य क्रान्तिकारिण्याः सेनायाः प्रधानः सेनापतिरासीत् ताँत्याटोपी। सेनासञ्चालने तेन महद् यशोऽर्जितम्। निगूढाक्रमणेऽपि तेन महती कुशलता प्राप्ता कृतासीत्। तमुद्दिश्य कश्चिद् आंग्लो विद्वान् लिखति—ऋषिभूतवसुविधुसम्वत्सरे प्रवर्तमानायां क्रान्त्यां ताँतियावीरोद्भटभटस्तावद्भुतसैनिकप्रति पर्यस्पन्दत। स तत्कालगामिसेनानायकेषु बभूवाद्वितीयः सेनासञ्चालकः। मराठानां (महाराष्ट्रप्रदेशीयजनानाम्) युद्धपद्धतिं सः पर्यपूपुषत्।

ताँतियाटोपीमधिकृत्य श्रीसावरकरो लिखति :—

"आंग्लन्यूनकठोरारातौ सति तु स महतो राज्यस्याप्याधारशिलां स्थापयितुं महाराष्ट्रशक्तेश्च पुनर्निमाणं कर्तुं क्षम आसीत्"। आदौ ताँतियाटोपी ब्रिटिशसेनां परमोत्कटपराभवं निनाय। सेना आंग्लीया पुनः पुनः गतचेतना बभूव। सत्यमिदमनेकांग्रेजलेखकैर्मुक्तकण्ठतयोररीकृतम्। परं कानपुरे संख्ये स बभूव पराजितः। ततश्च स आंग्लसेनाया कुटिलव्यूहादात्मानं रक्षितुं स्थाने स्थाने बभ्राम। तस्य सा भ्रमणचातुर्यपि वस्तुतोऽस्तीतिहासस्याद्भुतैव घटना। तं धर्तुमांग्लसेना समन्ततः प्रयतमानासीत्। परमनेकान् मासान् स वैदग्ध्येन

स्वं गोपायाञ्चकार। अन्ततोगत्वा स यदा स्वरक्षायां निरुपायो बभूव तदा सः स्वविश्वसनीयं सखायं राजानं मानसिहमाशिश्राय। वत, स राजा तं विप्रालभत आंग्लेभ्यश्च तं समर्पयामास।

सैन्याधिकरणेऽभियोगः प्रचालितोऽभूत् तत्र तांतियाटोपी प्राणदण्डं प्राप्प। स निर्भयो भवन् प्राणहारिणि शूलफलकेऽभवदारूढस्तदा सः "मम पिता कानपुरमधिवसति, न सः पीडनीयो यतो हि नास्मिन् विद्रोहे तस्य हस्तो मनागपि" इत्येतां स्वामिच्छामभिव्याञ्जीत्।

**कुमारसिंहः**

शाहबादमण्डलान्तर्गतजगदीशपुराभिधपुटपत्तनस्य भूमिधर आसीत् श्रीकुमारसिंहः। जनरलडायरस्तं भूमिधरत्वाद्भ्रंशयति स्म। स निराश्रयो भूत्वा चिरसमयं कान्तारेषु बभ्राम। आसीत् स महान् वीरः पुरुषसिंहः। स्थविरतायामपि तारुण्यशोणितप्रवाहस्तदीयस्नायुषु प्रवहमान एव सततमवाप्यत। सः स्वशत्रुमपकर्तुं समयसमुचितावाप्तिचिन्तायां निलीन इतस्ततो विचरन्नेवालक्ष्यत। निर्यातनाभावना भीषणा भवन्ती तस्मिन्नितरामिन्धाञ्चक्रे। हन्त, तेन सह तदीयं कलत्रं पुत्राश्च तदीयाः क्षुधां तृषञ्च सहमाना वने वने आहिण्डन्त। तस्य विपदां परमवसानं नादृश्यत। सहमानोऽपि स ताः कठोरापदः "कथं मम देशः पारतन्त्र्याद् विमुक्तः स्यादि"-त्येतस्मिन्नेव विचारेऽरमत। अन्ततोगत्वा देशार्थं स्वजीवनमपि स्वातन्त्र्ययुद्धे होतुं स निश्चिकाय।

कुमारसिंहस्यानुजोऽमरसिंहस्तन्निश्चयमनुमेने सहर्षम्। कुमारसिंहः स्वानुजेन सार्धं जगदीशपुरमरिकरपञ्जरादुन्मोचयितुं यत्ने समलगत्। पश्चिमीयबिहारप्रदेशस्यारण्येषु सः शोणनदस्य तटे विचरन् प्रत्यर्थिनो निर्मलतामवगन्तुं प्रत्यैक्षिष्ट। एतस्मिन्त्रेवानेहसि लखनऊमुत्सादयितुं सेनाः सम्प्रेष्यन्ते आंग्लैरित्येतमुदन्तं शुश्राव सः। अतः सः पार्श्ववर्तिषु पत्तनेषु विकीर्णान् क्रान्तिकारिणः संगठितान् विधाय सैनिकत्वेन तान् सर्वान् सन्नद्धीकृत्य आजमगढमारोद्धुं प्रचक्रमे।

१७-३-१८५७ तमदिनाङ्के बीवाग्रामस्य क्रान्तिकारिणोऽपि कुमारसिंहस्य पृतनायां मिमिलुः। एताः सर्वाः सेनाः संभूय अट्रेलियादुर्गाभ्यर्णे आवासं विदधुः। यदांग्ला अज्ञासिषुरिदं मीलमेनस्त्रिशतसैनिकानादाय पदातीन्, तुरङ्गारोहिणाञ्च बहूनां सेनां प्रगृह्य शतघ्न्यौ च द्वे पुरस्कृत्य अट्रेलियां प्रातिष्ठत। प्रारम्भे तु कुमारसिंहः पराजित इव प्रातीयत परं सोऽवसरमधिगम्य सिंह इवोन्मत्तः स्वसेनया सह आंग्लसेनायामापपात। गोलिकाजस्रवृष्ट्या चतुरस्रभागेषु स आंग्लसेनां छिन्नतां नयंस्तामारुरुधे। आंग्लसेना काठिन्येनात्मानं रक्षितु प्रबभूव। सः कुमारसिंहो निगूढतया चांग्लान् अक्लामयत्। सोऽजस्रमांग्लसेनां भृशमकदर्थयत्; सा न क्वापि श्वासमपि ग्रहीतुमपारयत्। बुभुक्षितः केशरीव स आक्रमणमसकृद् विधाय तामांग्लसेनां व्यध्वंसयत्। आंग्लसेनाया भूयांसः सैनिकाः हता अभूवन्। येन केनापि विधिना पुरोभागी मिलमैनः पलाय्य आजमगढमाययौ। तत्र स वाराणसीत आगतां सेनां लब्ध्वाऽऽश्वसिति स्म। कुमारसिंहः पुनः कठोरप्रहारं सैनिकेषु चक्रे। सेनानायकः कर्नलडैम्स आजमगढदुर्गे स्वमूणुनाव। ततो विजयदुन्दुभिं वादयन् सः प्रतस्थे। परं ततः किं किं तस्मिन्नघटत कीदृशञ्च तस्यावसानमभवदित्येतत् सर्वं तमसावृतमेव।

**अजिमुल्ला खाँ**

अजिमुल्लाखाँ स्वातन्त्र्यसंग्रामस्य प्रधाननेतृष्वन्यतमो नेता बभूव। सोऽपि तीव्रां मेधां श्लाघ्याञ्च वीरतामाश्नुत। स्वातन्त्र्यसमरस्य कृते प्रथमा योजना येषु महामस्तिकेषूदपद्यत तेषु तदासनमत्युदग्रमासीदिति श्रीसावरकरो लिखति—

"अजिमुल्लाखाँमहाभागस्य बाल्यं दारिद्र्यनिपीड्यमानमवर्तत। परमासीत् सः साहसोत्साहशौर्य्यसत्प्रज्ञासुशोभितः। आंग्लसान्निध्यात् सोऽचिरेणैव आंग्ल-फ्रेञ्च-भाषाया ज्ञानमानर्ज। सः धाराप्रवाहेण तस्यां भाषितुं पटीयान् बभूव। कानपुरे सः शिक्षको जातः। तस्य विद्वत्तायाः प्रसिद्धिरप्रथत। नानामहाभागस्य राजसभायां गच्छतानेहसा तस्य प्रवेशोऽजायत।

स तत्र राजसभायां स्वप्रभावेण महान्तमादरमविन्दत्। नानामहोदयो महत्त्वमयकृत्येषु तस्मात् सम्मतिं ग्रहीतुमारेभे। न तन्महत्त्वमयकार्यमासीद् यत्र तस्य सम्मतिर्नागृह्यत। १८५७ तमेशवीयाब्दे स नानामहाभागस्य प्रतिनिधिर्भूत्वा इंगलेण्डं प्रति सम्प्रेषितोऽभूत्। तत्र स ब्रिटिशसर्वकारस्य पुरस्तत्प्राप्तव्यं प्रास्तावीद् श्रीनानामहोदयस्य बाजीरावदत्तकपुत्रत्वाद् बाजीरावकृन्मृत्युपत्रमनुहृत्य सः (नानाश्री) पूर्णतया निवृत्ति-वेतन—(पेंशन) प्राप्त्यधिकारी वर्तते इत्येतन्निवेदित मभवत् परं न सः प्रयासः सफलो जातः। तस्य प्राप्तव्य-निवृत्तिवेतननिमित्तेन यदभाषत स तत् तदीयाया मेधाया उत्कृष्टत्वं व्युत्पत्तेश्च तीव्रत्वं प्रकटीकरोति। तत्र सः स्वकीयं प्रभावं प्रातिष्ठिपत्; महिलास्तु विशेषतो बभूवुस्तत्प्रभावा-वर्जिताः। ता यानि पत्राणि तत्सेवायां प्राहिण्वंस्तैस्तथ्य-मिदं विदिततामभ्युपैति। इंगलेण्डान्निवृत्य स ब्रिटिशशासन-मुत्पाटयितुं महत्याः क्रान्त्याः समायोजने स्वमस्तिष्कं न्ययूयुजत्। प्रारम्भेऽसौ सफलतां गत इव प्रातीयत परमाङ्गलशासनस्य बलवत्तरत्वात् तदीयसंगठनस्य गरीयस्कत्वात् सैन्यायुधादि-विविधोपकरणानां भूयस्कत्वादुत्तमत्वाद् दैवानुकूलत्वाच्च को हि तदग्रे स्वप्रयासे सफलो भवितुमर्हति?

**मौलवी अहमदशाहः**

१८५७ तमेशवीयाब्दे स्वातन्त्र्यसंग्रामे मौ० अहमदशाह उल्लेखनीयां सेवाञ्चकार। सोऽपि महान् कुशलः सेनानायकः प्रतिभावान् वक्ता बभूव। सः स्वकीयया प्रतिभयावदातया वक्तृतया अवधप्रदेशे सर्वतः प्रथमां हि स्वतन्त्रताज्वाला-मज्वालयत्। जने जने स नवमेवोत्साहमोजश्च समचारयत्। ब्रिटिशसर्वकारस्तमधरत् प्राणांस्तस्य ग्रहीतुं सः शूलफलके तमध्यारोहयत् परं स्वतन्त्रताभक्तवीरसैनिकास्तदानीं सपदि तत्फलकादपसार्य तं गोपायाम्बभूवुः।

अहमदशाहोऽसकृत् स्वां वीरतां कुशलताञ्च प्रकटी-कृत्य तत्कालवर्तिस्वातन्त्र्ययुद्धमुददीपयत्। सः प्रशंसनीयां नितरां नेतृत्वक्षमतां न्यदधात्। क्रान्त्यां तदानीन्तन्यां तस्य

संस्तवः समये समये सम्प्राप्तोऽभवत्। वस्तुतोऽसावासीन्महान् स्वातन्त्र्यभक्तप्रवरयोद्धा।

१८५७ तमेशवीयसम्वत्सरे देशमांग्लशासनादुन्मुक्तीकर्तुं यन्महान्दोलनं देशे समुदतिष्ठत्, तदान्दोलनं सत्वरमेव सर्वमपि भारतमभिव्याप्य भीषणं भूत्वा विजजृम्भे। सः स्वातन्त्र्ययुद्धपावको देशस्य न काप्यासीद् दिग् यस्यां न चकासाञ्चक्रे। प्रारम्भे तु स्वातन्त्र्यमासादयितुं युध्यमाना योधाः विजयमवाप्नुवन्। दिल्ली-मेरठ-कानपुर-गवालियरप्रभृतिस्थानेषु विजयपताकोच्चैरुद्धुन्वाना समलक्ष्यत; पेशवा तु कानपुरे भारतस्य पेशवैवे(अधीश्वरः)ति समुद्घोषितो बभूव। भारतं भवेत् स्वतन्त्रमिति तदा बलवती भूत्वाशा जनानां हृदि समुत्पेदे। भारतीया विजेतारस्ते युवानः सिताङ्गेषु क्रुद्धा धृतहृदयप्रबलनिर्यातनास्तदा भृशकठोरमानसा भवन्त आंग्लानां नारीः शिशूश्च निजघ्नुः।

उन्मादमन्युप्रतिशोध-शोभादिभावविभाविता स्वातन्त्र्ययोद्धारः परं न तादृशं संगठनं कर्तुमयतिषत येन तेषां शक्तिर्दृढीयस्कतां लब्धुमवसरं क्षमा नाजायत। एतावदेव न तेषां सकाशे पर्याप्तानां साधनानामभाव उदतिष्ठत्। स्वोद्देश्यपूर्त्यर्थं तेषां वाञ्छनीया आसन् पर्याप्ताः सैनिकाः; आधुनिकानाञ्च प्रहरणानां विविधानां ततयः। अत्रत्या राजानश्च भूयांस आंग्लपक्षे सञ्जातास्तेन स्वातन्त्र्यवीरान् प्रति स्वसाहाय्यं प्रददुः। परमांग्लानां स्थितिर्भारतीयस्वायन्त्र्ययोद्धृस्थितेर्विपरीतैवासीत्। आंग्लानां संगठनं बलवत्तरमासीत्; वरूथिन्यो भूयस्यः शक्तिमत्तराश्च अभूवन्। शस्त्रास्त्राणां तु गणनैव का? शास्तृपदेऽपि ते निषण्णा आसन्। इंगलेण्डान्निरन्तरं तेऽपेक्षितसाहाय्यमर्थं साधनानि च विविधानि लेभिरेऽनारतम्। एतद्धेतोर्द्वयोरपि तयोः साम्यमेव किम्? एतादृश्यामपि स्थित्यां निर्बलायां स्वातन्त्र्यभक्ता वीरोद्भटा यद् यावच्च प्रतिद्वन्द्वित्वं यं यावन्तञ्च प्रयत्नमकार्षुस्तत्सर्वमप्यतितरामभिनन्दनीयमेव।

भारतीयाः सेनाचरा यमपि मानवताविरहितमत्याचारं

स्वकीयमल्पीयांसमवसरमवाप्नुवन् सोऽत्याचार आंग्लकृतात्याचारस्य तुलनायां शततमांशगतोऽपि नावर्तत ।

आंग्लसेनाचराः निर्यातनाभावनया प्रेरिता भूत्वा नृशंसतमममानवत्वं दर्शयाञ्चक्रुः ।

ब्रिटिशसर्वकारः स्वातन्त्र्यप्रेमपावनस्वान्तेषु भारतीयेषु सैन्येषु सैन्यनायकेषु जनतायाञ्च यान् दारुणानत्याचारांश्चकार तेषां कस्यामपि सीमायां सन्निवेशनमसम्भवम् । सभ्यंमन्यमानाः अंग्रेजा मानवतायाः महन्ति तत्त्वानि महनीयांश्च सिद्धान्तान् कियत्या कर्कशतयापिषन्निति सञ्ज्ञायते तत्कालोत्पादिताभ्यो घटनाभ्यः । झाँस्यां पञ्चसप्ततिरांग्ला हता अभूवन्; तन्निर्यातनायां प्रतिशोधधियोंऽग्रेजाः पञ्चसहस्रभारतीयान् परमनिर्दयतया शतघ्नीभिर्व्यापादयामासुः । एतावदेव न, तद्धत्याकाण्डानन्तरं झांसी नितान्तकठोरतया तैरलुण्ठ्यत । झांस्यां घटितस्य तस्य निन्दनीयस्य दृश्यस्य नेत्रावलोकितं वर्णनं श्री विष्णुवार्सेकरेण "मांझा प्रवास" इत्येतस्मिन् स्वपुस्तके कृतमस्ति । तदधीत्य रोम रोम रोदिति । दिल्ली यदांग्लैः पुनर्जिता तदा तैस्तत्र यद् भीषणं क्रूरं राक्षसत्वं दर्शितं तद् वस्तुतस्तु इतिहासेऽसितपृष्ठेषु लेखनीयं वर्तते; तदस्ति मानवता-मस्तकघोरलाञ्छनम् । दिल्ल्यां स्वातन्त्र्यसंग्रामसैनिकाः कतिपयानेवाङ्ग्लान् न्यघ्नन्; परमाङ्ग्लास्तत्प्रतिशोधं हृदि निधाय पुर्यां नितरामेव पिशिताशनत्वं बिभ्राणा जनतायांषड्विंशन्तिसहस्रभारतीयानवधिषुः किञ्च भूयसः शूले समारोप्य भूयसश्च कुन्तैरवयवेषु छित्वा व्यापादयामासुः । निरपराधान् पौरान् अपि ते घ्नन्ति स्म । आँग्लाः सैनिकास्तदा चतुरस्रतया 'मारयत, मारयत, मारयत' इत्येतैः शब्दैः सर्वा अपि दिशः पूरयामासुः । दिल्ल्यास्तत्कालवर्तिनः सम्राजो बहादुरशाहस्य चतुर्विंशतिसुताश्चतुष्पथे शूलदण्डग्रन्थ्या अहन्यन्त तैः । तेषां शिरांसि च नगरमध्ये प्रदर्शनार्थं निहितान्यजायन्त । लाहौरे च स्वतन्त्रतानीकिन्यांग्रेजद्वितयमेव व्यापादितं परं तत्र वैरशोधनाय शतशो जनान् आंग्लाः पशुतां राक्षसताञ्च दधाना अहिंसन् । अनेनैव प्रकारेण कानपुर-लखनऊप्रभृतिपुरेषु हत्याक्रियत । तत्र तत्रानेके

निर्दोषा भारतीयाः न केवलं न्यहन्यन्त परं पुनः पुनस्तेऽलुण्ठ्यन्त च। लघुलघुतराः बालकाः स्वातन्त्र्यपताकाग्रहणमात्रेण हा, भुशुण्ड्या अहिंस्यन्त। क्वचित् क्वचित्तु ब्रिटिशसैनिका न नमस्कृताः इत्येतत्कारणाद् जनाः शूलमारोप्य व्यापादिताः। आंग्लसेनापतेर्नैलस्य सैनिकास्तान् सर्वान् भारतदेशभक्तान् स्वातन्त्र्योपासकभटान् अक्षणिषत ये तैरगृह्यन्त। उदीच्यां प्रतीच्याञ्च स्थितेषु प्रदेशेषु आंग्लसैनिकाः क्रूरतायास्ताण्डवं वितेनुः। शतशः सहस्रशश्च भारतौकसस्ते घोरनिर्दयतया-कृन्तन्। तत्कृत्तया तया व्यापिकया हिंसयाऽनेकशो ग्रामाः उत्सादिता अभूवन्। तत्रत्याः सर्वेऽप्याबालवृद्धा मृत्युं नीताः अतस्ते ग्रामाः जनशून्या अजायन्त।

ते दुष्टा आंग्ला एतावन्ति निन्द्यानि क्रूराणि कर्माणि कृत्वापि न तुतुषुः। ते हिन्दून् मुसलमानांश्च भ्रष्टान् कर्तुमारेभिरे; प्राणग्राहिफलकारोपणात् प्राङ्मुसलमानानामाननेषु वराहपिशितं प्रसभं निवेशयाञ्चक्रुहिन्दुजनानामपि वदनेषु गोपललं समावीविशन्। वस्तुतस्तु तत्कृतानामत्याचाराणां कथनं क्व सम्भवम्! नांग्लाः स्वातन्त्र्यायोधनभागग्राहिणं कमपि भूरमणं मुमुचुर्न च नवावमेव। झाझरस्य नवावश्चत्वरचतुष्पथगे शूलरज्जुग्रन्थिद्वारेण ग्रीवायां निबध्य व्यापादितस्तैरांग्लैः। यत्र यत्र स्वातन्त्र्याय जन्यमघटत तत् तत् स्थानं कृत्स्नतया विनाशितम्। दिल्ल्यां विश्रुतो नेता हकीमो राज उद्दीनोऽपि न त्यक्तः, सोऽपि गोलिकाप्रहारेण पञ्चत्वं प्रापितः। तस्यानुजोऽप्यहमदहुसेनखाँ तामेव दशां नीतः। टोंकस्य तलियारखाँ, तस्य चोभावपि तनूजौ समेषामपि पुरः प्राणहारिफलकेन व्यापादिताः। यादृशी नृशंसतामयी प्रचण्डहिंसा आंग्लैः कृता न तादृशी कदाचित् क्वापि भूमण्डलेऽघटत।

आंग्लाः भारते स्वकीयमन्यायमयं शासनं स्थापयितुं समर्थाः समजायन्त; ते यदृच्छयात्याचारान् विदधुर्ग्रामांश्चादहन्; लक्षशो जनान् व्यापीपदन्; दुष्टतां यां यामपि तेऽचिकीर्षंस्तां भृशमेवाकार्षुः। परमिदं सर्वं कस्मात् कारणादांग्लाः कर्तुं क्षमा अजायन्त इत्यत्र यदा दृष्टिः क्षिप्यते तदा विनायास-

मेवास्माकं समक्षेऽस्मदीयानामेव बहूनां भारतीयानां स्वार्थबुद्धिः समुपस्थिता भवति ।

राष्ट्रियाया एकताया राष्ट्रियायाश्च चेतनाया दौर्बल्यं नितान्तमेव विशालं वक्त्रं व्यादाय १८५७ तमेशवीयाब्दे स्वतन्त्रतासंगरावसरे स्थितमदृश्यत । तस्मिन् स्वतन्त्रतायुद्धकाले कतिपये राजानोऽन्ये चानेके स्वार्थरता देशभक्तान् विरोद्धुमांग्लसाहाय्यदातारोऽभूवन् । ते स्वार्थान्धा देशद्रोहिणस्तज्जघन्याचरणं स्वकीयं गरिमाणममन्यन्त । तेषां राष्ट्रद्रोहिणामधमाः प्रवृत्तयो नूनं स्वातन्त्र्ययुद्धमसफलञ्चक्रुः । रसेलः स्वदैनन्दिन्यां "माइ डायरी इन इण्डिया" नामिकायां यल्लिलेख तस्यायं सारः—

"तथ्यस्यास्य स्वीकरणन्तु कर्तव्यमेव यद् देशिनां (भारतीयानां) सर्वांशतयास्मद्विरोधकारित्वे सति नाशोऽस्माकमवश्यं निश्चित आसीत् । परं तदा तान्यपि तत्त्वानि भवन्ति स्म येभ्यो पुण्यं साहाय्यं प्राप्तवन्तः । अस्मदीयाः सेनाः स्वकीयानसूनपि बलिवेद्यामर्पयितुं सन्नद्धा भवन्तोऽयुध्यन्त । तासां कार्यं निःसंशयं वीरतामयमासीत् । परं तद्वीरतायाः गुरुतायाश्च तले भारतीयानां बहूनामस्मत्कृते दीयमानं बलीयः साहाय्यं कारणभूतमासीत् । पटियालायाः भिण्डस्य च भूपयोः साहाय्ये सत्यप्राप्ते दिल्ल्या आरोधः कदास्मत्कृतः सफलः सम्भव आसीत् । किञ्च सिक्खानामस्मदीये सैन्ये प्रविष्टत्वे सति पञ्चालप्रदेशस्योपप्लवान् शमयितुं वयं क्षमाः जाताः, अन्यथा कदा तदपि सम्भवमासीत् । लखनऊनगरे सिक्खाः अस्मान् सम्यगसेवन्त । देशीयाः (भारतीयाः) अस्मदीयदुर्गरक्षकसैन्यमुपचक्रुः, विविधरीत्या च ते सहायतामकार्षुः । अस्मिन्नपि तु समयेऽस्मच्छिविराणामस्मदीयानां गुल्मानाञ्च रक्षणे देशीयसेनैव संलग्नास्ति । अत्रत्या एव जनाः अस्मत्तुरङ्गाणां कृते तृणराशिमाहरन्ति । सर्वविधैव सेवा तैः क्रियते । समयेऽर्थञ्चापि प्रदाय तैरस्मत्साहाय्यकृद्भिर्भूयते । अस्मदीयः सैनिको रक्षी प्रोवाचेदमेकदा देशीयसेवकानां, शिविकावाहिनां, चिकित्सालयीयभृत्यानामन्येषाञ्च

देशीयानामभावे तेभ्यः साहाय्यस्यानुपलब्ध्यां सत्यामस्मदीया सेना दिवसमेकमपि स्थातुं क्षमा नो भवेत्। गुर्खामार्गदर्शका दिल्ल्यां भृशं स्वसेवां समर्पितवन्तः; बङ्गेषु च शतघ्नीधराः इंगलिशसैनिका इव तेऽपि विरोधियोद्धृकृतस्फोटानां साम्मुख्य एव समतिष्ठन्त"।

तत्कालवर्तिना लॉर्डकैनिंगेन महाराज्यपालेन लिखितमासीत् तारपत्रे "सेंधियानरेशे विद्रोहिणां मध्ये गते सति श्व एव स्वविष्टरोत्थापने मया लगनीयम्"।

कश्चिदांग्लग्रन्थकारो लिखति :-

"गवालियरस्तु भारतस्य कुञ्चिकेवावगन्तव्यः। किंवा स ईदृशी शृङ्खलेवावगमनीयो यदीये कस्मिन्नप्यंशे छिन्ने सति भारतेऽस्माकं विनाशो निश्चित एवासीत्। गवालियरनरेशस्य विप्रलब्धृत्वे सति विद्रोहिणाञ्च सति तस्मिन् सुहृदि, विद्रोहस्य सर्वदेशव्यापकत्वमेव सम्भवमासीत्। तस्यां स्थित्यान्तु गङ्गाया अदुस्तरेषु प्रदेशेष्वस्माकमृधं सीमितं न भूत्वोत्तरभारतस्य कठोरप्रदेशवासियुद्धकुशलजातिष्वपि स्वं प्रसारयितुं बाध्यमासीत्। दक्षिणीयजातिष्वपि युद्धस्य करणीयत्वेनाऽऽपतनमासीत् सम्भवम्। एतावदेव नः सेंधियाधिपेऽस्मद्धिताय विद्रोहिभिः सह जन्ये कृते सति, तत्र च तस्मिन् पराजिते सति, विद्रोहस्य तद्रूपं भवितुं सम्भाव्यमासीद यस्य कल्पनापि न कर्तुं शक्यास्ति।"।

लॉर्ड कैनिंगेन १८५७ तमेशवीयाब्दे सितम्बरमासे सम्राज्ञीं विक्टोरियाम्प्रति पत्रेऽलिख्यत :—

"नयने निमीलिते विधायोन्मत्ततापूर्वकं निर्यातनायां स्थीयते।"

ब्रिटिशसैनिककृतानामत्याचाराणां प्रकाशनाय यदा लॉर्डमहोदयो न्यवेद्यत तदा स उदतरत् :—इदं कृत्वा जगतः पुरस्तादहं स्वदेशं न कलङ्कितं कर्तुं कामये। ✱

## तृतीयः परिच्छेदः

सप्तपञ्चाशदधिकाष्टादशशततमेशवीयसम्वत्सरे सञ्जातस्य विद्रोहस्य सत्यवसाने; आंग्लैर्निगृहीते सति तस्मिन्, भारतीयानां हृदये आंग्लपरकद्वेषः परं शान्ति नागमत्, अपि तु स द्वेषानलोऽजस्रमुददीप्यत। तस्य विद्रोहस्योपसंहृतस्याल्पान्येव दिनानि यदा व्यतीतानि, लन्दनस्य सुविदितं पत्रं 'टाइम्सम्' प्रति, तत्संवाददातृ-जी० डब्ल्यू०रसेलेन प्रतिवेदनं प्रेषितमासीत्—

"भारतीयानामांग्लानाञ्चान्तराले प्रबलो द्वेषो दुर्भावना च समुत्पन्नास्ति। न च तयोर्मध्ये विश्वासस्योद्भवोऽपि सम्भवः"।

तस्मिन् महाविद्रोहे सत्युपसंहृते देशेऽनारतं कदापि लघुः कदाप्यलघुर्विद्रोह उदपद्यत। अष्टपञ्चाशदधिकाष्टादशशततमेशवीयसम्वत्सरे "सन्थाल"पदवाच्या जना विद्रोहाग्निमदीदिपन्। बङ्गेषु नीलविद्रोहः, अवाच्यां कृषीवलानाञ्चोदतिष्ठत्। देशे इतस्ततो विद्रोहस्य प्रवृत्तिमुत्थितामवलोक्य शासनमायोगमेकमस्थापयत्। स आयोगो विद्रोहप्रवृत्तेर्मूलकारणान्यवगन्तुं प्रायस्यत्। प्रतिवेदनञ्च सः स्वकीयं शासनाय प्रदत्तवान्। ततश्च शासनमायोगानुरोधेन विधिविधानमघटयत्, भूमिकरं च न्यूनतामगमयत्। कृषीवला अवाप्नुवन् स्वल्पामाश्वस्तताम्। तस्मिन्नेव काले श्रमिका अजागरुः। ते धनपतीनामत्याचारान् रोद्धमान्दोलनं प्रारभन्त। असकृत् ते स्वकीयानि कार्याण्यप्यश्लथयन्। श्लथनमेव स्थगनञ्च प्रायेण चक्रुः। निर्माणी (मिल्स)—श्रमिकसमितिः श्री एन० एम० लोखण्डे-प्रयत्नेन जनुरगृह्णात्। गच्छता कालेन सा समितिर्विशालं संगठितञ्च रूपमधारयत्। सप्तत्यधिकाष्टादशशततमेशवीयाब्दे दक्षिणभारते जागरणज्योतिरुद्दिदीपे। तस्मात्कारणान् महाराष्ट्रेतिहासो नवमेव प्रक्रममग्रहीत्। तज्जाग-

रणं निखिलमपि भारतं जागरयामास। सर्वसाधारणजनसभा-निबन्धमालारम्भ—'केशरी'-'सुधारक'-'मराठा'—न्यु इंगलिश-स्कूलस्थापनादिकानि विलोकितान्यभूवन्। १८९५ तमेशवीय-वर्षे लोक-मान्यतिलकः सर्वजनीनसभाया व्यवस्थां विधातु-मारभत। राजनीतिकमञ्चस्य निर्माणमजायत। समग्रेऽपि भारते भीषणमान्दोलनमुत्तस्थौ। तच्च विंशत्यधिकैकोनविंशतिशततमाब्दव्यापिनि भारतेतिहासे स्वप्रभावमक्षिपत्। श्रीदादाभाई नौरोजी, रानाडे च १८८५ तमेशवीयाब्दारम्भात् प्राक्—कांग्रेसस्थापनातः प्राग्—भारतीयां राजनीतिमर्थनीतिञ्चोद्दिश्य सूत्रपातञ्चक्रतुः। तदानीं स्वदेशक्षेमाय देशभक्तिभाजां कार्याणि समन्तात् प्रारब्धान्यजायन्त। श्रीमान् रानाडे वैधाध्वभिर्जनानां स्वान्तेऽखिलभारतीयसंयुक्तराज्योत्तरदायित्वाधिकार-ब्रिटिशराष्ट्रसमत्वस्पर्धिस्तर-भारतीय-संसदादिविषयिभावबीजवपनं व्यदधाद्। वासुदेवबलवन्तफड़के च नासिक-खानदेशस्थरामोशीभील-साहाय्येन लोकसत्तायाः स्थापनार्थं क्रान्तिकारिणं यत्नञ्चकार।

एतस्मिन्नेवान्तराले भारतं कतिपयराष्ट्रियविभूतीनां प्रकाशेन प्रकाशितमजायत। ता विभूतयो भारतस्य राज-नीतिक-सामाजिकव्योममण्डले सर्वतोऽलौकिकमेवालोकं व्यतानिषुः। तमालोकमधिगम्य भारतीया राजनीतिः सामाजिकञ्च जगदपूर्वमिवाभामुदाय चकासाञ्चक्राते।

या संस्था भारते सर्वत्र राष्ट्रियान् भावान् जने जने सञ्चारयति स्म, या आङ्ग्लशासनपारतन्त्र्याद् भारतं मोचयितुं साफल्यमध्यगमत्, सा यद्यपि निखिलभारतीयराष्ट्रिय-महासभा (कांग्रेसः) अस्ति परमेतस्याः संस्थायाः अभ्युदयात् प्रागिह भारतेऽन्याश्चानेकत्वगाः संस्थाः राजनीतिकीं सामाजिकीञ्च क्रान्तिं कर्तुं प्रायतिषत। १८५१—'५२ तमेशवीयाब्दयोर्याः संस्थाः जनुरगृह्णंस्ता इमा :—(अ) श्रीदादाभाई नौरोजीमहाभागस्थापिता "बोम्बे एसोशियेसना" ख्या संस्था, (आ) श्रीप्रसन्नकुमारटैगोर—डॉक्टरराजेन्द्रलालमित्र-प्रभृति स्थापिता "ब्रिटिश इण्डिया एसोशियेशना"भिधा संस्था, (इ)

"मद्रास नेटिव एसोशियेशन" संज्ञिका (पूना) च संस्था । एताः व्यतिरिच्य त्रयाणां प्रदेशानां च स्वस्वराजधान्यां लोकसत्तात्मिकाया राजनीतेश्चावतरणमभूत् ।

न चैता निर्दिष्टाः संस्थाश्चिरं जीवितुमशकन् । राष्ट्रियमहासभा (कांग्रेसः) एव भारतस्य प्रधानराजनीतिसंस्था भवितुं क्षमाभवत् । सैव तद्गौरवमवाप्तुमार्हत् ।

राष्ट्रियमहासभायाः जनुर्विषयिकास्ति कथा कौतूहलाभिरामा । तद्विचित्ररूपत्वादुल्लेखार्हास्ति । भारतस्य तत्कालवर्ती महाराज्यपालः (गवर्नरजनरलः) लॉर्डडफरिनः श्रीमन्तं ह्यूमं नाम सुजनमुदारं भारते तां संस्थां स्थापयितुमब्रवीत्. यद्द्वारेण भारतशासनं भारतस्य यथार्थां स्थितिमवगन्तुमर्हेत् किञ्च भारतगगने परिभ्रमतामशान्तिमेघानां निराकरणं भवितु मर्हेत् । वस्तुतः श्रीलॉर्डडफरिनो दूरदर्शी कूटनीतिज्ञ आसीत् । स आंग्लशासनं विरुन्धानाया जनताया विद्रोहिणीं भावनां वैधान्दोलने परिणमय्य भारते ब्रिटिशसाम्राज्यस्य स्थितिं दृढीयसीं कर्तुमचकमत । श्रीह्यूमः सहृदय आंग्लपुरुषतल्लज आसीत् । भारते सुराज्यं शोभेत इत्येतदाकाङ्क्षन्नसौ ब्रिटिशसाम्राज्यान्तर्गतं भारतं प्रति प्रदत्तं भवेदौपनिवेशिकस्वराज्यं इति प्रेक्षितुमचेष्टत । तत्समयगामिनीनां परिस्थितीनामध्ययनेनैषा धारणा पुष्टिं प्रयाति ।

तस्मिन्ननेहसि बलीयस्कतां प्राप्तोद्विग्नतामय्यशान्तिर्गच्छता समयेन ब्रिटिशसाम्राज्योपरि प्रत्यूहानां पातने क्षमा भवितुमर्हतीति दूरदर्शिराजनीतिज्ञांग्लाः अनुभवन्ति स्म । ते तां विपदं निरस्तुं श्रीह्यूमं लोकप्रियं सज्जनं तदर्थं समीचीनं साधनं मत्वा विचारमेतं न्यबध्नन् । श्रीह्यूमोऽपि पर्यावरणे विद्रोहस्फुलिङ्गततिं स्फुरन्तीमपश्यत् । स एतस्मिन् सम्बन्धे स्वकीयस्मारणपत्रे यदलिखत् तस्यायं सारः—"यत्रावरजनानां वार्ता लिखिता आसंस्तेषां प्रतिवेदनानामवलोकनेन ज्ञातं भवति यत् ते स्वकीयायां विद्यमानायां स्थित्यां सन्ति निराशाः; ते सत्वरमेवोपरता भविष्यन्तीति विश्वसन्ति । अतस्ते किमपि यतितुं कृतनिश्चयाः सन्ति । एतेन तद्द्वारेण करिष्यमाणा

हिंसाभिव्यज्यते। तेषामुद्वेगः संगठितो भूत्वा लब्ध्वा च लघु-गुरूणां साहाय्यं राष्ट्रियविद्रोहे परिवर्त्स्यते"।

इममेव विषयमधिकृत्य श्रीमान् एण्ड्रू जो मुखर्जी च लिखतः स्म—"सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दानन्तरमेतावान् भयावहः कालो नागतः। अखिलभारतीयान्दोलनार्थं सः समय उपयुक्त आसीत्। तीव्रमेधो लॉर्डस्तु तां गम्भीरां परिस्थितिमभ्यजानात्। अतः सा हिंसात्मिका क्रान्ति प्रतिहतेवाभवत्"।

आंग्लाधिकारिणो ह्यूमहोदयसहायतया नेतृणां राजनैतिकसंगठनमायूयुजन्। येनान्दोलनं जनताया विधिं संश्रित्य गतिं कुर्वीत। न तद् हिंसापथमाश्रयेत्। त्र्यशीत्यधिकाष्टादशशततमेशवीयसम्वत्सरे ह्यूमो मार्चमासे कलिकाताविश्वविद्यालयस्य स्नातकान् प्रति प्राहिणोत् परिपत्रम्। तत्रेदमभूत् कथितम्—"ते (छात्राः) एतादृशं राजनैतिकसंगठनं योजयितुं साहाय्यं कुर्युर्येन (संगठनेन) भारतीयानां नैतिकं मानसिकं सामाजिकञ्चोत्थानं भवितुमर्हेत्"। तेनैव परिपत्रेण स (श्रीह्यूमः) ओजस्विभिः पदैश्छात्रान् अनुरुन्धानो लिखति स्मः—

"भवन्तो देशस्यास्य जीवितत्वाय कल्पन्ते। भवत्सु चेत् पञ्चाशच्छात्रा अपि स्वार्थपराङ्मुखाः प्राप्ताः स्युर्देशभक्ताः, देशार्थं स्वजीवनसमर्पणकारिण उपनता भवेयुस्तदा भवद्राष्ट्रनिमित्तेनोज्ज्वलभाविकालस्य सम्भावना कर्तुं शक्यास्ति। यदीदं न भवितुमर्हेत् तदा राष्ट्रस्य पुत्रा भवन्तो वैदेशिकशासनाधीनतायामसहाया इव जीवनं नेष्यन्ति। चेद् देशस्य विचारवन्तो नेतारोऽपीयतीं दीनतां हीनताञ्चाभरिष्यन्नियत्यां स्वार्थवत्यां भावनायामपतिष्यन्नेतादृशेऽपि काले नाजागरिष्यन् स्वराष्ट्रार्थं किमपि कर्त्तव्यं च नापालयिष्यंस्तदा ते स्वानवज्ञायोग्यान् धर्षणीयानेव प्रमाणितानकरिष्यन्। देशः स्वयोग्यतां यादृशीं बिभर्ति तादृशमेव शासनं लभते"।

श्री ह्यूमकृत मेतद वक्तव्यं, यत् तेन स्वपत्रे प्रकटीकृतं, गम्भीरं प्रभावं समुपस्थापयति स्म। १८८४ तमेशवीयाब्दावसाने

"इण्डियननेशनलयूनियनस्य" स्थापनाजायत। १८८५ तमेशवीयाब्दे मार्चमासे सकलस्यापि राष्ट्रस्य विभिन्नानां प्रदेशानां प्रतिनिधयः सम्मेलने स्युरामन्त्रितास्तत्र राष्ट्रहिताय कार्यक्रमस्य रूपरेखा प्रस्तुतीकृता स्यात्; ब्रिटिशशासनान्तर्गते हि राष्ट्रे, राष्ट्रशुभकांक्षिणस्तं कं मार्गमुपायं वा संश्रयेयुर्येन भारतस्य सर्वाङ्गीणमभ्युत्थानं भवेदुपस्थितानि च कष्टानि निराकृतानि स्युरित्यत्र सनोवोनं विमर्शणं सम्पन्नतां प्रतिपद्येत; सति च सम्पन्ने सफलतापूर्वकं विनिर्धारिते तस्मिंस्तस्मिन् विषये, सर्वसामान्यसम्मेलनमक्समसावकाशे भवेदाहूतम्। राष्ट्रकल्याणाय एतादृशे पदेऽप्रसारिते सति, श्रीह्यूमः सर्वमपि वृत्तं श्रीडफरिनमहाराज्यपालस्य पुरो निदधौ। श्रीडफरिनस्तत्र ह्यूमविचारान् ध्यानपूर्वकं रुच्याश्रौषीत्। ततश्च स इमं विचारं स्वं न्यदधात्—"यदिह राजनीतिज्ञानां प्रतिवर्षं सम्मेलनं स्यात् तत्र शासितशासकावुभौ स्वस्वहितं सम्पादयितुं शक्नुयातां; तच्च शास्तुः समक्षे शासनागतान् दोषान् निदधीत; किं किं सम्मार्जनं सम्भवं कया च रीत्येत्येतच्च तद् ज्ञापयेदिति।

कार्यसाफल्याय शुभकामनामवाप्य श्रीह्यूम इंगलेण्डं प्रतस्थे। तत्रासाद्य सः श्रीरिपन-डलहौजी-सरजेम्स के० अर्ड-जॉन ब्राइट-मि० रीड–मि० स्लेगेषु मिमेल। योजनायै च तेभ्यः परामर्शं जग्राह। ततश्च तत्रापि सः समितिमेकामस्थापयत्। सा गच्छता समयेन "इण्डियन पार्लियामेण्टरी कमेटी" तिनाम्ना ख्याताभूत्।

इंगलेण्डान्निवृत्य श्रीह्यूमो विचारितं कार्यं क्रियायामन्वेतुमयस्यत्। भूतवसुवसुसोमाब्दे दिसम्बरेमासे "इण्डियन नेशनलकांग्रेसस्य" स्थापनाजायत। तस्य प्रथममधिवेशनं पूनानगरे स्यादित्येष निश्चयः कृतो बभूव परं तत्र तदानीं महामारीरुजा पुस्फोट तस्मादधिवेशनं मुम्बय्यां गोकुलदासतेजपालसंस्कृतमहाविद्यालयेऽभवत्। अधिवेशनमनेके महान्तो महान्तो जनाः सम्भावयामासुः। सभापतित्वे च श्रीमत उमेशचन्द्रमहाभागस्य तन्महाधिवेशनं समजनि। सभापतिः सः कांग्रेसस्योद्देश्यानि प्रत्यपीपदत् :—

(अ) साम्राज्यस्य विभिन्नेषु भागेषु राजमानानां देशहितसंलग्नानां जनानां समवाये सम्पर्कस्य सख्यस्य च संवर्धनम्। (आ) सौहार्दपूर्णव्यवहारेण समस्तदेशवासिषु चिरात् स्थितानां क्षुद्रक्षुद्रतरसंस्काराणामुत्सादनम्; राष्ट्रैक्यसम्बन्धिनीनां तासां सर्वासामपि भावनानाम्; याः श्रीलॉर्डरिपनस्य शासनानेहसि अर्जनिषत, परिपोषणं प्रसारणञ्च। (इ) महत्त्वमयान् सामाजिकान् प्रश्नानादाय भारतीयेषु शिक्षाप्राप्तेषु जनेषु समीचीनतया चर्चां प्रवर्त्य विधाय च प्राप्तानां परिपक्वानां सम्मतीनां प्रामाणिकस्य संग्रहस्य प्रस्तुतीकरणम्। (ई) तासां दिशां तारिकाणाञ्च निर्धारणं या अवलम्ब्य भारतीया राजनीतिज्ञाः देशहितपरकं कार्य्यं विदधीरन्।

अधिवेशने अनियन्त्रितां पद्धतिं निराकृत्य लोकप्रतिनिधीनां सन्निवेशः शासने स्यादित्येतदात्मिकां दृष्टिमाधारीकृत्य केचन प्रस्तावाः पारिताः अभूवन्। तेषु केचन प्रस्तावाः प्रमुखाः—

*I* शासनव्यवस्थामवेक्षितुं राजानुमतायोगो (रॉयल कमीशन) नियतीकृतः स्यात्।

*II* विधिविधायिकासु परिषत्सु लोकनियुक्ताः प्रतिनिधयो महत्यां संख्यायां गृहीताः स्युः। आयव्ययकश्च तत्र प्रस्तुतीकृतो भवेत्।

*III* भारतीयपरिषत् (*Indian Council*) निरस्ततां नीता भवेत्।

कलिकातायां ततः कांग्रेसस्य द्वितीयमधिवेशनमृषिकल्पदादाभाईनौरोजीमहाभागस्याध्यक्ष्ये समपद्यत। तृतीमधिवेशनं मद्रासे बदरुद्दीनतैयबजीमहोदयस्य सभापतित्वे समजायत। प्रथमोऽध्यक्षः खिष्ट्रीयो द्वितीयः पारसीकस्तृतीयश्च मुसलमान इत्येतद् वीक्ष्य ब्रिटिशशासनस्य मनसि कांग्रेसं प्रति द्वेष उद्बभूव। तदबिभेत्। मद्रासाधिवेशनानन्तरं कांग्रेसस्य वृद्धिं गच्छन्तीं लोकप्रियतां प्रेक्ष्य ह्यूममहाशयस्तां संस्थां (कांग्रेसाख्याम्) जनान्दोलनकारिण्यां संस्थायां परि-

वर्तयितुमचीकमत। परं तदीयमिदमपि रूपं शासन मदहत्। तेनान्दोलनात्मकेन रूपेण तु सा संस्था भृशमेव लोकप्रियत्वमगात्। तदीया लोकजागरणनीति रांग्लशासनकर्तृनुदवेजयत्। यदा हि चतुर्थमधिवेशनं कांग्रेसस्य इलाहाबादेऽभवत् तदा तदर्थं मण्डपनिर्माण मपि कठिनम् (दुष्करम्) अभूत्। अधिवेशनसम्भावनाय समागमिष्यत्सु प्रतिनिधिषु बाधाः बहुलाः आरोपिता अभूवन्। कांग्रेसकार्यकर्तृषु विविधप्रतिबन्धनानिन्यधीयन्त। शासनकृतानि कार्याणि राष्ट्रियमहासभायाः (कांग्रेसस्य) लोकप्रियतायाः वर्धने साहाय्यकारीण्येवासिध्यन्।

कांग्रेसस्य स्थापना ब्रिटिशशासनार्थं नानुकूलतां गता। शासनाधिकारिणां नयनान्युन्मीलितानि भवितुमारभन्त। ते तु कांग्रेसं स्वरक्षायै साधनत्वेनामन्यन्त परं सा संस्था (कांग्रेसः) विरोधिन्येव प्रतीयते स्म तेषां कृते। कलिकाताकांग्रेसाधिवेशनसमये तु सर्वकारीयकार्यकर्तारः कांग्रेसाधिवेशनं सम्भावयितुं प्रतिषिद्धा अभूवन्।

कांग्रेसाख्यासंस्था प्रारम्भे बहूनि वर्षाणि यावदनुग्राधिकारिणामधीनतायां स्वजीवनमयापयत्; तस्माद्धेतोःशासनविरोधीन्यान्दोलनानि न व्यालोक्यन्त। तेषु दिनेषु सामान्याः प्रस्तावा एव पारिता बभूवुः। देशप्रगतिप्रयोजनेन, देशोत्कर्षाधायककार्यप्रयोजनेन च तैः शासनं प्रार्थ्यत। वस्तुतस्तदानीं कांग्रेससंस्था निवेदनकारिणीमेव नीतिमाललम्बे। परं सा चिराय तादृशीं स्थितिं निधातुं न शेके। तत्र तद्विधानां जनानां समावेशो भवितुमारेभे ये तां कोमलां नीतिं, तां निवेदनकारिणीं प्रकृतिमनिन्दन्। तादृशविचारभृतां जनानां संख्या शनैःशनैर्वृद्धिंगता, बलीयस्कताञ्चोपेतातः कोमलनीतिभृतो जनाः संस्थायां स्वकीयं प्रभुत्वमधिकारं वा निधातुं न क्षमा अजायन्त। शासनमपि तत्र सर्वत्र स्वकीयामवधानपूर्णां निशितां दृष्टिं निधातुं नितान्तं सतर्कमभवत्।

इतः शासनं तानि कार्याणि द्रष्टुं न कदापि कामयते स्म यैः कार्यैर्देशस्य भारतस्य जनतायां चेतनोद्बुद्धता स्वदेशानुरागिता चोत्पद्येरन्; ततो भारतस्य परमभक्ताः धीमन्तो

विचारवन्तो मनीषिणो देशमुद्बोधयितुं जनतायां देशप्रेम सञ्चारयितुं, देशस्य कृते तस्याः किं किं च कर्तव्यं वर्तते इत्येतद्धेतोः प्रयत्नं कर्तुमारभन्त ।

राजनीतिक्षेत्रे कार्याणि अनुतिष्ठन्तो ये देशम्प्रति स्वकीयां सर्वाङ्गीणां सेवां समर्पयामासुस्तेषु कतिपयानां महापुरुषाणां जीवनमहत्ता गीयते—

**श्रीदादाभाईनौरोजी—**

नौरोजीमहाभागस्य गणना तेषां महतां देशभक्तिभाजां मध्ये क्रियते ये आजीवनं देशं स्वकीयं निवेदितुं प्रत्याश्रौषुः[1] । तदीयो राष्ट्रियमहासभया सह सम्बन्धस्तत्समयादासीद् यदा तत्स्थापनाजायत । तत्कालवर्तिनो देशभक्ता भारतस्य तस्मिन् वयोविद्यावृद्धमहापुरुषे भृशं श्रद्धां निदधुः । पट्टाभिसीतारमैया वदति–"राष्ट्रियाया महासभाया वृद्धानामनुक्रमणिकायामाद्यं स्थानं श्रीदादाभाई नौरोजी अध्यास्ते । सः प्रारम्भादेव स्वजीवनस्य राष्ट्रियमहासभां सिषेवे । स राष्ट्रियमहासभां स्वराज्यप्राप्त्यर्थं समुचितवर्त्मवर्तीं विदधच्छासनं तद्दोषात् निवारयितुं प्रेरयन् समुत्थापयामास" । तमधिकृत्य श्री सी० वाई० चिन्तामणिराचष्टे "भारतस्य जीवनं प्रबुद्धदिग्गजानां निःस्वार्थानां देशभक्तानां समवायेन तदालङ्कृतमासीत्; परं दादाजीवन्नान्यः कोऽप्यासीन्न ततोऽधिकमहं भद्रपुरुषं द्रष्टुमशकम् । तदुपस्थितिरेव हृदि श्रद्धां सञ्चारयामास[2] । श्रीगोपालकृष्णगोखले तु तं मानवं न देवताममंस्त ।

४.९.१८२५ तमेशवीयदिनाङ्के मुम्बय्यां श्रीदादाभाई नौरोजी जनुरग्रहीत् । आसीत् तत्परिवारो धार्मिकः । तत्पिता दिवङ्गतो बभूव, यदा स दशवर्षदेशीय आसीत् । तस्य शिक्षाया भारस्तन्मातरि विधवायामापप्तत् । महत् कष्टं सहमाना सा तमुच्चशिक्षां दापयितुं क्षमाजायत । सः (नौरोजी) मुम्बय्याम् एलफिन्स्टेनकालेजे शिक्षामानर्ज । बम्बईहाईकोर्टस्य प्रधानं

---

1. *R. P. Masani on Dada Bhai Nauroji.*
2. *C. Y. Chintamani : Indian Politics Since the mutiny, P. 20*

न्यायाधीशं सररस्किनपेर्गं तस्य समुज्ज्वलतरां प्रतिभाचकर्ष। स तमिङ्ग्लेण्डे विधिविषयिणीं शिक्षां ग्रहीतुं प्रेषयितुमैच्छत्, परं परिवारस्य पुरातनेभ्यो रूढिवादिभ्यो विचारेभ्यः सः शिक्षार्जनाय इङ्ग्लेण्डं न यातुं प्रबभूव। १८५० तमेशवीयाब्दे स एलफिन्स्टेन कालेजे गणितस्य प्राकृतिकविज्ञानस्य च सहायकशिक्षको बभूव। एतावन्तं समयं यावन्न कोऽपि भारतीयाध्यापको नियुक्तिं प्राप तत्र कालेजे। एतेन सः स्वविषयेषु कियन् महान् विद्वानासीदिति स्पष्टीभवति। १८५५ तमेशवीयाब्दं यावत् स तत्पदे कार्यं चकार। एतस्यामवध्यां स बम्बईसभाम्, प्रदर्शनालयम्, पारसीव्यापारशाखाम्, ज्ञानप्रकाशमण्डलीम्, कन्याहाईस्कूलञ्च संस्थापयामास। १८५६ तमेशवीयाब्दे स स्थानत्यागाय त्यागपत्रं प्राददात्। एकस्याः पारसीकम्पन्याः–'केमा एण्ड सन्स'—व्यापारमीक्षितुमिङ्ग्लेण्डं स इयाय। स तत्र ब्रिटिश इण्डियन सोसायटी (*British Indian Society*) स्थापयामास, यद्द्वारेण स आंग्लान् प्रति भारतीयसमस्यावबोधं कारयितुं प्रभवेत्, तेषु (आंग्लेषु) च भारतीयपरकसद्भावनां जागरयितुं क्षमो जायेत। १८७४ तमेशवीयवर्षे स भारतं निववृते। आगम्य १८७६ तमेशवीयाब्दे बड़ौदाराज्यस्य प्रमुखो मन्त्री बभूव। स राज्यशासनमुत्थापयितुं प्रायतत। परम् आंग्लरेजीडेण्टकर्नलपेरी बभूव तत्कार्येऽसहिष्णुः। तेन सह मतभेदो जातः। अतः स तत्पदममुञ्चत्। ततः स बम्बय्या महानगरपालिकाया (*Corporation*) सदस्यतां १८८५ तमेशवीयाब्दपर्यन्तमुवाह। १८८५ तमेशवीयाब्द एव बम्बईविधानपरिषदः (*Bombay Legislative Council*) सदस्यो बभूव। परमागामिनि वर्षे सदस्यतातस्त्यागपत्रं प्रदाय इंङ्ग्लेण्डमसेधीत्। स उदारवादिन्यां संस्थायां (*Liberal Party*) सम्मिलतो भूत्वा इङ्ग्लेण्डस्य लोकसभाया निमित्तेन निर्वाचितो भवितुं प्रायतिष्ट। तत्र स सफलतां न प्राप। १८९२ तमेशवीयाब्दे निर्वाचने प्रवृत्ते सति तत्र विजयी बभूव। सः प्रथमो भारतीय आसीद् य इंगलेण्डस्य लोकसभायाः

सदस्यो निर्वाचितो जातः। स भाषणैर्लेखैश्च इंगलेण्डे महत् कार्यं चकार। स तत्र भारतोन्नत्यै अकथनीयं प्रयासमन्वतिष्ठत्।

दादाभाईनौरोजी आसीदुदारविचारपरिरक्षकः। ब्रिटिशशासनमधिकृत्य न तस्य विचारा आसन् विपर्यस्ताः। स आंग्लशासकानां न्यायप्रियतायां विशश्वास। भारते आंग्लशासनं च भारतार्थं हितकरममन्यत। स राष्ट्रियमहासभायाः प्रथमेऽधिवेशने महत्त्वपूर्णं भागं जग्राह[1]। १८८६ तमेशवीयवर्षे राष्ट्रियमहासभाया अध्यक्षपदमलङ्कुर्वाणः समभाषत—"इदमस्माकं सौभाग्यं यद् वयं तच्छासनान्तर्गताः स्मः, यदस्मदीयमीदृशं मेलनं सम्भवं करोति। सः शासनेऽसहयोगस्वीकरणं नाचकाङ्क्ष। वैधानिकान्दोलने तस्यासीदास्था। चेद् भारतीया अपेक्षितं त्यागं विदधतः संहता भूत्वा आन्दोलनं विदधीरंस्तदावश्यमेव न्यायप्रिये ब्रिटिशशासने तत्प्रभावो निपतेदित्येष स्तदीयो विचार आसीत्। तृतीयकृत्वो यदासौ १९०६ तमेशवीयाब्दे कलिकातामहासभाधिवेशनस्य सभापतिर्बभूव तदा सकलेऽपि भारते बङ्गभङ्गहेतोः परमक्षोभ उत्तरल आसीत्।-शासनं लोकप्रियमान्दोलनमभिभवितुं कठोरं चक्रं चालयति स्म। सः शासनसञ्चालितदमनचक्रात् क्षुब्धो भूत्वा अध्यक्षपदादेव व्याहार्षीत् "न वयं भिक्षामहे, वयं न्यायं कामयामहे, ब्रिटिशशासनस्य नागरत्वादस्मदीयाः सन्त्यधिकाराः; एतन्मीमांसामन्तरेण एकेन 'स्वराज्यम्' इत्येतेन पदेनैव सर्वमपि व्यक्तं भवितुमर्हति; स्वराज्यमपि तादृशम् इंगलेण्डे यादृशमथवा ब्रिटिशोपनिवेशेषु दृश्यते"। एतेन भिक्षावृत्तौ तस्य कुत्सा, वैधानिकेनान्दोलनेन स्वराज्येप्सा च प्रकटीभवतः। स्वराज्ये हि स औपनिवेशिकेऽभिनिविशते स्म। तादृशे क्षोभाकुले वातावरणे, यदा बङ्गेषु दमनचक्रं तीव्रगत्या प्रवर्तमानमासीत्, दादाभाई नौराजी एव स महान् मानव आसीद् यो राष्ट्रियमहासभाया

1. *R. P. Masani : Builders of Modern India-Dada Bhai Nauroji P. 93.*

उद्देश्यं स्वराज्य *(Dominion Status)*–प्राप्तिरिति घोषयाम्बभूव ।

१९०२ तमेशवीयाब्दे तस्य प्रख्यातं पुस्तकं 'निर्धनता, भारते च अब्रिटिशराज्यम्' *(Poverty and unbritish rule in India)* प्रकाशितमभूत् । तत्साधनीकृत्य सः शासनस्य-शोषणकार्यार्थिकनीतिवशाद् ब्रिटेनार्थं भारतीयस्य समग्रस्यापि धनस्य हरणमसाधयत्[1] । सः श्रीबेल्वीलार्डस्य पुरतः साक्षित्वेन स्फुटतया वैदेशिकं शासनं तीक्ष्णतयालोचयाञ्चकार; अजिज्ञपच्चेङ्गलेण्डस्य भारतभृशशोषणकारित्वम् ।

योग्यताविद्वत्तादिबहुगुणवत्वात् स राष्ट्रियमहासभायास्त्रिरध्यक्षतां चकार । अत्रोल्लिखितेषु वर्षेषु स राष्ट्रियमहासभाया अध्यक्षासनं विभूषयाम्बभूव–१८८६, १९०३, १९०६ तमेशवीयेषु । उभयोरपि उदारानुदारपक्षयोः संगठनं कारयितुं, राष्ट्रियमहासभामपि च सुचारुतया चालयितुं क्षम आसीदित्येतद्धेतोः स विशेषेण तत्पदे आसीनः कृतः ।

श्रीदादाभाई तेषु महापुरुषेष्वस्ति ये आजीवनं भारतमातरमसेविषत; राष्ट्रियमहासभार्थं कार्यक्रमं– स्वराज्यम्–नौरोजी निर्धारयामास । तदीयैः प्रयासैरेव आंग्ला भारतीयासु समस्यासु रुचिमग्रहिषुरान्दोलनं च भारतीयं ते सहानुभूतिदृष्ट्या ददृशुः[2] ।

**दादाभाई मनीषी बुधवरजगतीभूषणं जायते स्म**
**तस्य प्रज्ञाहताभूदतिशयधवला भारते चेङ्गलेण्डे ।**
**देशं प्रीत्या स्वकीयं विमलतमहृदा सः सिषेवे नितान्तं**
**सेवा स्याद् वन्दनीया भरतभुविसदा देशभक्तस्य तस्य ॥**

**सरसुरेन्द्रनाथबनर्जी**

श्रीसुरेन्द्रनाथबनर्जी महाभाग उदारविचारवत्सु नेतृषु गण्यते । सः स्वदेशस्योत्थापनाय सर्वस्वमप्यजुहोदित्येतत् तमधिकृत्य व्याहरणं मनागपि नास्त्यतिशयोक्तिपूर्णम् । श्री-

1. *R. P. Masami : Dada Bhai Nauroji pp. 185.*
2. *R. P. Masani : Builders of modern India Dada-Bhai Nauroji pp. 115*

पद्माभिसीतारमैया "भाषाप्रभुत्वरचनानैपुण्य-कल्पनाकौशलोच्चभावुकत्व-वीरोचितहुङ्कारादिगुणेषु तस्य वक्तृत्वकलायाः पराजयमतितरां कठिनमासीत्, अद्यापि कोऽपि तत्साम्यन्तु दूर आस्ते तत्सकाशेऽपि न प्राप्तो भवितु शक्नोती" ति निगदति। तमेवोद्दिश्य सरहेनरीकॉटनो लिखति—"शिक्षितवर्ग एव राष्ट्रस्य बुद्धिवाणी च भवति। अद्य बङ्गबाबू पेशावरात् चटगाँवपर्यन्तं जनता शास्ति·····अद्यत्वे च 'श्रीसुरेन्द्रनाथबनर्जी' इत्येतन्नाम मुलतानं दक्षिणभारतञ्च समानरूपेणोत्साहयति"। तस्याद्भुतभाषणशक्तिकारणादेव प्रायः स 'भारतस्य ग्लेडस्टन' इति गीयते।

श्रीसुरेन्द्रनाथबनर्जीमहाभागः १८४८ तमेशवीयाब्दे कुलीनब्राह्मणपरिवारे ऽवततार। तत्पिता स्वसमयस्य प्रतिष्ठितो भिषग्वर *(Doctor)* आसीत्। सः सुरेन्द्रनाथं विनेतुं दीक्षयितुञ्च समुचितां व्यवस्थाञ्चकार। *B. A.* परीक्षामुत्तीर्य सः *I. C. S.* परीक्षायामन्वेतुमिङ्गलेण्डं प्रययौ। १८६८ तमेशवीयसम्वत्सरे स तत्र सफलताश्रियार्चितोऽभूत्। एकसप्तत्यधिकाष्टादशशततमेशवीयवर्षे सः सिलहट्टे सहायकमण्डलाधीशः (*Asstt. Magistrate*) पदमधिष्ठितो बभूव। परं तस्मिन् पदे सः चिरं कार्यं कर्तुं न शशाक। कमपि राजकीयाचरणमादाय तस्मिन् दोषमारोप्य सः शासनेन निर्वर्तितः। अस्मादेवानेहसस्तस्य जीवने परिवर्तनमारब्धमभूत्। तत्परिवर्तयति स्म देशभक्त्याम्। श्रीसी०वाई०चिन्तामणिरस्मिन् विषयेऽवोचत्-"तदानीं शासनस्य क्षतिर्देशोपकारिका सिद्धयत"। राजकीयभृतितो निवृत्तो भूत्वा स देशकार्ये संलग्नः। रसर्षिवसुविध्वेशवीयवर्षे स देशदेशान्तरीयसंस्थायाम् (*Metropolitan Institute*) आंग्लसाहित्याचार्यत्वमुपतस्थौ। गच्छता समयेन स १८८२ तमेशवीयवर्षे हाईस्कूलस्यैकस्याधारग्रावाणं न्यदधात्। समयान्तरेण स विद्यालयो 'रिपनकालेजः (*Ripon College*), सञ्जातः। स तत्र बहूनि वर्षाण्यांगलसाहित्यस्याचार्यो (*Professor*) भूत्वा कार्यं विदधौ। ततश्च पत्रकारः समजनि। बंगालीपत्रमपि तदवस्थः (*Jou-*

*rnalist*) सन् सम्पादयामास । तत्पत्रस्यासीज्जन्मदातोमेश-चन्द्रो बनर्जी । शिक्षासम्बन्धिकार्यं विदधानोऽसौ बङ्गनेतृषु मिलित्वा बङ्गेषु 'इण्डियन एसोशियेसनम् *Indian Association)* समस्थापयत् । क्षिप्रमेव च स सर्वमान्यनेतृपदमध्यासाञ्चक्रे । ततश्च स भारतस्यान्यतमो महान् नेता बभूव । स तदेवैसोसियेशनमालम्बमानः सर्वस्मिन्नपि भारते बभ्राम । तदैव शासनेन *I. C. S.* परीक्षायामन्वयनाय आयुः एकविंशतिवर्षदेशीयतातश्च्योतयित्वा एकोनविंशतिवर्षदेशीयं कृतम् । एतेन कस्यापि भारतीयस्य तत्रान्वयनमतसम्भवमजायत । सः शासनस्य कार्यमिदं कठोरतया लोचयाञ्चकार । तद्विरोद्धुं भारतीयं जनमतं संगठितं कर्तुं समग्रेऽपि भारतेऽभ्रमत् ।-स तस्मिन् कार्ये साफल्यमवाप । तद्द्वारेणैव वैधानिकं राष्ट्रियमान्दोलनञ्च सः प्रातिष्ठिपत् । तस्यैतेन कार्येण भारतं राष्ट्रियां जागृतिं, चेतनां, प्रकृष्टोत्साहञ्च लेभे । भारतीयानाञ्च मानसं तां संस्थां स्थापयितुमुत्कण्ठितं बभूव या सकलभारतीकानां प्रतिनिधित्वं कर्तुं शक्नुयात्; संगठितरूपेण च या शासनस्य पुरः स्वकीयं प्राप्तव्यमिष्टं प्रस्तवीतुं प्रभवेत् । अत एवेदं वक्तुं सुशकं यत् सुरेन्द्रनाथबनर्जीमहाभागस्य 'इण्डियन एसोशियेसनं' राष्ट्रियमहासभाया अग्रजमासीत् । १८८४ तमेशवीयाब्दे 'बंगाली' पत्रे प्रकाशितापत्तिलेखहेतोः स वर्षद्वयभोग्यं कारावासदण्डमसहत । जनतानेकप्रदर्शनं कृत्वा तम्प्रति सहानुभूतिं प्रादीदृशत् । १८८० तमेशवीयाब्दतः १८८५ तमेशवीयाब्दपर्यन्तं सः शिक्षितमध्यमवर्गस्य राजनीतिकान्दोलनं संगठितं कर्तुमात्मानं न्ययूयुजत् । राष्ट्रियमहासभायाः (*Congress)* स्थापनायामपि तदीयः करः प्रमुख आसीत् । देशस्य सम्मानितानां नागराणां कृते राष्ट्रियमहासभायाः विशिष्टमधिवेशनं सम्भावयितुं यत्पत्रं प्रकाशितं जातं तत्र श्री ह्यूमस्य हस्ताक्षरेण सार्धं तदीयमपि हस्ताक्षरमासीत् । स राष्ट्रियमहासभाया; प्रथमेऽधिवेशने सम्मिलितो न भवितुं शशाक; तस्मिन्नेव काले इण्डियनएसोशियेसनाधिवेशनस्य प्रवृत्तत्वात् । परं १८८६ तमेशवीयाब्दात् स राष्ट्रियमहा-

सभायाः सर्वेष्वप्यधिवेशनेषु भागं जग्राह; बभूव च स तज्जीवनम् । तदीयानां सेवानां परममहत्त्वमहनीयत्वात् सोऽसकृद् राष्ट्रियमहासभाया अध्यक्षोऽकारि । आदौ स १८६५ तमेशवीयाब्दे ततश्च सः १६०२ तमेशवीयवर्षे पदं तद् विभूषयामास ।

श्रीसुरेन्द्रनाथबनर्जी अन्योदारनेतार इव वैधानिकेष्वान्दोलनेषु विसस्रम्भा । सोऽपि आंग्लानां न्यायपरतायां, धर्मस्थतायां, सयतायाञ्च विशश्वास । १६१७ तमेशवीयाब्दं यावत् स राष्ट्रियमहासभायामात्मानमन्वगमयत्; परं यदा सा सभा उग्रराष्ट्रियतामवृणोत् तदा स ततो दूरे बभूव । तस्मिन् यो महान् श्रेष्ठो गुणः शुशुभे स आसीद् वक्तृताशक्तिः । अस्याः शक्तेरेव हेतोः स आंग्लानां चेतसि प्रतिष्ठां प्राप । भारतीयाश्च विद्वांसस्तदीयात् तस्माद् गुणात् तत्र मुग्धा आसन् । तद्भाषणानां प्रभावः श्रोतृषु मन्त्रप्रभाव इव निपपात । सः स्वकीयया तर्कपूर्णभाषया स्वारीनपि आचकर्ष । ते तस्मिन्नतो मिमिलुः । भारतेऽन्यत्र च स भारतीयग्लेडस्टनत्वेनादृतोऽभूत् । १८६० तमेशवीयवर्षे सः केन्द्रीयकार्यकारिण्यां सदस्यत्वेनादरपूर्वकं परिगृहीतोऽभवत् । मॉण्टफोर्ड-सुधारानन्तरं स बङ्गप्रदेशस्य मन्त्री बभूव । ६-८-१६२५ तमेशवीयवर्षे स महान् नेता नश्वरं भौतिकं शरीरमुत्सृज्य दिवमारुरोह ।

श्रीसुरेन्द्रनाथबनर्जी आंग्लसभ्यतां संस्थाश्च हृदयेनाद्रियत । तत्र तस्य महाननुरागोऽजायत । स एकदोवाच "आंग्लसभ्यता जगत्युत्तमा । सा भारतेङ्गलेण्डयोरखण्डैक्यस्य चिह्नम् । सभ्यतेयं भारतीयान् प्रति अपूर्वराशीभिः प्रसादैश्च परिपूर्णास्ति, आंग्लानां च यशस्तनोति' । यद्यपि स तदीयायां सभ्यतायां सिस्नेह परं स आंग्लशासनस्य भारतापकारीणि सर्वाण्यपि कार्याणि नितरां विरुरोध । स लॉर्डकर्जनकृतं वङ्ग-भङ्गं नैशित्येन व्यरौत्सीत् । तद्विरोधे च जनमतं समगीगठत् । प्रायेण सः पञ्चाशद्वर्षाणि देशसेवायामात्मानं समलीलगत् । वस्तुतः स भारतस्य महतीमभिनन्दनीयां सेवां व्यदधात् । अत एव स भारतस्याधुनिकस्य निर्मातृषु गण्यते । सः

स्वात्मकथामपि (*A nation in making*) अरचयत्। ततस्तस्य जीवनं तत्प्रगतयश्चावगम्यन्ते। नूनं स भारतीयराष्ट्रियताया अभूदग्रदूतः। राष्ट्रियमहासभायाः संस्थापनायां सोऽग्रेसरेषु स्थापकेष्वन्यतमो बभूव। वैधानिकस्य चान्दोलनस्यासीत् स जन्मदाता।

**सुरेन्द्रनाथोऽनुपमोऽभिभाषणे,**
**बभूव नेता भरतावनेर्महान्!**
**उदारवादेषु निषेवते स्म सः,**
**स्वभारतं विज्ञगणाग्रणीश्चिरम्॥**

**सरफीरोजशाहमेहता—**

श्रीमेहतामहानुभावो राष्ट्रियमहासभायाः (कांग्रेसस्य) सम्पर्केतस्मादनेहसोऽजायत यदा तस्याः स्थापनाजनि। सोऽपि श्रीदादाभाईनौरोजोवद् वैधानिकस्य राजनीतिकान्दोलनस्य पक्षे मतिं निबबन्ध। श्रीदादाभाईनौरोजीमहोदयं द्रष्टुं तदा सौभाग्यमवाप यदासाविंगलेण्डे शिक्षामधिगन्तुं गत आसीत्। १८६८ तमेशवीयाब्दे ततो भारतं निवृत्य सः स्वकीयं भूयांसं कालं सामाजिकेषु हितेष्वनैषीत्। तस्मिन् नौरोजीमहाभागस्य प्रभावं भृशमन्वपतत्। सः स इव आंग्लानां गुणेषु बहुषु रुचिं प्रीतिञ्च निदधौ। तस्यापि राजनीतिनिष्ठविचारावली पूर्णतयोदारवादिन्यासीत्। तद्विचारप्रभावो राष्ट्रियमहासभाया उपरि नितरामपतत्। १८९० तमेशवीयवर्षे भारतं राष्ट्रियमहासभायाः षष्ठेऽधिवेशने तमध्यक्षासनमध्यासयत्। स लॉर्ड-सेलिसबरीमहोदयस्य "प्रतिनिध्यात्मकं शासनं पूर्वीयपरम्परायाः किं वा पौरस्त्यानां मनसः स्थितेरनुकूलं नास्ती"त्येतं विचारं प्रत्याचख्यौ किञ्च सः "स्थानीयस्य स्वराज्यस्य जनुस्तु प्रागेव पूर्वस्यामाशायां सञ्जातम्', इत्येतत्स्वकीयकथनं "स्वशासन-स्याधिकाधिकविस्तृतमर्थं बिभ्राणं तत् (स्वशासनात्मक-स्वराज्यम्) तत्र प्रारम्भादेव समवर्तत" इत्येत् *Mr. Chisohm Ansety* मनीषिणः कथनमुद्धृत्य परिपोषयितुं प्रास्तावीत्।

बम्बईमहानगरपालिका-निगमः — (*Corporation*), महाराज्यपाल-परिषत्, बम्बईप्रान्तीयसभा च इत्येतानि

मेहतामहाभागस्य कार्यक्षेत्रत्वेनाभूवन्। बम्बईनिगमन्तु स आजीवनं समवर्धयत्।

श्रीफीरोजशाहो भारतस्य प्रमुखेषु राष्ट्रियेषु नेतृषु मूर्धन्यं स्थानमधितस्थौ। सः समये समये चांग्लशासननीतिं कटुतयाऽऽलोचयाञ्चकार। सः स्वदेशीयान्दोलने श्रद्धामास्थाञ्च न्यदधात्। परं तत्कार्यप्रणाल्यासीद् विनम्रा। एतादृशं किमपि कार्यं स नाचिकीर्षद् यत् प्रतिनिधिसंस्थानां विकासने प्रत्यवायं जनयेत्। १९०७ तमेशवीयाब्दे तं मनीषिणं देशभक्तरत्नमुद्दिश्य इङ्गलेण्डस्थोदारदल—(*Liberal Party*) स्य सांसदः सदस्यः कश्चनाचकथत्—"श्रीफीरोजशाह मेहता चेदिंगलेण्डे जनुरग्रहीष्यत् तदा स तत्रत्यः प्रधानमंत्री अभविष्यत्।" वस्तुतः केचनांग्लास्तु मेहतामहोदयेऽतितरामप्रीयन्त। अतस्ते स्वामभिरुचिं सहानुभूतिञ्च राष्ट्रियान्दोलने दर्शयाञ्चक्रुः।

**श्रीलोकमान्यबालगङ्गाधरतिलकः**

भारतीयराजनीतिक्षेत्रेऽलौकिकप्रतिभावदातोऽनवद्यप्राच्यप्रतीच्यविद्याद्युतिविद्योतितो भारतीयाचार-विचार-संस्काराराधयिता निर्भयोऽनुपमदेशानुरागगरीयान् महामानवः कोऽपि यदि पर्यवलोकितोऽभवत् तदा स आसीद् अखिलभारतीयजनताया आदरणीयः श्रीलोकमान्यबालगङ्गाधरतिलकः।

महात्मनो गान्धिनः प्राग् राष्ट्रिये जीवने श्रीतिलक उच्चतमं पदमध्यासाञ्चक्रे। बभूव स राष्ट्रभारतहृदयसम्राट्। सुधीशिरोमुकुटरत्नतिलकः समग्रमपि स्वजीवनं परातन्त्र्यादुन्मोचयितुं स्वराष्ट्रं समलीलगत्। श्रीपूज्यपण्डितमदनमोहनो मालवीयस्तमधिकृत्यैकदेदमामनत्—

"देशस्य कमपि भक्तप्रवरमवजानानोऽहमिदं वक्तुं शक्नोमि यद् गतेषु विंशतिवर्षेषु भारतभुवः सर्वसामान्येष्वपि जनेषु यमादरं यच्च महत्त्वं बालगङ्गाधरतिलकोऽविन्दत तमादरं तच्च महनीयत्वं नान्यः कोऽपि प्राप्तुमशकत्। एवंविधस्य सम्मानस्य प्राप्तेः कारणमासीत् तस्य गम्भीरा स्वार्थशून्या भयरहिता धैर्योत्साहयुक्ता द्रढीयसी देशभक्तिः। मनसा वाचा

कर्मणा स देशे प्रेमन्यदधात्। देशप्रेम एव स धर्मं मेने; व्रतं, नियमञ्च तदेव सोऽवागमत्। एतादृश्यानुपमया भक्त्या सश्चत्वारिंशद्वर्षाणि देशस्य सेवामव्यवहितां विदधौ। तस्मिन्नुच्चश्रेणीया विद्वत्ता विललास। अद्भुतैव दिव्या मेधा तस्मिंश्चास्फुरत्। यादृशी तस्मिन् विचित्रा वाक्शक्तिरशोभत तादृश्येव तत्र प्रौढतरा लेखनशक्तिरपि दिदीपे।

बी० ए०, एल एल० बी० परीक्षयोरुत्तीर्ण आसीदतोऽसौ श्रीतिलकः प्राड्विवाग् भूत्वा विपुलधनार्जनं कृत्वा भौतिकानि नानासुखानि भोक्तुं स्वजीवनं व्यापृतं कर्तुं सर्वथैव क्षम आसीत् परं स देशभक्तः स्वातन्त्र्यप्रियो नवतरुणस्तत्प्रलोभने न निपत्य स्वेच्छया निर्धनतामवरिष्ट। तदीयस्य मानसस्य महनीयतायाः स्वातन्त्र्यप्रियतायाः देशानुरागितायाश्चातः परं किं प्रमाणं स्यात्।

साधारणेष्वपि जनेषु देशभक्तिभावनां प्रसारयितुं देशस्य राजनीतिकस्थितिञ्चावगमयितुं श्रीतिलकः स्वसहचराणां साहाय्यमवाप्य 'केसरी', 'मराठा' च पत्रं प्रकाशयाम्बभूव। तयोरुभयोरपि पत्रयोर्लेखाः प्रौढा देशप्रेमपरिपूर्णाः प्रकाशिताः अभूवन्। ताभ्यां पत्राभ्यां महाराष्ट्रेऽधिका जागृतिरभवत्। जनताहितरतानां तत्त्वानामोजस्विन्यां प्रेरणाप्रदायां रीत्यां सः प्रकाशनञ्चक्रे; सः जनताया जीवनं च देशप्रेमोन्मुखञ्चकार। तस्मात्कारणात् सः शासनाधिकारिदृष्टिं दिने दिनेऽदुनोत्। १८९७ तमेशवीयाब्दे यदा महामारीरुग् भृशं प्रससार न शासनं तदा तन्निवारणाय समुचितं प्रबन्धञ्चकार। तेष्वेव दिनेषु कश्चिदांग्ल एको हतोऽभवत्। तस्मिन् व्यतिकरे घटिते सति, श्रीतिलके राजद्रोहापराध आरोपितोऽभूत्। सोऽष्टादशमासान् यावत् कारागृहेऽन्तः क्षिप्तोऽभवत्। सकलमपि भारतं श्रीतिलकस्य तद् दण्डनं न सेहे। तं दण्डं विरोद्धुं देशे सर्वत्र जनता प्रदर्शनं कृतवती। एतेन तस्य मानमहत्त्वे भृशं ववृधाते। १९०८ तमेशवीयाब्दे पुनः श्रीतिलकमहाभागे सर्वकारेणैकोऽभियोग आरोपितः; षड्वर्षभोग्येन दण्डेन पुनः सोऽदण्ड्यत। असकृदित्थं शासनं तस्मिन्नारोपं कमपि न

कमप्यारोप्य तमपीडयत्। परं स तेषु सर्वेष्वपि महासङ्कटेषु धैर्याद् नोऽभ्रंशत। शासनेन पुनः पुनः पीड्यमानोऽपि न सोऽन्यायपरस्य शासनस्य पुरः प्रणतो बभूव। अस्ति श्रीतिलको निर्दोषस्तस्य स्वतन्त्रताप्रियतायादेशानुरागभावनायाश्च दमनाय शासनेन तस्मिंस्ते त आरोपा अनृताः आरोपिताः दण्ड्यते च सः पुनः पुनः" इत्येषः सर्वसाधारणानामपि जनानां दृढीयान् विश्वास आसीत्।

विपत्सु श्रीलोकमान्यबालगङ्गाधरतिलकः "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः(गीता, २.५६)" इत्येतत् स्थितधीमुनेर्लक्षणमन्वर्थं व्यदधात्। यथा यथापत्सु स धैर्यं मदर्शयत् तथा तथा सर्वसाधारणानामपि तत्परकं प्रेम तत्र भक्तिः श्रद्धा चावर्धन्त।

लोकमान्यः सनातनधर्मेऽसीमां श्रद्धां निदधौ; स्वकीयस्य देशस्य प्राचीने गौरवे सः परमाभिमानवानासीत्। तदीयेवेषे, तदीये वासे, तदीयेषु सर्वकार्यकलापेषु महदेवार्जवं सात्त्विकत्वञ्च समशोभेताम्। तस्य त्यागः श्लाघनीयस्तस्य चरित्रं पावनं, सुखे दुःखे चानुक्षणं सन्ततं तदीयं स्वदेशाभ्युदयचिन्तनञ्च लक्षशो जनांस्तद्दृढभक्त्यां निमग्नानचीकरन्। ते तं सततं स्वस्वान्तासने प्रतिष्ठापयाम्बभूवुः। तं विरोद्धुं तस्य प्रभावं पातयितुञ्च सर वेलण्टाइनशिवरोली यत् पुस्तकं लिलेख तदपि तदनुकूलमेवासिद्ध्यत्। तेन तस्य महत्त्वमेवैधाञ्चक्रे।

श्रीलोकमान्यतिलके पाण्डित्यं परमगम्भीरं शास्त्रसागरतलस्पर्श्यासीत्। "ओरायन", "वेदेष्वार्याणामार्कटिक होम" इत्येतदादिग्रन्थाश्च तस्य यशो नितरामेव चतसृष्वपि दिक्षु वितेनुः। षड्वर्षभोग्यं दण्डमुपभोक्तुं यदा स माण्डलेकारागारेऽवसत् तदा स भगवद्गीतारहस्यं नाम कर्मयोगशास्त्रं विरचय्यासामान्यमेव वैदुष्यमभिव्यानक्। देशनिवासिनो देशान्तरीयाश्च जनास्तदधीत्य निःश्रेयस्करंसाधनमवाप्तुं लौकिकं पारलौकिकञ्च कर्त्तव्यमवगन्तुं परमोत्तममध्वानं द्रष्टुं शक्नुवन्त्यतस्तदीयमिदं सर्वसंसारविद्वद्वन्दनीयं महनीयं

कार्यं तस्य यशोऽमरं विधातुं विद्वज्जगति बर्तते पर्याप्तम्। वस्तुत ईदृशा महामानवा जगति विरला एवोत्पद्यन्ते।

श्रीलोकमान्यस्य तिलकस्य विचाराणां केचन्नंशा इह निधीयन्ते:—

"स्वराज्यस्यासादनमस्ति मम जन्मसिद्धोऽधिकारः : अहं तदासाद्यैव विश्रामश्वासं ग्रहीष्यामि। यावदेषा भावना मम हृदि जागर्ति तावन्नाहं स्थविरः। नेमामिच्छां शस्त्रं छेत्तुं शक्नोति; अग्निर्न तां दग्धुं प्रभवति; जलं क्लेदयितुं न क्षमम्। समीरश्च शोषयितुं न समर्थः स्वसदनस्य व्यवस्थापनमस्माकं जन्मसिद्धस्वत्वं वर्तते। अन्यः कश्चित् तदधिकारी तावद् भवितुमर्हति यावद् वयमबोधाः (अल्पवयस्काः)। न वयं स्मो विक्षिप्ताः। स्वराज्यप्राप्तिनिमित्तेन प्रयतनमीश्वरं प्रति स्वकर्त्तव्यस्य पालनमस्ति। अस्त्यस्मिन् समये परमेश्वरः कृपालुस्तेनास्माकं कृते सदवसरः प्रदत्तोऽस्ति। अतः इदानीं पारस्परिकं जाति-प्रदेशादिपरकभेदभावगतकुविचारान् सकलान् हित्वा विस्मार्य च, पुर उपसरन्तः कर्तव्यक्षेत्रेऽकुतोभया भवन्तः स्थिताः स्याम-इत्येतस्त्यस्माकं करणीयं कार्य्यम्। कामं मदीया स्यान्निन्दा प्रशंसा वा; कामं मदीयमद्य मरणं भवेद् वा शासनेनाहं हतो भवेयं नेयं चिन्तामपि विद्यते। मम तूद्देश्यं—"भारतीया भवन्तु स्वतन्त्राः" इत्येतन्नष्टं न भवितुं शक्यम्। अयि मातृभूमे भारत। त्वमसि सुखानां शेवधिः; संसारे त्वत्त उत्कृष्टतरो न कोऽपि देशः। अहमुपरतो भूत्वा कामयिष्ये इदमेव यत् तवोत्सङ्गं पुनः प्राप्नुयाम्। यावत् तव दुःखानि नापनीतानि स्युर्यावच्च न त्वं स्वतन्त्रं स्यास्तावदेषोऽहमत्रैव जन्म गृह्णीयाम्"।

"चेत् स्वराज्यस्याधिकारा मुसलमानेभ्यो दत्ता भवन्ति वा राजपुत्रेभ्यो (राजपूतेभ्यः) विश्राणिता भवन्ति किं वा लघुतमान्त्यजजात्यै वितीर्णा भवन्ति, तदा न भवति तन्मम चिन्तनीयम्। यतो हि तदानीन्तु तदस्माकं स्यात् पारस्परिकविमर्शणम्। एतस्मिन् समये तु "प्रभुंमन्यमानाद् भृत्यात् (आंग्लशासनात्) सत्ता केन प्रकारेण प्राप्तुं शक्यास्ती"त्येतदेव

लक्ष्यम्" ।

'आपद्भ्य आशङ्कनं मानवत्वाद् भ्रंशनं ज्ञेयम् । आपदस्तु सन्त्यस्माकमुपकारिण्यः । काठिन्यानि हृदयेऽस्मदीये साहसं निर्भीकत्वञ्च जनयन्ति । तेभ्यो रक्षिता भवन्तो वयं कष्टानां साम्मुख्यं समुदं कर्तुं शक्नुमहे । स देशः सा च जातिर्नोन्नतिं कर्तुमर्हतो यदीये वर्त्मनि न सन्ति कष्टानि । अतः कष्टानि तु अभ्युपगन्तव्यानि सन्ति" ।

"राष्ट्रसेवाया येन स्वकीयं जीवनं हुतं, मम हृदये तस्य कृत एव स्थानम् । यस्य मानसे मातृसेवाभावना जागर्ति, स एव मातुः परमार्थतः पुत्रः । नश्वरस्यास्य मद्वपुषस्तु नाशः प्रत्यासन्न एव । अयि भारतनेतारः, भारतमातुः सुपुत्राः ! अहमन्ततो भवतः सर्वान् प्रार्थये इदमेव यन्मम कार्यमेतदुत्तरोत्तरमेधयन्तु" ।

"राष्ट्रार्थं यत्कर्त्तव्यमस्माकमग्रे वर्तते तदस्ति महद् विस्तृतं विशिष्टतमञ्च; भारतमातुः सर्वैरपि पुत्रैः सोत्साहं ससंगठनञ्च देशस्य सेवा कार्या । नेदं कार्यं समयान्तरापेक्षि । न तत् कालान्तरं सहेत । भारताम्बास्मानुच्चैराह्वयन्ती वदति—"उत्तिष्टत परिबद्धकटयो भवत; कार्ये च कार्ये संलग्नाः सञ्जायध्वम् । अस्ति मामकीनं कर्त्तव्यमिदमिदानीन्तनं यदहं भवत्सु मातुरेतस्मिन्नाह्वाने सर्वमपि मतभेदं विस्मरन्तु, राष्ट्रियादर्शाणां प्रत्यक्षप्रतिमा भवितुमुद्यतन्तामित्येतां प्रार्थनां कुर्याम् । ईश्वरोऽस्मदीयोद्योगानां फलमस्मभ्यं दास्यति, चेन्नास्माभिः सा सफलता लब्धा तदा निःसंशयं भाविसन्ततिस्तामवश्यमधिगमिष्यति ।

नवचेतनासञ्चारकस्य भारतराष्ट्रात्मप्रबोधकस्य स्वतन्त्रतासन्देशहरस्य लोकमान्यतिलकस्य स्वराज्यावाप्तिभावना कियती तीव्रा कियती बलीयसी कियती चोत्कटासीदित्येतत् तदीयोपरिनिहितविचारेभ्यो ज्ञातुं शक्यं भवति । सः स्वकीयया देशभक्तिसमुद्दीपितचरित्रश्रिया दिव्यया भावनया त्यागपरिपूतया, दिव्यया च प्रतिभया भारते स्वराज्यस्यौजस्विनीं वर्चस्विनीं च भावनां सरयं प्रावीवहत् । लोकमान्यस्य

कठोरेण विरोधिना सरह्वलेनटाइनचिरोलेन स्वकीये '*Indian unrest*' नामके पुस्तके लिख्यते—"चेद् भारतीयाशान्तेः कोऽपि यथार्थतया जनको भवितुमधिकारं बिभर्ति तदा सोऽयमस्ति बालगङ्गाधरतिलकः"।

महात्मा गान्धी श्रीलोकमान्यं तिलकमित्थं प्रशंसति—"भारतप्रेम लोकमान्यस्य तिलकस्य जीवनश्वासोच्छ्वास-सदृशमासीत्। तस्मिन् धैर्यं न कदापि न्यूनतां गतम्; निराशा तं स्प्रष्टुमपि न शशाक। तदलौकिकगुणानां स्वचरित्रे सन्निवेशनमेव तस्य स्मारकत्वेन स्यात्"।

श्रीयोगिनारविन्देन तस्मै श्रद्धाञ्जलिं समर्पयताभिहितम्—"विन्दुं सिन्धौ पर्यणोनमत्। छिन्नविच्छिन्नसामग्र्या सः स्वराज्यस्य विशालं प्रासादमुदस्थापयत्"।

महान् देशभक्तो विद्वच्छिरोमुकुटमणिः १९२० तमेशवीयाब्दे नश्वरं शरीरं विहाय स्वर्गं ययौ। देहावसानाहनि समग्रमपि भारतं शोकध्वान्तावृतं बभूव। भारतमेव न तदा तच्छोकेन सकलमेव जगद् रुरोद।

**सौजन्यशोभितसमुज्ज्वलचारुवृत्ते**
**यस्मिन् मनीषिणि गुणा बहवः प्रकृष्टाः।**
**वासं विधाय नितरां मुदमाप्तवन्त-**
**स्तं नौम्यहं तिलकभारतमातृसूनुम्॥**

**भीतो बभूव सुमतिर्न हि सङ्कटेभ्यः**
**कुर्वन् स्वकीयभरतावनिमातृसेवाम्**
**न्याय्यात् पथो नयविदामभिनन्दनीयो**
**विद्वांश्चचाल न मनागपि देशभक्तः॥**

**रीतिश्च का सुरुचिरा विमल श्च कोऽध्वा**
**कर्त्तव्यमस्ति ललितं भुवि किं मनोज्ञम्।**
**इत्यत्र सः शुचिमतिर्नितरां विवेद**
**भाति स्म हंस इव सः प्रथितो विवेकी**

**भक्तिं दधद् भृशमसौ जगदीश्वरस्य**
**ज्ञानेऽनिशं विहरति स्म च कर्मयोगी।**

**लोकाभिरामतिलकं तिलकं बुधानां**
**श्लाघामहै हि विधिना कतमेन वंद्यम् ॥**

**श्रीगोपालगणेश आगरकरः**

महाराष्ट्रप्रदेशे ये महापुरुषा देशस्य राजनीत्यां समाजसेवायाञ्च प्रमुखतया भागमग्रहिषुस्तेषु श्रीगोपालगणेशस्यागरकरोपाह्वस्य स्थानं नितान्तोदग्रम्। प्रारम्भे स लोकमान्यस्य तिलकस्य सहयोगी बभूव, परं केषुचन विषयेषु समयान्तरेण द्वयोर्मध्ये मतभेदोऽजायत। स्वराज्यस्थापनायान्तु द्वावप्येकमतावास्ताम्। उभावपि वैदेशिकसत्ताक्रियामाणाद् राष्ट्रियपतनाददूयेताम्। श्रीलोकमान्यतिलको विशुद्धभारतीयसंस्कृतिपक्षमपुष्णादतस्तदाधार एव स्वराज्यप्रासादनिर्माणमचिकीर्षत्; परं श्रीगोपालगणेशः संस्कृतिपोषकः सन्नपि प्रतीच्यायां संस्कृत्यामन्वरज्यत्। पाश्चात्यसंस्कृत्यां स्थितानि सत्तत्त्वानि भारतीयायां संस्कृत्यामन्तर्भाव्य सा समृद्धिशालिनी कर्त्तव्या; जीवितसंस्कृतिभ्यो न भारतीया संस्कृतिर्दूरे निधातव्या। अन्यसंस्कृतिषु विद्यमाना विशिष्टताः आदायात्मनि ताः समावेशनीयाः। विचारस्वातन्त्र्यं प्राधान्यं प्राप्नुयात्। यत्र परम्पपरागतानां भावनानां युक्तिवादस्य च संघर्षः स्यात् तत्र युक्तिवादोऽभ्युपगनीय इति मतमागरकरस्यासीत्।

आगरकरः समाजोत्थापनपक्षे प्रबलामभिरुचिं निदधौ। स यदा 'केसरी' पत्रस्यासीत् सम्पादकस्तदा प्रगतिशीलां राष्ट्रियतां समाजोन्नयनञ्चोद्दिश्य पूर्णशक्त्योच्चतरमुद्योगमकार्षीत्। "सुधारक" पत्रं प्रकाश्य स भारतीयं समाजं सम्मार्ष्टुं गम्भीरतान्वितानोजोमयाँल्लेखान् प्रकाशयामास। येभ्यो हेतुभ्यो येभ्यो दोषेभ्यो हिन्दुसमाजो निर्बलत्वं जर्जरत्वञ्च प्रत्यपद्यत तद्विरोधाय सः स्वपत्रे परमप्रबलमान्दोलनमचालयत्। तदीयेषु लेखेषु प्रौढ़ा विद्वत्ता, भारतीयसमाजस्थितिगम्भीरविश्लेषणं, समाजनिर्माणोपयोगिन्य उद्भावनाः विबभुः। सः सन् निर्भयः सामाजिकान् दोषान् न्यदधात्। स्त्रीपुरुषसमानतायाः, स्त्रीशिक्षायाः, प्रेमपरिणयस्य, विधवोद्वाहस्य, अस्पृश्यतोद्धरणस्य, अन्येषाञ्चैवंविधानां विषयाणां

पक्षे स बलवतीं लेखनीमयूयुजत्, प्रबलतरञ्च सामाजिकमान्दोलनं प्रावीवृतत्। भारतं भवेत् समृद्धं कुरीतिरहितम्; संसारस्तदादरपूर्वकमीक्षेत इति स आचकाङ्क्ष। इह श्रीमत आगरकरस्य विचारांश एकस्माल्लेखादुद्ध्रियते :—

"स्वप्राचीनर्षय इव वयमपि नवप्रथानां नवरीतीनाञ्चावतारणेऽधिकारं निदधीमहि; ईश्वरानुग्रहेण वयमपि प्रत्ना आचार्या इव स्वकीयानधिकारान् संरक्षेम; परमेश्वरेणास्माकं कृतेऽपि बुद्धिः प्रदत्तास्ति सत्यासत्ययोर्ज्ञानार्थम्। अस्पृश्यबन्धूनां दयनीयामवस्थां वीक्ष्यास्माकं हृदयेन मृदुलेन भवितव्यम्। अस्मत्पूर्वजप्राप्तविश्वविषयकज्ञानादस्मदीयं तज्ज्ञानं प्रभूततरं वर्तते। अतोऽस्माभिस्ता अज्ञास्ताः प्रथाः स्वीकरणीयाः याः अस्मत्समाजार्थं हितकारिण्यो भवेयुः। हानिकारिणीः प्रथाः अवज्ञायास्माभिः समाजकल्याणकारिण्यस्ताः क्षिप्रमेवावलम्बनीयाः। इमानीदृशांञ्च विचारततिं प्रगृह्य वयमुत्थाननिमित्तेन पुर उपसरेम" इत्येतदादिविचारेषु विदुषः श्रीमत आगरकरस्य प्रगतिमतीनां भावनावलीनां दर्शनमुपलभ्यते।

श्री आर० जी० प्रधानमहोदयः स्वग्रन्थे "*Indian Struggle far Swarajya*" इत्येतस्मिन् स्वग्रन्थे लिखति-प्रदेशान्तराणि न महाराष्ट्र इव समाजाभ्युत्थानकार्येऽभ्युदयं गन्तुं क्षमाण्यजायन्त। तत्र कारणमस्ति श्रीमत आगरकरस्य लेखमाला। आगरकरो भारतीयराष्ट्रियान्दोलने बुद्धिवादिनां समुन्नतिकार्यरतानां तत्त्वानां प्रतिनिधित्वञ्चकार।

**श्रीगोपालकृष्ण गोखले**

भारतराष्ट्रस्य श्रीगोखले महानभिनन्दनीयो नेता बभूव। महात्मागान्धी तं स्वराजनीतिगुरुममंस्त। सः (म० गान्धी) स्वकीयायामात्मकथायां श्रीगोखलेमहाभागस्य देशसेवां भृशं श्लाघमानो वीक्ष्यते। स तं महत्या श्रद्धयावलोकयामास।

आसीदस्मदीयो माननीयो गोखले निर्धनमातृपित्रोः पुत्रः। तस्य ज्येष्ठो भ्राता तच्छिक्षार्थं प्रययास। सोऽष्टा-

दशवर्षदेशीयो यदाऽऽसीत् बी० ए० बभूव । एतेन तस्य तीक्ष्ण-प्रतिभावत्ता ज्ञायते । तस्य च्छात्रजीवनं निर्धनतायां कठिनतासु च कठोरासु व्यत्यगात्; परं स मनस्वी ताः सर्वा अपि विषमताः अवजानानो विद्याधनमानर्ज । मेधावित्वाद् व्युत्पत्तिमत्त्वान्मनीषित्वाद् बहुविधगुणाकरत्वाच्चोच्चतरपदमवाप्तुं क्षम आसीत्, परं स विंशतिवर्षदेशीयवयसः पूर्णत्वात् प्रागेव स्वमातृभूमि-भारतसेवानुरागी निःस्वतायास्त्यागस्य च जीवनं गमयितुं कृत-सङ्कल्पोऽभवत् । सः पूनानगरस्थफर्ग्युसनकालेजेऽध्यापयन् स्व-जीवनस्य विंशतिवर्षाणि निनाय । तां महीयसीं महतीं सेवां कृत्वापि स्वेच्छया पञ्चसप्ततिरूप्यकाण्येव प्रतिमासमग्रहीत् । श्रीगोखलेमहाभागः कालेजस्याभ्युत्थानाय भृशं श्रमं व्यदधात् । सः स्वोद्योगेन तत्कालेजप्रयोजनेन पुष्कलं धनराशिं संगृह्य तदा-धारभूमिमदृढयत् ।

श्रीनिवासशास्त्री "लाइफ ऑफ गोपालकृष्ण गोखले" इत्येतस्मिन् स्वग्रन्थे लिखतिः—"श्रीरानाडे महानासीन्मानवः । तस्य श्रीचरणयोः सान्निध्ये निषण्णतायाः सौभाग्यमलब्ध गोखलेमहाभागः । ततोऽसौ तदनुभवं ज्ञानमुद्योगसंलग्नताश्रि-यञ्चाप्तुमसाधारणमेवावसरमधिजगाम ।

श्रीमद्रानाडेमनीषिशिरोमणेः प्रेरणया श्रीगोखले पूनायाः सर्वजनहितरतायाः सभाया मन्त्रित्वमङ्गीचकार । मन्त्रित्व-पदमलङ्कुर्वन् स तत्रत्यायास्त्रैमासिकपत्रिकायाश्च सम्पादनञ्च-कार । एतदन्तराल एव स आगरकरस्य 'सुधारक' पत्रेऽपि स-माजसेवापरकाँल्लेखान् लिखितुरारेभे । ततश्चाब्दद्वितये सत्य-तीते भारतीयराष्ट्रीयमहासभायाः (कांग्रेसस्य) मन्त्रित्वपदं विभूषयामास । दिने दिने श्रीगोखलेमहाभागस्य प्रतिभा भृशं भृशमेव विद्योतितुमारभत । १८९६ तमेशवीयवर्षे श्रीवेल्वी-नामकस्य कस्यचनसुजनर्षभस्याध्यक्ष्ये लन्दने आयोग एकोऽ-भवद् गठितः । भारतार्थिकावस्थाया निरीक्षणं तस्योद्देश्य मासीत् । इंगलेण्डो होमचार्जेज (गृहराजस्व प्रभृति) पथेन भारतात् कोटिशो रूप्यकाणि गृहीत्वानुवर्षं तच्छोषणे संलग्न आसीत् । एतस्यायोगस्य पुरतः साक्षित्वं प्रदातुं बङ्गप्रदेशाच्छ्री

सुरेन्द्रनाथबनर्जी बम्बईतः श्रीवाछा माद्रसतः किञ्च श्रीसुब्रह्मण्यम् अय्यरोऽपि गतः । श्रीरानाडे जोशी च पूनातो नवतरुणं गोखलेमहाभागं साक्षितायै लन्दनं प्राहिणुताम् । स भारतार्थिकस्थितिं निध्याय यया श्रेष्टया योग्यतया साक्षिताञ्चकार तत्प्रभावो लन्दनस्य राजनीतिकक्षेत्रेष्वतितरां पपात । सर विलियमवेडरवर्नमहोदयो निजगाद तत्सन्निधिमागम्य भवान् स्वकर्त्तव्यं सर्वोत्कृष्टरीत्या कृतवान् । भवदीयं प्रतिभूत्वस्ममत् पक्षेऽनुकूलमुत्तममेवाजायत । भवान् स्वराष्ट्रस्यानेन कार्येण यां महतीं सेवामन्वतिष्ठन् तदुपलक्ष्येऽहं भवन्तमभिनन्दामि । अस्मदीयमल्पमतनिष्ठं प्रतिसम्वेदनं भवदीयसाक्षितामाश्रित्यावतिष्ठते । आयोगस्याध्यक्षः श्रीवेल्बो, वयोवृद्धो दादाभाई नौरोजी भवदीयसाक्षितयात्यन्तप्रसन्नातां गतौ स्तः" ।

श्रीकेननाम्नांग्रेजनेन श्रीगोखलेमहाभागं प्रति सम्प्रेषिते पत्रे लिखितमासीत्—

"भवदीयायाः साक्षितायाः अध्ययने सप्तहोराव्यापी समयो मया प्रयुक्तीकृतः; अहमतो वक्तुं शक्नोमि सर्वसम्बद्धविषयेषु भारतीयो विद्वान् युवा ययार्हतया दक्षतया च प्रकाशं न्यपातयत् सा वस्तुतः प्रशंसनीयास्ति । नाहं यद्यपि सर्वत्रात्र भवद्विचारेषु सहमतः परमहं वक्तुमिदं शक्नोमि यद् भवत्साक्षितायाः प्रभावः समचीनतयाऽऽयोगमावर्जयितुमीष्टे स्म । भवान् श्रीवाछा च स्वदेशस्यापूर्वां सेवां कृतवन्तौ; एतदर्थमवश्यमेव देशो भवदीयो गौरववान्" ।

भारतस्य व्यवस्थापिकासभायां श्रीगोखलेमहाभागस्यावर्तत भृशप्रभाव । सदस्यताया आद्येषु चतुर्षु वर्षेषु स एकाक्येव श्रीलॉर्डकर्जनेन सह संघर्षं कुर्वाणः प्रत्यलक्ष्यत । एवंविधायां स्थित्यां निर्बन्धपरस्य साम्राज्यवादिनो निर्भीकस्य च देशभक्तस्य पारस्परिकः सम्बन्धः स्नेहस्निग्धौ न भवितुमर्हति । परं सत्यपि तथा, श्रीलॉर्डकर्जनस्तस्मिन् परमादरधियं निबबन्ध । तत्प्रशंसकहृदयश्च स आसीत् । एकदासौ स्वपत्रे श्रीगोखलेमहाभागे विचारमिममभिव्यानक् :—

"परमात्मना भवदर्थमसामान्यार्हतास्ति प्रदत्ता । सा

च कृत्स्नतया भवता स्वराष्ट्रसेवायां समर्पितास्ति; धन्यो भवान्" ।

तदेदृक् कोऽपि न प्रश्न ईक्षितोऽभवद् यो न श्रीगोखलेमहाभागेन सन्तोषाधायकतापूर्वकं समाहितः । स देशसेवाप्रयोजनेनासकृदिङ्गलेण्डमयासीत् । तत्रत्येषु सामाजिककार्यकर्तृषु तस्य प्रभावो नितरां न्यपतत् । एकदा 'नेशन' पत्रस्य सम्पादको मैसिंघमोऽवोचत्—"श्रीगोखलेसदृशमनीषी राजनीतिविन्न कोऽपि इंगलेण्डे सुलभः; निःसंशयं सः श्रीमत एसिक्कथादपि गरीयान् । देशसेवाविषयकेषु प्रचुरेषु कार्येषु तदीयमन्यतमं कार्यमासीद्—'भारत-सेवकसमिति-संस्थापनम्' । मातृभूम्यां गम्भीरा हार्दिकभक्तिर्मानवेषूत्पद्येत इति तद् ध्येयमासीत् । तस्या विचार एव मानवमुत्साहप्रगाढेनान्वितं विदधत् तं स्वदेशसेवायां रमयेदिति तदिष्टमवर्तत । भारतसेवकसमितेः स्थापितायाः यदा षण्मासा व्यतीतास्तदा सः कांग्रेसाधिवेशने, काश्याम्, सभापतिपदासीनः सन्नुपर्युक्तान् विचारान् स्वभाषणेऽभिव्यक्तांश्चकार । कांग्रेसस्य यदासावध्यक्षो बभूव तदा स एकोनचत्वारिंशद्वर्षदेशीय एवासीत् । एतावत्यामल्पीयस्यामवस्थायां नान्यः कश्चित् कांग्रेसस्याध्यक्षतां प्राप्तुं शशाक । अल्पवयाः अध्यक्षो भवन्नपि स बुद्धिमत्तमोच्चतमाध्यक्षेषु मतोऽभवत् । भवतु नाम कोऽपि तद्विचारेषु क्वाप्यसहमतो वा न, परं निर्विवादमतमेतद् यदसौ महान् देशभक्त आसीत् । देशस्य भक्तिस्तदीये रोम्णि रोम्णि राजते स्म । सः सन्ततं सर्वस्याञ्च स्थित्यां देशमचिन्तयद् देशार्थं सततमश्राम्यत् । आसीत् सः परमोदारमनाः । स विरोधिनोऽपि गुणान् प्रशशंस । सः प्रयागे भारत-सेवकसमितिमस्थापयत् । तत्र माननीयश्रीनिवासशास्त्रि-पण्डितहृदयनाथकुञ्जरूनिभपरमदेशभक्ता मिमिलुः । तत्समितिप्रस्तावनायां माननीयः श्री गोखले यानि वचांस्यलिखत् तानि त्वेकेकैन देशभक्तेन देशसेवाकारिणा स्वहृदयेऽङ्कनीयानि—

"साम्प्रतं समयोऽयं स आगतोऽस्ति यदा भारतौकसोभिर्यथेष्टसंख्यायां राष्ट्रस्य कार्ये तामेव भावनां परिष्वज्य संलग्नै-

भाव्यं, यां भावनां संश्रित्य धर्मार्थं कार्यं क्रियते। देशप्रेम्णा-स्मदीयं हृदयं तथा परिपूर्यमाणं स्याद् यथा तत्पुरतः सर्वम-प्यन्यत् क्षुद्रं प्रतिभासेत। तद्देशप्रेमापेक्ष्यते परमौत्साहपेशलो, मातृभुवः सेवार्थं त्यागावसरे प्रत्यासन्नेसति यदानन्दममन्दमनु-भवेत्। तन्निर्भीकं मानसमपेक्ष्यते यत् सङ्कटेषु काठिन्येषु वा स्वध्येयाद् विचलनं न जानीयात्! ईश्वरे स दृढीयान् विश्वास इष्यते यं किमपि वस्तु न कम्पयितुं प्रभवेत्। ईदृशैरुपादानैः सुसज्जितो भूत्वा कार्यकर्ता स्यादग्रेसरः। देशभक्तो देशसेवाया-मात्मानं प्रवर्त्य कमप्यद्भुतमेवानन्दं तं विन्देद् यं प्राप्य तस्या-त्मात्मानं कृतकृत्यं मन्येत।

म० गान्धी दक्षिणाफ्रीकाप्रवासिभारतीयाधिकारं पातुं यन्महदान्दोलनं प्रवर्तयामास तत्र श्रीगोखले हार्दिकं साहाय्यं प्रायच्छत्। भारतस्यैकस्माद् दिगन्तादपरदिगन्तं यावत् स भ्रमणं विधाय प्रभावशालिभिर्भाषणैर्महात्मना गान्धिना प्रवर्तितस्यान्दोलनस्य पक्षे लोकमतं सन्नद्धमकरोत्। चतुर्दशा-धिकैकोनविंशतितमेशवीयाब्दे स महान् ज्ञानवान् देशप्रेमपावनो मानवर्षभो दिवमारुरोह। पितृवने स्वर्गीयमात्मानं प्रति श्रद्धा-ञ्जलिं समर्पयन् लोकमान्यस्तिलकस्तद्देशभक्तस्योदात्तजीवन मनुसर्तुं जनाननूदत्।

**श्रीगोखले लोकशुभंयुबन्धु-**
**गोपालकृष्णः प्रथितो विपश्चित्।**
**संसेव्य देशं प्रियभारतं सः**
**कालेऽपि वक्रे कृतवान् प्रकृष्टम्॥**
**आसीदसौ पावनचारुवृत्तः**
**सौजन्यलक्ष्मीललितं महत्त्वम्**
**सः सन्ततं ज्ञाननिधिर्न्यधत्त**
**देशानुरागोत्तमभावभव्यः॥**
**अर्थेषु चोच्चेषु पदेषु तस्य**
**न जातु चित्तं रमते स्म साधोः।**
**माने च नैश्वर्यवति प्रकृष्टे**
**नो भौतिके वैभववद्विलासे॥**

ज्ञानस्य सर्वत्र बुधो विकाशं
शुद्धेन चित्तेन सदाचकाङ्क्ष ।
तस्मान्मस्वी प्रतिभामिवंद्य
आचार्यतां स्वीकृतवान् सहर्षम् ॥
त्यागस्तदीयो धिषणा तदीया
तीक्ष्णा स्पृहाहीनमनस्तदीयम्
विद्यानवद्या शुचितार्जुता च
आंग्लप्रभूणां हृदयं ह्यहार्षुः ॥
लोकप्रियत्वं नितरामगाधं
संलब्धवान् यादृशमत्र देशे ।
सः शेमुषीसुन्दरशीलशुभ्रो
नो तादृशं कोऽपि कदाचिदन्यः ॥
जातास्मदीया मुदिता तदानीं
तं प्राप्य चारित्र्यसुधासमुद्रम् ।
सूनुं स्वकीयं गुणराजिरम्यं
पूज्या जगत्यामिह भारताम्बा ॥

**श्रीपण्डितमदनमोहनो मालवीयः**

महापुरुषेषु तेषु श्रीपण्डितमदनमोहनमालवीयः स्वकीयमनुपममुत्कर्षं गौरवञ्च गृह्णन्जगद्व्यापिना यशसाभिवन्द्यमानः सनातनधर्मपताका मुच्चैर्विधूनयन् पद मुदग्रतर मध्यासाञ्चक्रे ये स्वजीवनं देशोपासनायां न्ययूयुजन् । महात्मा गान्ध्यपि तमतिशयश्रद्धयावलोकयामास मन्यते स्म च स्वज्येष्ठबन्धुमिव तम् । सत्यपि राजनीतिपरकमतभेदे म० गान्धी श्रीमालवीयस्य महनीयाः महतीः सेवास्तदीयं धर्मनिष्टसाधु जीवनं लोकोत्तरञ्चोत्सर्गं नितरांमुहुर्मुहुः श्लाघाञ्चक्रे। "श्रीमालवीयमते भेदं निदधतोऽपि कतिपये जनाः मालवीयमहाभागस्य साधुचारित्र्याचारविचारान् महत्यैव श्रद्धया वन्दन्ते स्म" इत्येतत्पण्डितो जवाहरलालनेहरू स्वात्मकथायां लिखति ।

श्रीपण्डितमालवीयस्तपस्त्यागमयं जीवनं पर्यपुष्णात् । तदीया देशसेवा भारतीयेतिहासस्य गरिमाणमुन्नयति । दया-सुजनता-मृदुलता-मधुरतादिसद्गुणास्तु वस्तुतस्तस्य जीवनस्या-

ङ्गान्येवाभूवन्। निर्धननिर्धनतरमनुष्यस्तत्सकाशे गन्तुमनुमत आसीत्। स महामनास्तस्य साहाय्यं कृत्वा तज्जीवनमुत्थापयितुं यतते स्म। सहस्रशो जनाश्छात्राश्छात्र्यस्तत्साहाय्यं तत्कृपामधिगम्य स्वजीवनं विद्या-गुणकलासमृद्ध्यादिसमुल्लसितं कर्तुं प्रभवन्ति स्म। स देशस्य महान् भक्तो देशार्थमजीवद् देशार्थमेवाम्रियत।

पण्डितमालवीयो द्विः कांग्रेसस्याध्यक्षासनं विभूषयामास। दिल्लीकांग्रेसाधिवेशने हिन्दू-मुसलिमैकतार्थं सः स्वभाषणेन यां हृदयमर्म्मस्पृशिणीं प्रेरणां दत्तवान् सा सर्वस्या अपि जनताया हृदयमैक्योन्मुखं विदधौ। तदीयां प्रियां परमवैदुष्यबन्धुरां वक्तृतां निशम्य सहस्रशो जनानां नयनान्यश्रुधाराप्रवाहीण्यदृश्यन्त।

आसीत् मालवीयमहाभागो हिन्दीभाषायां महाननुरागी। स हिन्दीसाहित्यसम्मेलनस्य चाध्यक्षासनं द्विरलञ्चकार। हिन्द्यैव राष्ट्रभाषा भवितुमर्हतीति तदीयं स्पष्टं मतमासीत्।

पण्डितो मदनमोहनमालवीयोऽन्वर्थतया ब्राह्मण आसीत्। सोऽस्य युगस्यर्षिरासीत्। भारतीयां संस्कृतिं सोऽनन्यया निष्ठया भजति स्म। कोहि हिन्दूधर्मस्यात्मेति सः सम्यगभ्यजानात्। स संस्कृतस्योत्कृष्टतरो विपश्चिदासीत्। संस्कृतोन्नत्यै सः कृत्स्नतया प्रययास। तदर्थं संस्कृतविद्यालयान् स्थापयामास। स्वविश्वभारतस्योच्चश्रेणीयभाषणकर्तृषु तस्य गणनासीत्। न तस्य हृदयं द्वेषो न दर्पो न चेर्ष्या स्प्रष्टुमप्यशकत्। स देशे या बहुलाः संस्थाः संस्थापयामास तासु काशीहिन्दूविश्वविद्यालयो हि वर्तते गरिष्ठः। हिन्दूविश्वविद्यालयस्तस्य स्मारकत्वेन भुवि विभाति।

**प्रावर्धयद् भारतवर्षकीर्ति**
**संसारमध्ये च सनातनं यः।**
**सम्पोषयन् धर्ममहो महीयां-**
**स्तं नौम्यहं पण्डितमालवीयम्॥१**
**निर्व्यामोहो निर्मदो निष्प्रपञ्चो**
**निर्दम्भोऽसौ निर्भयो निश्चलश्च।**

**विद्यातीर्थं नीतिविन्मानवानां**
**केषां नासीद् देशभक्त्येकहेतुः ॥२**
**ज्ञानोद्दीप्तः सज्जनोऽसौ तपस्वी**
**क्षोण्यां श्रेष्ठो ब्राह्मणो ब्रह्मवेत्ता ।**
**सानुक्रोशः सन्ततं निःस्ववृन्दे**
**त्यागश्रीभाक् तेजसामर्णवोऽभूत् ॥३**
**न्याये श्रद्धा तस्य विज्ञस्य रेजे**
**शम्भौ भक्तिर्दिद्युते तत्र नित्यम् ।**
**नूनं मान्यो मालवीयो मनीषी**
**जातोऽत्रासौ साम्यदर्शी मनस्वी ॥४**

आङ्ग्लेषु कतिपये ईदृशा आङ्ग्लास्तदा प्राप्यन्त यदाङ्ग्लशासनाधीनं भारतं मनसा वाचा कर्मणा स्वतन्त्रतां प्राप्तुं यतमानमासीत् । ते उदारस्वान्ता आंग्ला भारतीय-नेतृभिर्जनतया च प्रवर्त्यमाने तस्मिन्नान्दोलने सहानुभूतिं निदधुर्यत् स्वतन्त्रताया अधिगमनाय चेष्टमानमासीत् । तेषु विशालहृदयेषु गौराङ्गेषु अधोलिखिता आंग्लाः सन्ति विशेषोल्लेखनार्हाः—

(१) श्रीह्यूमः, (२) श्रीविलियमवेडरवर्णः, (३) सरहेनरीकॉटनः, (४) श्री डिग्बी, (५) महामनाः एण्ड्रूजश्च ।

सरविलियमवेडरवर्ण आत्मानं भारतस्य सेवकममंस्त । भारतवासिनोऽपि तस्मिन् महतीमादरधियं निबबन्धुः । स बम्बईप्रदेशे राजकीयसेवायामात्मानं प्रावीवृतत् । एतस्मिन् काले भारतीयेषु तस्य व्यवहारोऽतिसमवेदनामयोऽभवत् । स राजकीयसेवातो भूत्वा निवृत्त एकोनत्रिंशद्वर्षाण्यजीवत् । एषः सकलोऽप्यनेहास्तेन भारतसेवायामेव गमितः । सः सेवानिवृत्तिकाले यद्धनं शासनादवाप तस्यार्थस्याधिकतमोऽशो भारतीयजनसेवायां प्रायूयुजत् । १८८९ तमेशवीयवर्षे यदा बम्बय्यां राष्ट्रियमहासभाया वार्षिकमधिवेशनमभूत् तमध्यक्षपदासीनं विधाय भारतं तदुपकारणादात्मानमुद्धर्तुं ययासं । एकदा श्रीरानाडेमहाभागः श्रीवेडरवर्णमहाभागमुद्दिश्य श्रीगोखलेमहोदयमिदमब्रवीत्— "यावत्स्वाङ्ग्लेषु सः परिचि-

त्तोऽजायत तावत्स्त्रीदृक् कोऽपि नो वीक्षितोऽभवद् यः स इव स्यात्"। श्रीसुरेन्द्रनाथबनर्जो तं प्रशंसन्निदमगादीत्—"ग्रांग्ल-कर्मचारी भवन्नपि स वस्तुतस्तु भारतदेशभक्तोऽस्ति"। श्रीगोखले तु तं वेडरवर्णं स्वपितरमिव मेने। श्रीवेडरवर्ण-चरणयोः श्रद्धाञ्जलिमर्पयता तेनेदमाम्नातम्—"ग्राधुनिकस्य युगस्यायं महानादरणीय ऋषिः। एतदीयं चारुचरित्रचित्रमियत् पावनमियत् सुन्दरमियदुत्साहप्रदं वर्तते यत्तस्य शब्दैर्वर्णनं न सम्भवम्। तस्मिन् महति चारुचित्रे तु प्रेम्णा श्रद्धया च विचारणमपेक्ष्यते; मौनमवलम्ब्य तत्र मननञ्चाकाङ्क्ष्यते"।

महामानसमेण्ड्रूजन्तु भारतसमाजो वेत्त्येव सम्यक्। महात्मना गान्धिना, श्रीविश्वकविरवीन्द्रनाथेन च समं तस्यासीदात्मीयः सम्बन्धः। स भारते 'दीनबन्धु' रित्येतया प्रशस्त्या प्रशस्त ग्रासीत्। सोऽजस्रं भारतमधिवसन् दीनदुःखितान् न्यषेवत। जनता तस्मिन् नितरामप्रीयत। महात्मागान्धी तु तमधिकृत्यावोचदिदम्—"चेन्मम सकाशे समयः स्यादहं तदाऽऽजीवनमेण्ड्रूजस्य गुणान् गायेयम्"।

श्रीडिग्बी श्रीसरहेनरीकॉटनश्च भारतहिताय यदाकार्ष्टां तदपि वर्तते कीर्तनीयम्; एतावुभावपि भारतोत्कर्षे श्रद्धां तदभ्युदयनिमित्तेन च शुभाकाङ्क्षिणावास्ताम्। ग्रन्ये च भारतकल्याणे मतिं मानसञ्च निदधुस्तेषां सेवापि वर्तते उल्लेखनीया।

यदा भारते राजनीतिकजागरणमवालोक्यत पुरा तदेह धार्मिकं सामाजिकञ्च जागरणमदृश्यत। यो हि देशस्यास्य तदानीन्तनस्य धार्मिके सामाजिके च जीवने क्रान्तिकलितं परिवर्तनमकार्षीत् सोऽस्ति महर्षिर्दयानन्दः।

शिवरात्रौ भक्त्या व्रतस्थितो बालो मूलशङ्करः (गच्छता कालेन यो 'दयानन्द' इति नाम्ना प्रथत) शिवमूर्तेः परि ग्राखोर्विचरणं वीक्ष्य मूर्त्यर्चाविपरिपन्थिनीं भावनां यदेयाय तदा स तां भावनां पितुः सेवायां न्यवेदयत्; परं मूलशङ्करस्य तद्विषयिणीं शङ्कां प्रति स्वध्यानं नावर्जयत्। मूलशङ्करस्य मनः सत्यमार्गणोत्सुकमजायत। सः सपदि सदनान्निश्चक्राम। स तं गुरु

मार्गयितुं गिरौ गिरौ वने वने च विचचार यः सत्यतत्त्वं बोधयितुं शक्नुयात्। स एतदर्थं नितान्तं चिरं प्रायस्यत्। स बहून्यसहनीयानि कष्टानि दुःखानि चासहत। न परं स मनोऽभिमतं सद्गुरुं लब्धवान्। अन्ततो गत्वा स मथुरामगमद् यत्राशीति वर्षवयाः प्रज्ञाचक्षुः संन्यासी स्वामी विरजानन्दो न्युवास। दयानन्दस्तत्सेवायामुपातिष्ठन् न्यवेदयच्च सादरं स्वाभिलाषम्। ततश्च स भक्त्या तच्चरणयोः सेवायां संलग्नः सन् वेदानध्यगीष्ट; योगक्रियायाञ्चात्मानं व्यापृतं व्यदधात्। अधीतवेदशास्त्रोऽसौ गुरुदेवं सविनयं न्यवेदयत् "मम सविधे स्वात्मानं विहाय समर्पयितुं न किमप्यस्ति दक्षिणात्वेन। भवदीया काज्ञा"? स्वामी तद्वचो निशम्याब्रूत—"त्वमात्मानमेव गुरुदक्षिणात्वेनार्पय। तथा कृत्वा स्वविद्यां त्वं सफलां कर्तुमर्हसि। साम्प्रतं जगत्या वेदशिक्षा विस्मृतास्ति। त्वं तावत् तां स्मारय, प्रचारय च। पुनश्च वेदध्वनिना सर्वा अपि दिशः गुञ्जय। अज्ञानतमो विध्वंस्य ज्ञानप्रकाशं सर्वत्र वितनुष्व। आर्यजातिं पतनाद् गोपाय। निन्द्याः रीतीर्विनाशय, हानिकरीः कुत्सिताः प्रथाः कुरु क्षिप्रमपास्ताः। श्रीदयानन्दो गुरोरादेशं शिरोधार्यं कृत्वा वेदान् प्रचारयितुं, वैदिकसंस्कृतिमुत्थापयितुं सोत्साहं मनसा कर्मणा वाचा च समलगत्। स ग्रामे ग्रामे विचरन् वेदसन्देशमशिश्रवत्। स 'वेदाः सन्ति मानवज्ञानादिस्रोतोभूताः भारतीया संस्कृतिर्भारतीया सभ्यतैव च मानवजातेः कल्याणं कर्तुमर्हत' इत्युपदिदेश। दम्भाडम्बरादिकं विरोद्धुमसौ प्रबलप्रकृष्टमान्दोलनं व्यतानीत्। विधवाविवाहस्य, अस्पृश्यताविनाशनस्य, स्त्रीशिक्षायाश्च पक्षे सः परमबलवतीं लोकभावनामुत्पादयामास। सः परमपितृपरमेश्वरस्य पूजायां जनताया मनः प्रावर्तयद्, राष्ट्रियान् भावांश्च भव्यान् प्रति भारतीयानुन्मुखीचकार। स घोषयामास "भारतीयाः न सुराज्यमेवापि तु ते स्वराज्यमप्यभिलषन्ते" स जगाद—

"स्वराज्यार्थं वैदिकसंस्कृतेरादेशोऽस्ति; तस्मात् कारणात् एकैकस्य भारतीयस्याधिकारोऽयं यत् सः स्वकीयस्य देशस्य शासनं स्वयमेव कुर्वीत"।

महर्षिर्दयानन्दो भारते ज्ञानज्योतिः प्रसारणाय वैदिक-संस्कृतेश्च प्रकाशनाय सुसंस्कृतं समाजं स्थापयितुं देशस्यपुरतो महतीं दृढीयसीं योजनां प्रास्तावीत्; स आर्यसमाजमस्थापयद् । वेद-वैदिकसंस्कृतिप्रचार - जातिभेदनिराकरण-वर्णाश्रमपद्धति-प्रतिष्ठापनास्पृश्यतोन्मूलन-स्वराज्यस्थापनादिकम् ।

यैः कारणैर्भारतस्य पतनं जातं तेषु सः कठोरतमं प्रहार-मन्वतिष्ठत् ।

महर्षिर्दयानन्दो देशे यां धार्मिकीं सामाजिकीञ्च क्रान्ति-ञ्चकार सा तां भूमिकामररचद् यस्या उपरि अद्यतनस्य स्व-राज्यस्य भवनं संशोभते । नूनं हि भारतराष्ट्रस्य निर्मातृषु महर्षे र्दयानन्दस्य स्थानं विशिष्टमेव वर्तते ।

**ऋषि र्दयानन्दमनीषिमान्यः**
**स्वाराज्यभूमेर्विदधौ प्रतिष्ठाम् ।**
**प्रचार्य वेदान् भरतक्षितौ च**
**जगद्धितासक्तवदान्यधर्मम् ॥**

एकतो भारतस्य पारतन्त्र्यं छेत्तुं देशे राजनीतिज्ञानां प्राच्यप्रतीच्यप्रधीन्द्राणां लोकमान्यतिलकादिकानामुत्कटोत्कट-प्रयासोऽजायत । एकतश्च महर्षिदयानन्द-रामकृष्णपरमहंस-स्वामिविवेकानन्दकृतो भारताभ्युत्थानपरक स्तेजोमयस्तपोमय-श्चोद्योगः सर्वत्र सुदृढतया पावननिष्ठया च समन्वितो भरतस्य महत्यां मेदिन्यां चकासाञ्चक्रे ।

**महात्मा रामकृष्णपरमहंसः**

महात्मा रामकृष्ण आसीदुत्पत्तिस्थानमिव साधुतायाः । उदयोन्मुखदिवाकरमण्डलात् कर्षित इव प्रज्वलित ज्ञानज्योतिः सकलेभ्यः साम्प्रदायिकेभ्यो मतभेदेभ्यः परस्ताद् भूत्वा भास-मान आत्मसाक्षात्कारेणाध्यात्मिकीं शक्तिमुन्मीलयितुं मानव-लोद्भासितां श्रियञ्च परिग्रहीतुं सः सन्दिदेश समग्र मपि भार-तीयं समाजं प्रति । सः सकलेष्वपि धर्मेष्वैक्यं पर्यपूपुषत् । स वस्तुतः सर्वेष्वपि धर्मेष्वेकतामेव ददर्श । "तद्धर्मैक्यतत्त्वं सकलमपि विश्वमभिव्याप्य विभ्राजते; तदीयदिव्यालोकस्त-दीया च दिव्या सत्ताखिलस्यापि संसारस्य कारण" मिति स

मेने। तस्याध्यात्मिकी शक्तिर्विवेकानन्दमावर्जयामास। स तच्छिष्यो बभूव। तेन स्वकीये '*My Master*' ग्रन्थे तज्जीवने परमसुन्दरः प्रकाशोऽस्ति क्षिप्तः।

**वन्दे महात्माकुलभूषणरामकृष्णं**
**मातुः समस्तजगतामृजुचित्तभक्तम्।**
**चक्रे स दिव्यतपसा विभया महत्या**
**ज्ञानस्य भारतमहींशुचिसाधुशीलाम्॥**

**स्वामिविवेकान्दः**

स्वामिविवेकानन्दो भारतस्याध्यात्मिकातीतानेहसि भृशं श्रद्धाभक्तिगौरवधियं निदधौ। तदतोऽध्यात्मिक भारतं विद्यमानकालवर्तिना भारतेन सार्धमन्वितं जायेत इत्येतां महत्त्वाकाङ्क्षां सः पर्यपूपुषत्। एतन्महनीयमुद्देश्यं हृदि निधाय सः स्वगुरुबन्धूनां साहाय्यमधिगम्य "रामकृष्ण संस्थांस्थापयाञ्चकार।

स्वामी विवेकानन्दो भारतीयायाः संस्कृतेर्विश्वजनीनतां वीक्ष्य तस्यास्तत्त्वानि प्रतीच्यायां संस्कृत्यां सन्निवेश्य तस्याश्च विशिष्टताः भारतीयसंस्कृत्या मन्तर्भाव्य तां (भारतीयसंस्कृतिम्) कयाप्याभयानिर्वचनीयया समुल्लसितां द्रष्टुमियेष। "मानवाः परस्परं संगता भूत्वा प्राच्यप्रच्ययोर्योगेन मधुरेण विकस्वरशीलता मासादयितुं प्रभवेयु" रित्येतां भावनां सोऽनिशं मनसि स्वकीये बभार।

स्वामी विवेकानन्द आंग्लसाहित्ये बङ्गसाहित्ये तु पूर्णमधिकारं न्यदधादेव संस्कृतवाङ्मये च तदभिमतां गम्भीरां निहितवान्। स तयोरुभयोराङ्ग्लबङ्गभाषयोराश्चर्यकारिणीं विद्वत्तां श्रयन्ती वक्तृतां यथा विधातुं प्रबभूव तथैव स तयोर्लिखितुमपि प्रभविष्णुतां न्यदधात् तदीयं व्यक्तित्वं प्रभावस्थापनसमर्थमासीत्। "तस्य वाणी वैद्युतंवचोऽबिमः किञ्च सा ज्वालेव दीप्यमानावाप्यत" इति श्रीपण्डित जवाहरलालनेहरू महाभागो वदति स्म। भारतमुत्थापयितुं स जर्जरहिन्दूसमाजे नवं जीवनं सञ्चारयितुं प्रायतिष्ट।

त्रिनवत्यधिकाष्टादशशततमेशवीयाब्देऽमेरिकान्तर्गतशि-

कागो' नगरे समायोजयिष्यमाणं सर्वधर्मसम्मेलनं सम्भावयितुं स्वामी विवेकानन्दोऽयाञ्चक्रे। प्रथममेव भाषणं तस्य, श्रोतृष्वद्भुतं प्रभावं प्रक्षिपत्। तस्य यशोऽतो दिग्दिगन्तरमभिव्याप्नोत्। नगरान्तरेभ्यो जनास्तद्भाषणं श्रोतुं सभागता उत्सुकतापूर्वकम्। सर्वत्रैव तस्य चर्चा प्रावर्तत। नानासभासदसां स आमन्त्रणपत्राणि प्राप। अमेरिकाराष्ट्रस्य पत्राणि तस्य व्याख्यानानां प्रशंसां कर्तुमारभन्त। वोस्टननगरस्य पत्राणि तस्य व्याख्यानानां प्रशंसां कर्तुमरभन्त। वोस्टननगर-"इविनिंगन्यूज" पत्रेणालिखयत तदा" स्वामिविवेकानन्दो वस्तुतोऽस्ति महाविद्वान्। धर्मसम्मेलने व्याख्यातृत्वेन येऽपि विपश्चिद्वरा आगताः सन्ति तेषु नैकोऽपि तस्य साम्यं कर्तुमर्हति स्म"। "न्यूयार्कहेराल्डेन" विचारोऽय मभिव्यक्तीकृतः—"स्वामिविवेकानन्दो हि परमार्थतो मानवः। तद्भाषणानि निशम्य "भारतसन्निकाशं ज्ञाननिधि देशम्प्रति उपदेशकानां प्रेषणं बालिशत्वादन्यत् किमित्येतां धारणां प्रपन्नाः स्मः"।

धर्मसम्मेलनस्य सभापतिना, येन भारतीयाः परमासभ्या मता येन च स्वामिनो विवेकानन्दस्य व्याख्याने हि धर्मसम्मेलनस्य सभापतित्वाङ्गीकरणं किञ्च तस्य धर्मसम्मेलनप्रतिनिधित्वं नितान्तानुरोधानन्तरमेवाङ्गीकृतं, प्रोक्तमेतत्—'वस्तुतो भारतं तु धर्माणां जनुषि कारणम्। स्वामिनो भाषणानि अमेरिकास्थजनता मतितरा मावर्जयाञ्चक्रुः "अस्मदखिलोऽपि देश स्तस्य विदुषोऽग्रे श्रद्धया नतमस्तकोऽस्ति जातः"।

पञ्चनवत्यधिकाष्टादशशततमेशवीयाब्दे स्वामिविवेकानन्द इंगलैण्डं प्रतस्थे। तत्रापि तद्भाषणानि सर्वेषा मपि जनानां मानसे आनन्दमभरं ववृषुस्तेन सर्वत्र तत्र ख्यातिः प्रससार। लन्दननगरे प्रिन्सेजप्रासादस्य महाप्रकोष्ठे स्वामिकृत मात्मज्ञानपरकं नितान्तमनोऽभिरामं प्रभावपेशलं व्याख्यानं निशम्य सहस्रशः श्रोतारः मन्त्रमुग्धा अजायन्त। भाषणे सत्युपसंहृते सर्वेऽपि श्रोतारो "धन्यो धन्यो भवानिति वारं वारं तमुपश्लोकयामासुः।

लन्दनस्य 'स्टैण्डर्ड" पत्रेणाभिहितम्—"राज्ञो राममोहन-

रायस्य, श्रीकेशवचन्द्रसेनस्य चानन्तरं स्वामी विवेकानन्दः प्रथमो भारतीयो यः प्रिन्सेज प्रासादे स्वाद्भुतव्याख्यानेनैतावन्तं प्रभावं विकरति स्म" पत्रान्तरेणोक्तम्—"लन्दनेऽनेकानेक-जातिगता अनेकानेकव्यवसाय-वृत्तिसंश्रिता जनाः मिलन्ति पर मिदानी मिङ्ग्लेण्डे न कोऽपि मानवस्तं तत्त्वविदं मतिशयितुं शक्नोति यः शिकागोधर्मसम्मेलने हिन्दु धर्मप्रतिनिधि भूत्वाऽऽगतोऽभूत्" ।

स्वामिविवेकानन्दोऽद्वैतविचारात् "अस्त्येक ईश्वरः; विश्वस्य सर्वेऽपि प्राणभृत स्तस्यैव विराटस्वरूपस्य सन्ति सन्ति स्वरूपाणि" इत्येतन्मन्यतेऽद्वैतवादः; अस्ति सोऽद्वैत-धर्मस्य पर्यायोविश्ववन्धुत्व मित्यवगच्छति । स्वामिविवेका-नन्दमतेन "अद्वैतधर्म एव मानवजातेर्धर्मौ भविष्यति; तत्रैवा-खिलमानवानां कल्याणकारिणी भावना विराजते" ।

स्वामी विवेकानन्दोऽमंस्त—'जडवाद माधृत्य मानव मानवताया वर्त्मनि न यातुं शक्नुवन्ति । विश्वश्रेयसे त्वाध्या-त्मिकाध्वाश्रयण मपेक्ष्यत" इति ।

अस्ति तस्य मन्त्रोऽयं यत्र सर्वथैव मनः प्रदेयम्—"भवत निर्भयाः, भवत शक्तिमन्तः । नास्ति कोऽपि जनःपुरोभागी वा दुरितवान् । अस्ति स ईश्वरांश एव । अस्ति जगति चेत् किम-प्यघं, तदा तदस्ति नैर्बल्यम् । अतो निर्बलत्वं दूरीकृत्य, भवन्तु तेजस्विनो वर्चस्विनश्च । अस्मद्देशस्यकृते यदि किमपि साम्प्रत मपेक्ष्यते तदा तदस्ति वज्रनाडीत्व मायसस्नायुयुक्तत्वञ्च । सा च विश्वस्य रहस्येषु प्रविश्य स्वोद्देश्यं साधयितुं शक्नुयात्" ।

स्वामिनो विवेकानन्दस्यायमादेश आसीत्—"भवन्तः सर्वां स्ता वार्ताः विषमिव मत्वा जहतु, याः शारीरिक्या बौद्धिक्याऽऽध्यात्मिकया च दृष्ट्या भवतो विदधति निर्बलान् । तद्विधासु वार्तासु न भवति जीवनशक्तिः । सत्यमेव बलं, सत्यमेव जीवनं, सत्यमेव ज्ञानं, सत्यमेव च भवति शुचित्वम्" ।

सोऽस्मानवादीत्—"उपनिषदं शरणं गच्छन्तु । तासु (उपनिषत्सु) प्रकाशो वर्तते; तासु शक्ति रस्ति; तासु शोभते तत्त्वज्ञानम् । अनृतविचारेभ्यो दूरीभवन्तु; अनृतप्रियमन्द-

मतिभ्यो नास्तिका युक्ततराः। नास्तिका भवन्ति तु जीवितहृदया किमपि कर्तुं शक्तितु निदधति"। सोऽब्रवीच्चततः—

"अलीके विस्रम्भस्तु धियंध्वंसयति ततो जीवनं पतनोन्मुखं जायते"।

स्वामी विवेकानन्दः सर्वत्रापि देशे भ्रमणं विधाय राष्ट्रस्योपदेशालोकेन प्रकाशयामास। तस्य सन्देशेऽस्ति दिव्यं ज्योतिर्दिव्यं दर्शनञ्च। तत्र च विभान्तितरां राष्ट्रविकासकारीणि तत्त्वानि। सोऽयं महानात्मा १९०२ तमेशवीयेऽब्दे एकोनचत्वारिंशद्वर्षवयसि भौतिकं शरीरं तत्याज।

एतेषां महता मात्मना मुपदेशै भारते जना उद्बुध्यन्त। तेषु नवा चेतनोदियाय। ते राष्ट्रम्प्रति स्वधर्मं कर्त्तव्यञ्चावेदिषुः। तेषांहृदये राष्ट्रिया भावना, राष्ट्रियं ज्योतिः, राष्ट्रिया शक्तिः किञ्च राष्ट्रस्य गरिमणि महिमनि च दृढीयसीभक्तिः प्रीतिश्च प्रबला भूत्वा प्रादुर्बभूवुः। समयान्तरेण च ता राष्ट्रिया भावनाः अन्याश्च विशिष्टताः राष्ट्रहितकार्ये राष्ट्रपरतन्तोच्छेदने च स्वतन्त्रतासमरप्रयोजनेन परमसहायताकारिण्योऽसिद्ध्यन्। जना तत्तद्भावनाभाविता भवन्तः स्वदेशसेवायां संलग्नाः समजायन्तः बहवश्च स्वतन्त्रतारावे स्वकीयानसूनप्यजुहवुः।

यदा राष्ट्रियमहासभा (काग्रेसः) जनुर्जग्राह तदा तद्द्वारेण यदपि कार्यं मृदुलं देशाभ्युदयाय कृत मभूत् तद् देशस्य वहवो भक्ता नाधिकं हितकर ममन्यन्त। ते तत्रोत्कटगतिं विलोकयितु मुत्साहं प्रचण्डं निदधतोऽवालोक्यन्त। दक्षिणभारते बलवत्तरो राष्ट्रियतातरङ्गप्रवाहः सवेगं प्रावहत्। लोकमान्य वालगङ्गाधरतिलकस्याग्रणीत्वे यत्रत्या राष्ट्रभक्ताः स्वातन्त्र्यान्दोलने निशितां गतिं सञ्चारयितु मधीरा अभूवन्। ते श्रीतिलकाद् देशार्थं भक्ति प्रेरणां शक्तिञ्च प्रापुः। श्रीलोकमान्यस्य हि सहकारिषु श्रीमच्चिपलुनकरः प्रभाववाँल्लेखको बभूव। सः स्वरचितया ग्रन्थावल्या देशस्य कृते राष्ट्रियतानिष्ठं सन्देश मयच्छत्। जनतायां भारतीयं प्रत्नं गरिमाणं समचीचरत्। स तथायतत यथा जनता स्वकीयदेशप्रकर्षं जानीयाद् भवेच्च

तत्र दर्पवती-।

श्रीचिपलुनकरस्य राष्ट्रियता नासीत् राष्ट्रान्तरद्विट्। सः परेषां देशानां गुणानादाय स्वसंस्कृतौ तान् समावेशयितु ममिलषतेस्म। परं न स्वरास्ट्रमसौ पश्चिमीयसभ्यतासक्तमदिद्रक्षत्। तत्र कारण मासीत् तस्य स्वसंस्कृत्या मवलेपवत्ता भारतीया संस्कृति र्मानवजातेः कृते समुद्भवकारिणं नूतनं सन्देशं प्रदातु मर्हति। परं स्वसंस्कृत्यवलेपावलिप्तोऽपि सन् स देशान्तरीय-संस्कृतेः पुष्टिकारकाणि तत्त्वानि गृहीत्वा स्वसंस्कृतिं पुष्टतरां विधातु मतितरां काङ्क्षति स्म। हन्त, स महानुभावः देशं सेवितु परं चिरं जीवनं प्राप्तुं न शशाक। स द्वित्रिंशद्वर्षवय-स्यैव १८८२ तमेशवीयाब्दे नाक्रमसेधत्। तदीया ग्रन्थाः सम्प्रत्य-पि देशस्य निधि रिव मता भवन्ति।

श्रीलोकमान्यस्तिलको राष्ट्रियान्दोलन मचालयत्। अल्पेनैवानेहसा श्रीतिलक स्तरुणराष्ट्रस्याग्रगामी नेताजायत। स भारतीयानां मानसिकीं स्थितिं सम्यगजानात्। स राष्ट्रि-यान्दोलनस्य गतिं वर्धयितुं गणपत्युत्सवादिधार्मिकायोजनान्य-प्यशिश्रियत्) एशियाख्यमहाद्वीपान्तर्गतराष्ट्रेषु धार्मिकतत्त्वानि-बलीयांसि भूत्वा विभान्ति; तान्यवलम्ब्य राजनीतिकान्दोल-नानि जीवनशक्तिं प्राप्तुं शक्नुवन्ति भावनयेत्येतया प्रेरितो भूत्वा भारतीयेषु पर्वसु राष्ट्रियं ज्योतिः प्रज्वालयितुं सः प्रचक्रमे। सः 'केसरी' पत्रस्य सम्पादको भूत्वा राष्ट्रियतां वर्धयितुं नितान्त प्रबलं साधनं तत्पत्र ममंस्त। स तेन पत्रेण वैदेशिकीं सत्तां नितरां व्यरौत्सीत्। जनेषु च स्वदेशप्रेम-राष्ट्र-सम्मानात्मोत्सर्गादिगुणानां प्रचारं विधातुं प्रभाववन्तं प्रयत्नं चक्रे। स तत्केसरीपत्रेणान्दोलनार्थं तासां पाश्चात्यपद्धतीनां शिक्षा मुद्दिश्य प्रचारञ्चाकार्षीद, याः आन्दोलनस्य गतिं शक्ति-ञ्चोपचेतु मिष्यन्ते। स राष्ट्रियतायाः प्रसारणाय महाराष्ट्र प्रदेशे श्रीशिव (शिवाजि) महोऽपिशिश्राय। इत्थं स जनेषु धर्मभावनापरीतां श्रद्धां विभूतिषु जनयितुमुद्दीपयितुं च प्रायतिष्ठ।

## चतुर्थः परिच्छेदः

एशियाया राजनीतिकरङ्गमञ्चे घटितास्तदानीन्तन्यः काश्चनघटनाः भारतौकसा मात्मविश्वासस्य संवर्धनकारिण्यः परिपोषणविधायिकाः उत्थापनक्षमाश्चासिद्धयन्। षण्णवत्य-धिकाष्टादशशततमेशवीयसम्वत्सरे भारतं द्वे महत्यौ भीषणे विपदावापेततुः। तत्र प्रथमा दुर्भिक्षता, द्वितीया च महामारी रुक्‌दुर्भिक्षताया निराकरणाय श्रीतिलकेन सर्वसाधारणसभाः सहकृत्य कर्षका राजस्वादुन्मक्तीकर्त्तव्याः, एतदर्थञ्च तेषु (कर्षकेषु) चेतना मुद्बोधनञ्चोत्पादयितुं यतितव्य मिति निश्चयः कृतः। स तद्धेतोः कृषिजीविषु तद्विषयकं ज्ञान मुत्पादयितु मयतत। शासनविरोधि युद्धं केन प्रकारेण तैः कार्य्यं मित्येतच्च स तान् सम्यगपीपठत्। सभानामायोजनं ग्रामेग्रामे कृतमभूत्। चेतसस्योत्पत्ति र्न जातास्ति तदा राजस्वं न देयमिति च कर्षकेषु कथित मभूत्। एकतस्त्वेतादृक् प्रयास आरब्ध एकतश्च 'केसरी' पत्रं तद्विषयिकां वार्त्तां प्रावीवृतत्; तेन हेतुना जनाः कर्षकाः साहस मुत्साहं धियञ्च लेभिरे। सहस्रशः कृषीवलाः सभाः सकला अपि साद्गरं सम्भावयामासुः। एतादृशमान्दोलनं वीक्ष्यांग्लशासन मक्लाम्यत्। क्लान्तिं भृश मनुभवत् तत् तिलकं भगवन्तं 'भारतस्य पारनेल' इत्येतेन नाम्ना निनिन्द। परं स (श्रीतिलकः) तु जनतायां परमादर-णीयता मियाय। सा तद्दर्शनं लब्ध्वा तदीयश्रीचरणावभि-वाद्यात्मानं नितरा मेव पुण्यवतीममंस्त। श्रीतिलकस्यानुया-यिनां संख्यान्वहं महाराष्ट्रे ववृधे। तरुणतेजोभृत्स्वाभिमानव-द्राष्टियपक्षस्य सोऽभवदध्वर्युः। पक्षोऽयं शासनं स्वतेजसा भृश-मधूनयत्। शासनं यदपि कार्य्यं लोकहित मवज्ञाय चकार, पक्षोऽसौ तस्य यथार्थतां प्रकटीकृत्य तत् कठोरतयाऽऽलोचयाञ्च-कार। सः पक्षो हिन्दुत्वाभिमान मादाय भृश मचकात्।

देशार्थं सः सर्वविध मपि त्यागं कर्तुं सन्नद्ध एव प्रैक्ष्यत। एतस्मात्कारणात् तस्मिञ्च्छासन मद्वेट्। परं तत् (शासनम्) श्रीतिलकस्य महत्त्व महीयस्कत्वञ्च स्त्रीकर्तुं मबाध्यत। श्रीतिलकस्य महापरिपन्थी शासनपरिपोषकः सरसिरॉल स्तं (तिलकं) नवराष्ट्रियतावतारं मेने।

सप्तनवत्यधिकाष्टादशशततमेशवीयाब्दे जनसंहारिणीं भीषणरुजां रोद्धुं तां प्रतिकर्तुञ्च नाचेष्टत शासनम्। तत्तु तत्रोपेक्षाञ्चक्रे। जनाराव उच्चैस्तदापन्निवारणायाश्रूयत यदा, तदा यमपि प्रबन्धं तच्चकार आसीत् सः क्षुद्र एव। जना मरणं वर मवागमन् परं तत्तद्यन्त्रणासहनं न वर ममंसत। आंग्लाः सैनिकाः नगर गृहक्षालनकाले स्त्रीष्वत्याचारं बलात्कारञ्च चक्रुरिति श्रुतमभूत् तदानीन्तनसङ्कटकाले। माननीयश्रीगोखले तेषा मत्याचाराणां विरोधं परमबलवच्छब्दै रन्वतिष्ठत् शासनस्य ते दुर्व्यवहारा यूनां समाजे रोषं क्षोभञ्च उदपीपदन्। कोपं वेगवन्तं भजमानेषु युवसु चाफेकरो नाम युवा महामारीसमित्यध्यक्षं रैण्डं व्यापादयामास। एषा घटनाखिलेऽपि देशे निस्तब्धतां व्यातनोत्। शासनं 'केसरी' पत्रगतलेखा एव जनां-स्तद्विधसाहससम्पृक्तहिंसापरककार्यं कर्तुं मनूनुदन्निति मनसि निश्चिकाय। शासनस्य मन्युः श्रीतिलकमहाभागेऽवर्तत एव। तत् तमेव तासां सर्वासामपि क्लेशपरम्पराणां कारण मवागमद्। अतः २७.७।१८९७ तम दिनाङ्के तमधरत्। बम्बई-महाधिकरणे च राजद्रोहापराध मारोप्य तस्मिन् अभियोगः प्रारब्धः। न्यायाधीशस्ट्राचीन्यायालये चालितं तमभियोग, मुद्दिश्य नवन्यायाधिकारिणश्च सपदि आमग्ज्यन्त। अन्येषाञ्च पञ्चानां न्यायविदां समवाय आहूयत। इत्थं तेषु नवसु षड् आंग्लास्त्रयश्च भारतीया आसन्। भारतीयास्त्रयस्तु श्रीतिलकं निरागसं निर्धारयामासुः। आंग्लाः षट् परं तमपराधिन मसाधयन्। अतः स्ट्राचीन्यायपतिनाष्टादशमासभोग्येन कारावास दण्डेन सोऽदण्ड्यत।

श्रीलोकमान्यो दण्डितोजात इति ज्ञात्वा भारतीया उद्विविजिरे। स तु तद्धृदयसम्राडासीत्। श्रीतिलकः सुदृढेन

धैर्य्येण स्थिरया च शान्त्या तां विषद मसहिष्ट। तं दत्तं दण्ड मवगम्य तस्य (श्रीतिलकस्य) सुहृदः कतिपयेऽन्यथाविधा मपि मन्त्रणां प्रददुः परं स तां युक्तां न मत्वा तस्मादपि दण्डाद् भीषणतरं दण्डं सोढु मुद्यत आसीत्।

श्रीलोकमान्यस्य हिमनगशिलासन्निभाविचलदृढनिश्चय स्तदनुपमं तपो देशहितनिमित्तेन कष्ट सहनार्थं मलौकिकं बर्चश्च वीक्ष्य भारतीया स्तं राष्ट्रस्य देव मिवावगम्यापूजयन्। तस्य ते महनीयाः सद्गुणाः सर्वत्र भरतवसुन्धरायां नवा मेव स्फूर्ति नव्यमेव जीवनं सञ्चारयाञ्चक्रुः। स देशस्य महाशक्तित्वेन मतो बभूव। सः स्वकीयस्य राष्ट्रस्य मानवानां हिताय वस्तुतः स्वतन्त्रताचसिम्बन्धिनीं मानवाधिकारसम्माननपरकां शिक्षां जनेषु प्रसारयामास।

तदानीन्तनेऽनेहसि राष्ट्रान्तरीयाः काश्चन घटनाः भारतराष्ट्रे स्वस्थं प्रभावमपातयन्। निर्दिष्टासु घटनासु रूसजापनायोधनविषयिका घटनोल्लेखनीयां विशिष्टतां निदधाति। एतदिद मस्ति ध्यातव्यं यद् गुणाकाशग्रहचन्द्राब्देशवीयकालवर्ती रूसदेशो नासीदद्यतनसमयगामी रूस इव। तदा तत्रत्या जनता जारस्यात्याचारैं निपीडयमानासीत्। सा घोरमपरितोषेण तदादह्यत। परं जापानाख्ये देशे जनास्तु सर्वथैव सुखान्यनुभवन्तः प्राप्यन्त। यूरोपान्तर्गतदेशा इव सोऽपि देश उद्योगे विज्ञाने च परामेव प्रकृष्टां प्रगतिं कुर्वाणः प्राप्यत। तस्यां स्थित्यां तस्य रूसेण सार्धं जन्यं प्रावर्तत। एशियायां लघुतमोऽपि स देशो महाविशालं यूरोपीयं तं देशमतिशयकठोरपराजयेन पराजितं विदधौ। जापानस्य स विजयो यूरोपीयानां राष्ट्राणां कृत्स्नतया मदमुन्मूलयामास। भारतमपि तदीयादाश्चर्यप्रदात् प्रभावात् परामेव महतीं प्रेरणां प्राप तस्य राष्ट्रियभावना तस्मादनुपमामेवोद्दामबलमलब्ध। तदीया राष्ट्रियभावनाविभाविता स्तरुणविशोराः स्वदेशसेवायां तती भृश मेवालगन्।

नवनवत्यधिकाष्टादशशततमेशवीयाब्दे भारतं लॉर्डकर्जनो महाराज्यपालो भूत्वाऽऽगच्छत्। सतिग्मामेव साम्राज्यवादितां

पर्यपूपुषत् । तस्मात् कारणात् स भारतस्य स्वाधीनतापरके कार्य-कलापेऽसौ नितरां दिद्वेष । स तदीया तादृशी मनोवृत्ति र्भारतेऽसन्तोषानल मदीपयत् । सर्वत्र देशे यूनां राष्ट्रियभक्तिर्निष्ठोत्साह इन्धाञ्चक्रे । एतावन्त मनेहसं यावद्राष्ट्रियमान्दोलनं शिक्षित-हिन्दूयुवकानभिष्ध्याप्य विजृम्भामाण मवालोकयत । परं कर्जन-लार्डस्य कृत्यानि तदान्दोलनस्य प्रसारणे सहायताकारीण्य-जायन्त । देशे वङ्गप्रदेशवर्तिनो महाराष्ट्रप्रदेशगामिनश्च तरुणाः स्वकीयां राष्ट्रियां भावना मेधयितु मनुकूलमेवावसर मासाद-यितुं क्षमा अभूवन् । यथा यथा कर्जनलार्डस्तद्विधां राष्ट्रिय-भावना मभिभवितुं प्रायतत तथा तथा सा समैन्धिष्ट । लॉर्ड-कर्ज़नः १९०४ तमेशवीयवर्षे विश्वविद्यालयनिष्ठं विधिं प्रति-ष्टाप्य शिक्षासूत्रं शासनकरयोः समर्पयामास । वङ्गेषु वर्धमानां चेतनां चूर्णयितुं स द्वैधीभावनीतिं मादातुं शासन मचूचुदत् । एतावदेव विधाय न सोऽतुष्यत्, स मुसलमानानां प्रभाव मवर्धवत् किञ्च हिन्दूभ्यो न स्युर्मुसलमाना निर्बलाः अपि तु तयोरुभयोरपि (हिन्दूमुसलमानयोः) मध्ये सन्तुलितं बलं सन्तिष्ठेत इत्येतदर्थं १९०५ तमेशवीयाब्दे वङ्गप्रदेशो भागयो र्द्वयो विभक्तीकृतस्तेन । तदीयेनैतेन कृत्येन समग्रेऽपि वङ्गप्रदेशे-पावक उत्तस्थौ । तत्र लघु लघुतरेष्वपि ग्रामेषु विरोधसभाः आयोजिता अभूवन् । वङ्गभङ्गात्मककुत्सितकार्ये घोरघृणा जनैः प्रकटीकृता । तस्य वङ्गप्रदेशस्य सर्वेऽपि जनाः संगठिताः ऐक्यसूत्राबद्धाश्चाभूवन् । ते वङ्गच्छेदं प्रत्याख्यातुं दृढसङ्कल्पाः सञ्जाताः । न शासनं कदापि वङ्गप्रदेश मुच्छेत्तुं शक्नुयात् ते तद्विरोधनाय सर्वविधमपि त्यागं कर्तुं कष्टञ्च सोढु मुद्यता अजायन्त । सपदि सकलोऽपिवङ्गप्रदेश एकत्व मुपेयिवान् । सर्वेऽपि धनवन्तो निर्धनाश्च वङ्गभङ्गविरोधायोदतिष्ठन् । न वङ्गप्रदेश एव सकलमपि भारतं कर्जनस्य तत्कार्यं भृश मनन्दीत् । तत्र विरोधे भूयांसो मुसलमाना अपि मिमिलुः । तत्समवर्ती ढाकायाः सरसलीमुल्ला नवाबश्च कर्जनस्य तत् कार्यं कुकृत्यत्वेन मेने । ११-३-१९०५ तमेशवीय दिनाङ्के डॉ रासबिहारी घोषस्याध्यक्षे विशाला सभाभवत् । तत्र परः

सहस्रा वङ्गसुपुत्राः समवेता अजायन्त। कर्जनस्य तन्निन्दनीयं कार्यं सा महती सभा मभर्त्सयदतितराञ्च निनिन्द। ततश्च मणीन्द्रचन्द्रनन्दिनः साभापत्ये सञ्जातायां सभायां तु समग्रस्यापि कलिकाता नगरस्य जनविरोधः सरितो महाबलभाग् भीषणवेगमयः सलिलप्रवाह इवोदस्फुरत्। वङ्गविच्छेदविरोधे तु सर्वेऽप्याबालवृद्धाः स्वकीयं रोषमुच्चैरभिव्याञ्जिषुः। तस्मिन् विरोधावसरे विरोधं बलीयांसं कर्तुं स्वदेशीयान्दोलन परकं विदेशीयवस्तु परिच्छदबहिष्कारनिष्ठश्च प्रस्तावः पारितोऽभवत्। श्रीकवीन्द्ररवीन्द्रनाथस्य संमत्या १६-१० दिनाङ्को रक्षासूत्रबन्धनपर्वत्वेन समस्तेऽपि वङ्गप्रदेशे आयोजितोबभूव। तस्मिन्नहनि सम्पूर्णेऽपि वङ्गप्रदेशे वङ्गवासिन उपवासञ्चक्रुः शोकञ्च प्रकटीचक्रुः। वङ्गेषु सर्वेजनाः 'कामं कर्जनलॉर्डो वङ्गान् शकलेषु परिवर्तयेत् परं वयं वङ्गप्रदेशस्य न केवलं बाह्यं शरीर मेकीकरिष्यामोऽपि तु तस्यात्मान मप्यद्वैततायां परिवर्त्स्यामहे न विश्वस्य कापि शक्तिरस्मान् विभक्ती कर्तुं शक्नुते" इति प्रत्याशुश्रुवुः। तदानी मखिलवङ्गप्रदेशस्य शय्यागतोऽस्वस्थोऽपि ना नव मेव जीवन मनुबभूव। काँग्रेसस्य भूतपूर्वः सभापतिः श्रीमान आनन्द मोहन बोसोऽपि स्वरोगशय्यात उत्थाय विश्रामासन्दिका मध्यास्य विरोधकारिण्यां सभायां सम्मिलितोबभूव। तदेवं स जनानामुत्साहमवर्धयत वस्तुतः इतः प्राग् ब्रिटिशशासनं कस्यापि महाराज्यपालस्य कार्यं तावतीं तादृशीञ्ज जनतया प्रकटींकृतां घृणां निन्दां च कुर्वद् भारतं न ददर्श।

तस्मिन् जनविरोधपूर्णेदारुणे महान्दोलने लॉर्ड कर्जनो बभूव महामन्युः। सोऽनलज्वालेव बभूव प्रचण्डः। तदा स मुसलमानान् हिन्दुभ्यो विभक्तीकर्तुं कठोरतया प्रययास। केचन मुसलमानाः पथभ्रष्टाः अपि बभूवुः परं भूयिष्ठा स्तस्मिन्नान्दोलने भागं गृह्णन्तः कर्जनकृतं तत्कृत्य मनन्दिषुः। हन्त, एतावति महति प्रयासे विहितेऽपि राज्यमन्त्री (स्टेट सेक्रेटरी) वङ्गविभागं मन्त्रमन्यत इत्थ माङ्ग्लशासनं भारतीयं जनमतं प्रत्याचख्यौ परं न देशो नाभवन्निराशः। वङ्गवासिनस्तु

द्विगुणमुत्साहं दधाना नवजीवनशक्तिं विन्दमाना आन्दोलने कार्यं कर्तुं प्रावीवृतन्। वैदेशिकवस्तुबहिष्कारान्दोलनञ्च प्रबलं भवत् समुद्रकाल्लोल इवोत्पुप्लुवे।

१६.१०.१९०५ तमदिनाङ्के वङ्गेषु यदपूर्वदृश्यं दृष्टिगोचरमभूत् तद् वस्तुतोऽद्भुतं दृश्यं प्रथममेव भारतेतिहासरङ्गमञ्चेऽवततार। यदा हि नन्दकुमारो महाराजो वारेन हेस्टिंगसेनान्यायेनासुहृत्रिपटले व्यापादितस्तं समयं विहाय न तादृशं दृश्यं कदापिलोचनगोचरतामगमत्। तदा लक्षशो जना नग्नशिरश्चरणा गङ्गायां स्नातुं गताः; जना निर्दोषस्य ब्राह्मणस्य प्राणग्राहिपटलारोपणं महाकल्मषमेव मेनिरे। अनेनैवप्रकारेण तदैव सहस्रशो लक्षशो जना राष्ट्रियगीतं गायन्तो नग्नचरणाः सन्तो बन्धुत्वसूत्रं परस्परं निबध्नन्तौ 'वन्दे मारतम्' इति व्यहरन्तो भागीरथ्यां स्नान्ति स्म। अतितरामेवापूर्वं हृदयतलस्पर्शि दृश्यमघटत्। लॉर्ड कर्जनस्तु बन्धुतो बन्धुं पृथग् विधातुमुदयतत। सर्वेऽपि प्रेमाश्रुवर्षिनयना भवन्तो मिथः प्रीत्या एकैकस्य जनस्योरः परिषस्वजिरे। ते सर्वेऽपि भगवतों भगवत्याः भारतमातुश्च पुरः स्वस्वशपथमुच्चैः कृत्वा "वयं शाश्वतकालं यावदेकीभूय स्थास्यामो न जगत्याः किमपि प्रलोभनमस्मान् भेत्तुमर्हेदित्युच्चै र्व्याजह्रुः।

जना लक्षश स्तदाप्रभृत्येव वैदेशिकानां वाससामुपयोगं परितत्यजुः। ते स्वदेशीयानि वस्तून्येव क्रीणन्तः प्रयुञ्जानाश्चालम्यन्त। नवयुवानश्चानारतं स्वदेशस्य पारतन्त्र्यादुद्धरणमेवोद्दिश्य चिन्तयन्तोविचारयन्तश्चेष्टमाना यत्र तत्र सर्वत्रावालोक्यन्त। तदानीन्तनं बलीयांसमुत्साहं जनेषु सम्प्रेक्ष्य वङ्गेष्वधिकारिणः शान्ति विनाशन भिया असाधारणानुपायानाललम्बिरे। वङ्गप्रदेशीयानामधिकारिणां दमननीत्यवलम्बनकारित्वे सति ते (वङ्गयुवानः) सत्याग्रहं कर्तुं निश्चिक्युः।

लॉर्डकर्जनस्तु यन्मनसि विचारं चकार तं सः क्रियायां परिणतं विहितवानेव। स लोकमतस्य चिन्तां मनागपि न विधाय तत् प्रसभमपिनट्। तदानीन्तनेऽनेहसि "एंग्लो इण्डियन पत्राण्यपि कर्जनस्य तत्कार्यं न पर्यपुष्णन्। *"States man,*

*Times of India*" इत्येतदादीनि पत्राण्यपि तत्कृतस्य तस्य कार्यस्य विपक्षे लिलिखुः तेभ्योऽपि लॉर्डकर्जनस्य तत्कार्यं नारोचत। श्रीमाननीयगोखले वङ्गविभक्तीकरणं विरुन्धानोऽब्रूत—

अस्मदीयेषु वङ्गबन्धुषु नूनं मन्यायविशेष आचरितः। अखिलोऽपि देशोऽतो गम्भीरेण दुःखेनासह्येन च संरम्भेण दूयते। ईदृशन्तु दुष्कार्यं न कदापि जातम्। एषा योजना रहसि तमसि च रचिताभवत्; जनताया भयङ्करे विरोधे कृतेऽपि सा क्रियान्विता कृता। गतेषु पञ्चाशद्वर्षेषु शासनस्य कृते एतावान् भीषणो विरोधो जनतयानाक्रियत। यावान् साम्प्रतम्। लोकमतस्य कृता मवज्ञा मिमां वीक्ष्य कोनांग्लशासन मिदं निन्दिष्यति। एतस्याः शासनशक्तेः खरतायाः स्पष्टं निदर्शनमिदम्। इदं कार्यं कृत्वा शासनं जनताया मनोभाव मवाजानात्; तच्छासितजनान् नितरा मुपेक्षाञ्चक्रे। तत्कृतादस्मात् कुकृत्यात् तस्य (शासनस्य) मतिमन्दतापूर्णोऽवलेपो दृश्यते।

अनेनैव प्रकारेण राष्ट्रस्यानुग्रै रुग्रैश्च नेतृभि रेकस्वरेण वङ्गविच्छेदे विरोधो व्यधीयत। सर्वलोऽपि देशो राष्ट्रियभावनानां प्रबलतरेण प्रभावेणागृह्यत। इंगलेण्डेऽपि कतिपयै रुदारहृदयैः सुजनैस्तस्य विरोधो विहितः। लॉर्ड मेकडानलस्तु तद्वङ्गविभक्तीकरण मधिकृत्यैतावदूचिवान्—

"प्लासीसमरानन्तरं कृतेषु प्रमादेष्वस्त्ययं गुरुतमः प्रमादः"।

भूतपूर्वमहाराज्यपाल "मारक्विस ऑफ रिपनः सांसदकोष्ठागारे लॉर्डकर्जनस्य तस्मिन्नादूरदर्शितापूर्णे कार्ये खेदं व्याञ्जीत्। परं जातायां सत्यामीदृश्यां निन्दायां न ब्रिटिशसर्वज्ञोऽजिह्रेत्।

एकत स्तु महान् विज्ञसमुदाय स्तद् वङ्गभङ्ग मित्थं व्यरौत्सीदेकतस्तु भारतमन्त्री लॉर्डमेकाले तत्रान्यथैव स्वमतं प्रकटीचकार।

वङ्गेषु राष्ट्रियान्दोलने सुविदितराष्ट्रियोपन्यासकारस्य श्री वङ्किमचन्द्रचट्टर्जी महाभागस्य 'वन्देमातरम्' राष्ट्रियं गीतं भृशं लोकप्रियतामविन्दत्। तद्गीतं तदानीं जनानां राष्ट्रिया

भावनाः उद्बोधयितुं नितरां प्रशंसास्पदं योगदान मकुरुत। न वङ्गेष्वेवाखिल एव भारते तद् गीतं हृदागीयत। तस्माज्जनाः राष्ट्रियजीवनार्थं दिव्यां प्रेरणा मवापुः। परं तद्गीत मप्यांग्लशासनं न सोढु मशकत्। अतः १९०५ तमेशवीयवर्षे उपराज्यपालस्य फुलरस्यादेशेन "वन्देमातरम्" इत्यस्मिन् गीते प्रतिबन्धः स्थापितोऽभूत्। वैदेशिकवस्तुवहिष्कारान्दोलनञ्च श्लथयितुं गोरखान् सैनिकानाहूय तेषां यत्र तत्र धावनं कारितम्। सैन्यशासनस्य भयं जनेषुस्थापयितुं प्रयत्नः कृतोऽभवत्।

विरोधवैश्वानरं शमयितुं १९०६ तमेशवीयवर्षे वारीसालेप्रादेशिकपरिषदोऽधिवेशन मायोजित मभूत्। यदाधिकारिण स्तज्ज्ञानमलभन्त तदा ते छात्रा स्तत्र भागं न गृह्णीरन्नित्यादिदिशुः; "येषां विद्यालयानां छात्रा नैतामाज्ञां पालयिष्यन्ति तेषां विद्यालयानां कृते दीयमानार्थिकसहायता रुद्धतां गमिष्यत्येषा च राजसूचना प्रसारिताभवत्। जना एता मन्याय मूलकाज्ञा मवज्ञातुं निश्चयं कृतवन्तः सहस्रशो जनाः प्रदर्शनयात्रायां 'वन्देमातरम्' इत्येतं जयघोषं चक्रुस्तत्र च विद्यार्थिनोऽपि भूयांसो मिमिलुः। श्रीसुरेन्द्रनाथमहाभागो प्रगृहीतोऽभूत् रक्षिभिः (पुलिसेन) प्रदर्शनकारिणां शिरःसु लगुडैः प्रहारो विहितः। एतस्मिन् विषये लोकमान्यस्तिलकः 'केसरी' पत्रे लिलेख"—······जनाः शान्त्या, स्थैर्य्येण सङ्कटे धैर्यं सत्साहसञ्च संश्रित्यात्याचारिण आदेशं प्रतिकुर्युः। अत्याचारोऽत्याचार एव पर्यवस्यति; कामं सः सनियमो भूत्वात्मानं प्रवर्तयति किं वा नियमरहितो भवन् आत्मानं प्रवर्तयति। व्यवस्थितस्या प्यत्याचारस्य प्रतिकारः करणीयः, शान्तिमालम्ब्य कष्टसहनपुरस्सरं प्रतिकारो विधातव्य एव। वङ्गप्रदेशस्य जनतया स आदेशो वस्तुत आदेशो नेत्येतन् मत्वा स्वार्थं मुत्सृज्य सोढः।

इतः श्रीतिलकोऽन्यायप्रतिकारक्षमतां जनेषु सञ्चारयितु मीहाञ्चक्र, ततस्तदानीन्तनो विश्रुतो नेता श्रीविपिनचन्द्रपालो 'वन्देमातरम्' इत्येतद्गीतमाधारीकृत्य स्वतन्त्रतावाप्ति रस्माकं ध्येयत्वेनावतिष्टते। सत्याग्रहश्चास्मदीयामोघ-

साधन मस्ति; स्वतन्त्रताया अर्थोऽस्ति वैदेशिकनियन्त्रणायाः समापनम्। तस्या प्राप्त्यै निष्क्रियप्रतिरोधः साधनत्वेनास्माभि रङ्गीकृतः। वाक्यस्यास्य सर्वस्य भाष्यमेतत्–'सर्वकारम्प्रति पूर्णतया असहयोगः। स्वीकृतस्योपकरणस्य विधिसम्मतत्वं को न स्वीकुर्वीत ?

"वन्देमारतम्" इत्येदाख्येन पत्रेण स्पष्टतया घोषणा कृता ब्रिटिशशासनं चेल्लोकमत मुपेक्षते तदात्मविकासबाधकं तच्छासनम्प्रति पूर्णतया असहयोगः कर्त्तव्यः; स्वतन्त्रताया श्च प्राप्त्यै प्रयतितव्यम्। वङ्गप्रदेशीयेन 'सन्ध्या' भिधानेन पत्रेण लिखितम्–"वयं पूर्णस्वतन्त्रतां कामयामहे; यावद् ब्रिटिशशासनस्यैकोऽप्यंशोऽवशिष्यते तावद् वय मुन्नतिं कर्तुं न क्षमा भविष्यामः"।

एतेन ब्रिटिशशासनम्प्रति तदानीं घोरासन्तोषमेधाः भ्रमितु मारभन्त, ब्रिटिशशासन मुत्सादयितुं क्रान्तिकृतां षड्-यन्त्राणां सृष्टिश्च भवितुं प्रचक्रम इति विदितता मभ्युपेति। वस्तुतोऽन्यायात्याचारपरं शासनं चिरं न स्वसत्तां निधातु मीष्टे। कलकत्तामहाधिकरणस्य (हाई कोर्टस्य) भूतपूर्वः प्रधानन्यायपतिः सरलॉरेन्स जोकिन्स स्तदानीन्तनस्य समयस्य क्रान्तिकलितं वातावरण मित्थ मानङ्क्—

"क्रान्तिकारिण आन्दोलनस्य नेतृभिः स्वसैनिकानां कृते मानसिकीं शिक्षां प्रदातुं सद्विचारावदाता सुयोजना प्रस्तुती-कृतास्ति श्रीमद्भगवद्गीता मेव न, स्वामिनो विवेकानन्दस्य लेखान् इटलीदेशभक्त मेजिनीमतिमतो गैरिवाल्डीमनीषिणश्च जीवन चरित्राणि ते स्वमानसभोजनाय प्रस्तुवन्ति। एतावदेव न,तैः क्रान्तिकारिनेतृभि स्तानि विशिष्टानि पुस्तकानि रचितानि सन्ति यानि सन्ति क्रान्तिकृदुत्तेजनात्मकभावनाविभूषितानि। एतेषु ग्रन्थेषु "मुक्ति कौन पन्थे" इत्येतन्नामधेयोऽस्ति ग्रन्थो महत्त्वमहनीयः। तत्र सर्वविधानामप्युपायानां क्रमबद्धं विवेचनं विभाति। ते उपायाः क्रान्तिकृद्भिः स्वस्योद्देशस्य सिद्ध्यै स्वीकरणीयाः। तस्मिन् ग्रन्थे राष्ट्रिय महासभाया अवरेष्वाद-र्शेषु जुगुप्साभिव्यक्तीकृतास्ति। नवा युवानः प्रचलित मान्दो-

लनं सम्भावयितुं सादरञ्चाहूताः सन्ति तस्मिन् सुविदिते ग्रन्थे। नाधिकारिणां व्यापादनं दुष्कर मित्येतत् प्रतिपाद्य तत्रायुधाना मवाप्ते रूपाया गुप्तस्थानेषु विविधहेतिततीनां निर्माणस्य विधय स्तदर्थ मेव देशान्तरं प्रति प्रहरणनिर्माणजिज्ञासमानानां जनानां सम्प्रेषणञ्च सविस्तरं प्रतिपादित मस्ति। तद्ग्रन्थे चौर्य्यं दस्युत्व मन्ये च हिंसात्मका उपायाः स्फुटतया निरूपिताः सन्ति हिंसात्मकै रुपायै रर्थोपार्जनं तत्र न्यायोचितं मतम्। क्रान्तिकारिषु प्रदत्तास्ति प्रेरणा च तत्र ते भारतीयसेनायाः साहाय्यं प्राप्तं प्रयतेरन्। उक्तञ्च तत्रेदं भारतीयाः सैनिकाः स्वोदरभरणाय सर्व कारीयसेवां कुर्वन्ति पर मन्ततो गत्वा तेऽपि तु सन्त्येवासृङ्मांसवन्तो मनुष्याः। तेऽपि विदन्ति करणीयतां विचारणाञ्च। अतश्चेत्क्रान्तिकारिणस्तेषु देशदुःखान्यवागमयिष्यंस्तेऽपि तदास्त्रशस्त्रयुक्ता भूत्वा तेषु (क्रान्तिकारिषु) सम्मिलिता अभविष्यन्।''

एतत् सर्वं ज्ञापयति विवरणं तत्कालवर्तिनां नवयूनामुष्णशोणितत्वम्। राष्ट्रे प्राधान्येन च वङ्गेषु शस्त्रक्रान्ति निर्गूढ षड्यन्त्राणां तीव्रां प्रगतिं प्रादर्शयत्। इङ्गलेण्डमधिवसता सुप्रख्यातेन क्रान्तिकारिणा श्रीश्यामजीकृष्णवर्मणा स्वकीये '*India Sociolist*' पत्रेण वेगमयं प्रयत्न मालम्ब्य प्रचारोऽयं कृतः- भारतेऽधुना गुप्तरुपेण रूसीय क्रान्तिकारिरीत्याऽऽन्दोलनं प्रारब्धव्यम्। तस्मिन्नेवानेहसि ज्वलत्क्रान्तिकारि विचाराणां निधिः श्रीविनायकराव सावरकर इंगलेण्ड प्रयाय श्रीश्यामजीकृष्णवर्मणि मिमेल। तत्र च भारते सशस्त्रक्रान्ति मुद्दीपयितुं काश्चन क्रान्तिकृत्संस्थाः समस्थाप्यन्त क्रान्तिकृतामुद्योगेन। वङ्गेषु 'युगान्तरेण' 'सन्ध्यया' च प्रच्छन्नषड्यन्त्राणां सशस्त्रक्रान्त्यात्मकान्दोलनस्य च प्रसारणार्थं मुद्योगः कृतोऽभवत्। वारीन्द्रकुमारघोषो वङ्गवासिनां यूनां संगठनं प्रच्छन्नतया कर्तुं समलगत। वसुव्योमग्रहशशीशवोयाब्देऽप्रेलमासे वङ्गेसु प्रथमः स्फोटः संवृत्तः। तत्र लेखोऽलिख्यत श्रीतिलकेनातोऽसावदण्ड्यत। तस्मिन् समये क्रान्तिकारिण आतङ्कस्थापन रतञ्च शासनं चापिस्वस्वकर्मणि समलगन्।

राष्ट्रीयमहासभा चिरेण राष्ट्रस्य कृते तत्तद्धितकरकर्त्तव्यं पालयितुं विनयेनादरेण च सह सर्वकारे निवेदयन्त्यलक्ष्यत। परं न्यूनतममपि फलं न दृक्पथगतं बभूव। उग्रवादिन स्तद् वैयर्थ्य मक्लामयत्। देशे विततां क्रान्तिमयीं भावनां वर्धयितुं नवा मुदिताञ्ज स्थितिं परन्तु श्रीलोकमान्यतिलक-लालालाजपतरायारविन्दयोगिविपिनचन्द्रपालप्रभृतिराष्ट्रियमण्डलनेतारो राष्ट्रियमहासभाया मन्तरायोनापतेद् देशस्याग्रे सदाकाङ्क्षाः राष्ट्रियमहासभायाः (कांग्रेसस्य) पुरतो निहिता भवितुं शक्नुयु रित्येतदर्थं भृश मयतिषत। राष्ट्रजाग्रतनवभावनापरिपोषयितारो राष्ट्रस्यैधमानामभिलाषांश्छेत्तुं भेत्तुञ्च विधीयमानान् कांग्रेसीयानुग्रवादिनेतृशोच्यप्रयासान् सावधाना भूत्वा प्रेक्षांञ्चक्रिरे। ते सर्वथैवेहाञ्चक्रिरे तथा, यथा तेषामपि चिकीर्षितं ध्यानपूर्वकं श्रुतं स्यात्, परं हन्त, न तेषु सौजन्यापेक्षी व्यवहारोऽपि कृत;। श्रीलोकमान्यस्तिलकोऽनुग्रवादिषु नेतृषु मिलितुमितस्ततोऽभ्रमत्; सः स्याद् योगइत्येतद्धेतोर्नितरामैहिष्ट परं न बभूव स्वोद्योगे सफलः। कांग्रेसस्य प्रत्ना जनाः स्वाभिलषितसम्पादने सफला अजायन्त; कृतवन्तश्च स्वाभीप्सितम्। राष्ट्रियवर्गं ते नितरा मुपैक्षिषत। अन्ततश्च विषयसमित्यां विशिष्टतया सरफिरोजशाहस्यानुयायिनो हि कृत्स्नतया समावेशिताः। सा समितिर्यदृच्छया श्री डॉ० रासविहारीघोषं सभापतित्वेनाचिनोत्। राष्ट्रियवर्गस्य नेतारस्तु देश-निर्वासनजनितदुःखानि चिरमुपभुज्य निवृत्तं श्रीलालालाजपतरायं सभापतित्वेन वरीतुं भृश मचीकमन्त; परं कांग्रेसस्याधीशम्मन्या स्तदभिलाषे मनागपि न विचारयाम्बभूवुः। ते कांग्रेसीयाः स्वेच्छाचारिताया सम्यक् परिचयं प्रददुः।

यदा हि कांग्रेसमहाधिवेशनं समजायत सूरतनगरे तदा राष्ट्रियवर्गस्य नेतृणां कृते मञ्चे स्थान मपि न दत्तं बभूव। भारत राष्ट्रस्य प्रधानं सूत्रधारं देशोद्धरणसमर्पितजीवनं श्रीलोकमान्यं तिलक मपि ते कांग्रेसप्रभवो मञ्चं नाध्यासयामासुः। तस्मिन्नधिवेशनसमारोहे या स्वेच्छाचारिता दर्शिता बभूव, कोऽमूं न सज्जनो निन्देत्? कुपथावलम्बिनां देशहित

परिपन्थिनां तदानीन्तनां कांग्रेसीयानां सर्वकारमन प्रसादनपरैः प्रयत्नैर्दशवर्षाणि राष्ट्रीयमहासभायाः (कांग्रेसः) अकर्मण्यतायामेव गतानि। १९१६ तमेशमीयाब्दं यावत् कांग्रेसाधिवेशनेयु त्वनुग्रवादिनोऽङ्गुल्यवच्छेद्याः कांग्रेसीया नेतार एवोपस्थिता भवितुं ययुः । तदा तु राष्ट्रियमहासभा नाम्नैव राष्ट्रीयमहासभासीत् । नासीत् तत्र जीवनम् । देशस्य सत्याकाङ्क्षास्तत्र न व्यक्ता भवितुं प्रभविष्णवो बभूवुः ।

**भवन्ति सत्याध्व निरादर प्रियाः**
**यदापि देशे मतिमद्-विपश्चित**
**स्तदा निरुद्धा नितरान्तु जायते**
**समुन्नतिः संशय एव नो मनाक् ।।**

चाटुकारिणामेव प्रवेशः कांग्रेसे शक्यो जातः । स्वतन्त्रविचारास्तत्र न प्रवेष्टु मशकन् । प्रतिनिधयो भूत्वा त एव जना गन्तुं शेकुर्ये 'कांग्रेसस्यामुकामुकोद्देश्यानि ध्यात्वा कार्याणि करिष्याम इत्युतल्लिखित्वा प्रतिज्ञापत्रे, स्वहस्ताक्षरेणाङ्कितं विधाय तत्प्रेषितवन्तः । वस्तुत स्तान्युद्देश्यानि राष्ट्रनिष्ठानि नासंस्तानि काग्रेसीयानुग्रवादि स्वार्थ सम्बद्धान्यासन् । आसीत् तदानीं कांग्रेससंस्था मानसेन दास इव । एतद्विधदोषवशात् सा अनृत मेव देशसेवानाटक मदर्शयत् । सा राष्ट्रियभावना बिहीनैव भवन्ती तेषु दशसु वर्षेषु समतिष्टत । परमार्थतस्तज्जनुस्तु लखनऊनगरे सप्तदशाधिकैकोनविंशतिशततमेशवीयाब्दे बभूव ।

वङ्गभङ्गानन्तरं देशस्याकाशे सर्वत्र राष्ट्रियभावाम्बुदा उड्डीयमाना अदृश्यन्त । वायुमण्डलं देशस्य नवस्फूर्ति शोभितसाहस सम्पृक्त जीवनश्रियोल्लसितं भूत्वा जगत्या मचकात् । नवतारुण्योन्मुखततरुणानां हृदयानि स्वतन्त्रताभावनाभावितानि भूत्वा अमोदन्त । तस्मात् कारणात् १९०८ तः १९१५ तमेशवीयवर्षपर्य्यन्तं वङ्गेषु क्रान्तिकारिणो नानाक्रान्ति कार्याणि कृत्वानेकानेककष्टानि सौढुं सहर्ष मात्मानं सन्नद्धान् कृतवन्तः । तेषु बहवः कठोर कारागारवासदण्ड मवापुर्बहवः प्राणदण्डमलभन्त । हसन्तो हसन्तस्ते प्राणशूलदण्डं

चुचुम्बुः। हन्त, समुचित समर्थसाहाय्याभावात् ते स्वाभीप्सिते न सफलता मगुः। नूनं देशपारतन्त्र्य मुच्छेत्तुं सर्वकष्टसहन-कारित्वाच्च तेषां स्मरणं देशो नतमौलि र्भवन् कृतज्ञतापूर्वकं करिष्यति।

न साधनं वाञ्छित मेव तेऽध्यगुः
जनु र्हृ यंवापु र्धनवत्कुलेऽपि च।
न लेभिरे योग्यबलां सहायतां
जहुः परं भारतसेवनं न ते॥ १॥
पदे पदे कष्ट कठोर माप्नुवन्
नितान्तदुःखानि दिवानिशं परं।
निरन्तरं वन्दिनिकेतने प्रियां
न देशसेवां मुमुचु र्युवोत्तमाः॥ २॥
सिताङ्गदास्यात् तरुणास्तदा नवाः
स्वमातृभूमिं हि विधातु मुत्सुकाः।
भृशं विमुक्ता मत एव तत्यजुः
प्रियानसूंश्चापि सुखेन सर्वथा॥ ३॥
विलोक्य तेषां विमलां गरीयसीं
स्वदेशभक्तिं स्पृहणीयसात्विकीं।
पवित्र निःस्वार्थ नितान्त मञ्जुलां
ययुः सिताङ्गा अपि दिव्यविस्मयम्॥ ४॥
विनश्वरं जीवन मस्ति वस्तुतो
भवेत् प्रयुक्तं यदि दास्यनाशने।
ततः परं किं वर मत्र तद् भुवि
स्वतन्त्रता बुद्धिमतां सदर्चिता॥ ५॥
रक्ताम्भोज विशाललोलनयना वक्षः कपाट स्थिराः
शस्त्रद्योतितबाहवो बलजुषः स्कन्ध श्रियाशोभिताः।
धीरोत्साहभृतो हि भारतजना जन्याजिरेऽवातरन्
देशे स्यात् परतन्त्रताविगलितः प्राणानतोऽप्यार्पयन्॥६॥
आंग्लानां हृदयानि भारतजना भीत्या महत्यांभृशं
सर्वेषामपि सर्वथैव नितरां युक्तानि चक्रुर्हठात्।
सर्वस्यामपि भारतस्य सुतरां क्षोण्यां नवीनां पुनः
स्वातन्त्र्यश्रित भावनां बलवतीं प्रावीवहन् सादरम्॥७॥

ते हि क्रान्तिकारिणीः स्वकीये प्रयत्ने वस्तुतो न सफलाः सञ्जाताः। अतः क्रान्तिकारिणी तानि तानि कर्माणि, गुप्त षड्यन्त्रायोजना च सा सा तास्ताश्च हत्याः, दस्युता च सा सा भयावहा परप्राणापहरपरा न तदभिमतकार्येषु समुचिता युक्ता चासिद्ध्यन् । तथापि भारतीया युवान स्तदापि प्राणपणेन देशस्वातन्त्र्य मुद्दिश्य संलग्ना आसन् यदान्ये केचन अर्थवन्तः शिक्षिताः नागराः आङ्ग्लशासनस्यानुनयं विनयञ्च विधाय राष्ट्रहेतुना किमपि न किमपि हितं स्यादत्येतदाशासते स्म ।

तेषु दिवसेषु भारते राष्ट्रियां भावनां प्रगुणीकर्तुं नानोपाया अक्रियन्त । यो हि वङ्गप्रदेशो राजनीतिजागृत्यर्थं प्रयतमान आसीत् स एव देशभक्ति समुत्पादयितुं वर्धयितुञ्च तां देशप्रेम-सञ्चारकं साहित्य मपि ससर्ज । तस्मिन काले विख्यात स्यो-पन्यासकारस्य बङ्किमचन्द्र 'आनन्दमरठोपन्यासोऽतितरां लोक प्रियता मगमत् । देशभक्ता वङ्गवासिनो बन्धवो विशेषतस्त-स्मात् पावन प्रेरणां प्रापुः । ग्रन्थोऽयं पराख्यातिं प्रियताञ्च तदागगच्छदत आंग्लभाषायाँ देशस्यास्मदीयस्य बहुलासु भाषा-स्वनुदितोऽभवत् सः। 'वन्देमातरम्' गेहे गेहेऽगीयत । भवति स्म च तदगीतं राष्ट्रस्यात्मानं प्रतिदेशभक्तिसन्देशहरम् । द्विजेन्द्र लालरायस्य नाटकान्यपि राष्ट्रियभावनाप्रचारणे नितराँ सफलानि बभूवुः । तन्नाटकानि जनेषु महतीं जागृति जनयन्तीति विमृश्य शासनं तद्रोधनाय विचारं बबन्ध । कवीन्द्ररवीन्द्रस्य साहित्यं, श्रीमती सरलादेव्याः कृतयः, श्री ए. एफ. सेनस्य रचनाः, श्रीरजनीकान्तस्य ग्रन्थाः, अन्येषाञ्चानेकेषां लेखाः पुस्तकानि च राष्ट्रियप्रकाशेन राष्ट्रं प्रकाशयितुं राष्ट्रियभाव-नयात्कया च राष्ट्रस्य दिग्दिगन्त मुद्दीपयितं प्राक्रमन्त । हिन्दूनां मुसलमानानाञ्च वीरतां भूयः उद्बोधयितु मनेकानि काव्यानि च प्रकाशितान्यजायन्त । सोऽयं महाभिनन्दनीय उपक्रमः साहित्य सृष्टीराष्ट्रस्यात्मनः प्रबोधने नवचेतनायाश्च समुत्पादने विस्मयावह मेव महत् कार्यं मन्वतिष्ठत् । एतस्मिन् महनीये कार्ये वङ्गीयसाहित्यपरिषद् रायबहादुर दिनेशचन्द्र सेनश्च श्लाघनीयं साहाय्यमकार्ष्टाम् । तदानीं देशीयभाषाणां

पत्राणि चाहर्निशं राष्ट्रीयत्वं विभासयितु मुल्लेखनीयां सेवा मकार्षुः। एतादृशेन प्रकृष्टेन पुरुषार्थेन राष्ट्र मुद्दामादमनीयौ जस्तेजोमयबलविभ्राजित मलक्ष्यत।

देशानुराग-राष्ट्रप्रेम- स्वातन्त्र्यप्रणयपरमस्य साहित्यय तु सञ्जात एव प्रादुर्भावस्तेषु दिनेषु, देशप्रेमप्रेरणाप्रदायाः कलायाश्च विकासः समजायत। डॉ अबनीन्द्रनाथ टैगौर-गजेन्द्रनाथ टैगौर-नन्दलालबोसप्रभतिकलाकारा भारतीयायां चित्रकलायां नूतनं जीवितं समावीविशन्। तेषां कला न केवलं भारते सम्मान माश्नुत, अपितु समग्रेऽपि संसारे राजधानेषु महत्सु राष्ट्रान्तरेषु परामेव प्रतिष्टां प्राप्तवतीं। ते हि कलाकारा जगतः कलाकारान् प्रति स्वातन्त्र्यप्रियतापरक मद्भुत मेव किमप्यनिर्वचनीयं सौन्दर्य मदीदृशन्। एतेषां कलाकाराणां चित्रकलादर्शवादाधिष्टिता मानवीयाभ्यन्तर माध्यात्मिकञ्च प्रकोष्टं समुन्मील्य शिवसत्यसुन्दरवातावरणं पर्यावरणञ्च संसृज्य विश्ववसुन्धराजिरे चकासाञ्चक्रे। गीतिकाराश्च स्वाधीनतार्चाचारुतार्चचिताभि र्गीतिभिः सर्वा अपि ककुभः प्रपूर्याकाशमण्डल मगुञ्जयन्।

योगिराजोऽरविन्द स्तदा राष्ट्रियं साहित्यं सृजन्नेव न समलक्ष्यत स आध्यात्मिकीश्च कृती ररचत् स 'वन्दे मातरम्' इत्येतदाख्यपत्रे ग्रन्थान्तरे च भारतीय राजनीतिपृष्टभूमि राध्यात्मिकी वर्तते; भारतीयस्य स्वातन्त्र्यजन्यस्यान्त्यमुद्देश्यं मानवजातेः कल्लाणे स्वं सन्निवेशयतीति बोधयामास। विज्ञापयामास च स भारतीयस्वातन्त्र्य द्योगोऽखिला मेव मानवजाति मुत्थाप्यात्मान मेव न सर्वानपि देशवासिनः स्वतंत्रतासुखं विन्दमानवलोकयितुं काङ्क्षति।

वैज्ञानिके च क्षेत्रे तदा वङ्गप्रदेशो महती मन्नुतिं व्यदधात् श्रीसरजगदीशचन्द्रवसु र्वनस्पतीनां जीवत्वं वैज्ञानिकेन प्रयोगेण संसाध्य भारतस्य प्रत्नां मान्यतां सत्यताया मवतारयाञ्कार। इत्थमेव श्री सर पी. सी. रायश्च रसायनसंसारे नितान्तोल्लेखनीयान्वेषणं कृत्वा वैज्ञानिकं लोकं विस्मापियामास।

एतेन विवरेण देशस्य जनतायां देशभक्तिभावान् समावेश-

यितुं तस्मिन् काले चतुर्भ्योऽपिदिग्भागेभ्योऽमोघः प्रयत्नः कृतोऽभवदिति स्पष्टं भवति । तेनोद्योग यज्ञेन देशो जजागार, समाज उद्‌बुबुधे, ग्रामजनता च जीवनं प्राप नगराणि च सर्वाण्युदतिष्ठन् । जनो जनश्चाचेतत् ।

भगवतः परमेश्वरस्यानुक्रोशेण देशः स्वतन्त्रतायोधनस्य गुरुगुरुतरान् उद्‌भटान् भटान् ललब्ध । तेषु वन्दनीयदेशानुरागेषु पावनचरितेषु योद्धवरेषु श्रीलाला लाजपतरायोऽपि लोकमान्यतिलक इव पाञ्चालेषु परमादरं प्राप ।

**श्रीलाला लाजपतरायः**

बभूव श्री ला० लाजपतरायः स्वसमये महान् राष्ट्रियो नेता । पञ्चाल प्रदेशस्य तु सर्वजनीन जीवने एकाधिकार एव तस्यासीत् । आर्यसमाजस्य च स आसीत् प्रधानो नेता । लाहौरस्य सुविदितदयानन्द कॉलेज मुद्दिश्य कृतस्तदीय स्त्यागोऽतितरा मेव श्लाघ्य आसीत् । तस्मिन् प्रभावशालिनी लेखनशक्ति र्जनहृदयहारि वक्तृत्वं, समाजाभ्युत्थापक उत्कष्टतरः सद्‌गुणश्च विरेजिरे । विख्यातपत्रकारप्रवर श्चि० य० चिन्तामणिः स्वकीये 'भारतीय राजनीते रशीतिवर्षाणि' इत्येतस्मिन् ग्रन्थे श्रीलाजपतराय मधिकृत्य लिखतिः—"तदीयं संभाषणं संस्मृत्य ममस्मृतिसृति श्रीलॉयड जॉर्ज आरोहति । जनतायां मन्युभावनाया रुत्पादने द्वावपि निदधतुः समामेव शक्तिम् । श्रीलाजपतरायस्य उर्दू भाषणानि यादृश मावेशोत्पादकं प्रभावं निपातयामासु स्तादृश मेव भाषणं मयातिन्यून मेव श्रुतम् । तस्य कानिचन उर्दू भाषणानि श्री लॉयडजॉर्जस्य लन्दनसभासु प्रदत्तानि भाषणानीव बभूवुः । द्वादशोत्तरैकोनविंशतिशततमेशवीय सम्वत्सरे पाटलिपुत्रे राष्ट्रियमहासभायां (कांग्रेसे) स एकस्मिन्नेव विषयेऽजस्रं त्रिरभाषिष्ट । परं तेष्वेकैकं भाषणं स्वस्ववैशिष्टय मभजत्" ।

श्रीगोखलेमहाभाग स्तदा प्रवासिनां भारतीयानां परिस्थिति मध्येतुं दक्षिणाफ्रीकां गत आसीत् । स तत्सम्बन्धे प्रस्तावं प्रस्तुतीकुर्वन् ४५ मिनटपर्यन्त मांग्लभाषाया मभाषत । अन्यस्मिन् कस्मिन्नप्यवसरे एतावता वेगमयाजस्रप्रवाहेण,

एतावत्या भावुकतया, ईदृशेनौजसा, एतावता च रोषेण भाष-माणोऽसौ नाश्रूयत। सामान्यतरस्तु तदीय मेकैकं भाषण मेव बुद्धिविलास चमत्कारचञ्चच्चारुतरं भवदवततार। तस्मिन् भाषणे काप्युग्रताद्भुता विबभौ। न मया कदापि ततः प्राक् तावतीमुत्तेजनां प्रतिपद्यमानोऽसावीक्षितः।

श्रीपण्डितमदनमोहनमालवीय स्ततो हिन्द्यां बभाषे। स दक्षिणाफ्रीकास्थितेषु भारतीयेषु जातानां मत्याचाराणां वर्णनं नितरा मेव करुणाजनकं कृतवान्। तन्निशम्य श्रोतॄणां नय-नानि बभूवु रश्रुवर्षीणि। तद्भाषणस्य प्रभावो यस्य मनसि न पपात, तस्य हृदयं न मानवस्य हृदयमासीदिति हि मन्ये।

ततश्च श्री ला० लाजपतरायस्य भाषण मभूत्। तदा-सीत् परम पुरुषत्वपेशलम्। तत्तु जनाना मुत्तेजना मतितरा मुददीदिपत्। एतस्मिन् समये दक्षिणाफ्रीकायाश्चेद् गोरा (आंग्लः) अभविष्यत् तदा सोऽवश्यं मद्द्वारेण पञ्चत्वं नीतो-ऽभविष्यदिति मन्मानसे विचार उदतिष्ठत्। श्रीलाजपतराये सर्वकारस्य रोषः पर्याप्त एव वीक्षितोऽभूत्। महासमरसमये तदनन्तर मपि प्रायेणाष्टादश मासान् स्वदेशान्निर्वासित एव भवन् समतिष्टत। तत आगम्य स्वमातृभुवं स तत्क्षण एव स्वकार्येऽलगत्। असहयोगस्य संसत्कार्यकलापस्य चान्तराले पुनः पुनः कदाचित्ततः कदापि ततोऽसौ कृतौन्मुख्यः समदृश्यत। कस्मिंश्चिदभिमते हि तदीये स्वकीय कांग्रेसीयसहकारिभिः सार्धं मतभेदोऽपि प्रावर्तत। स न कदापि हिन्दू हितोपेक्षापक्षे आसीत्। हिन्दू-मुस्लिमैक्यप्रश्न मादाय स न कदापि कस्मा-दप्यूनतरो बभूव। परं हिन्दु हानिरप महामूल्यं प्रदाय भवेदेकता क्रीतेत्यत्र स नो श्रददधात्। हन्त, तस्य निधनं नितान्तदुःख-जनकपरिस्थित्या मघटत। लाहौरे 'साइमनकमीशन (आयोग) बहिष्कारविषयकप्रदर्शने भागं गृह्णत स्तस्योपरि कठोर माक्रमण मभूत्, सः कर्कशतया प्रहृतोऽभवत्। ततस्तु सः पञ्चदशदिवसाभ्यन्तर एव जीवनं स्व मुदसृजत्। साऽऽक्रमण-घटना तन्मृत्योः कारण मजायतेति ये विश्वसन्ति तेष्वहमप्य-न्यतम इति श्री चि० य० चिन्तामणिः स्वहार्दविचार मभि-

व्याञ्जीत् ।

श्री ला० लाजपतरायः स्वकीय दिव्य स्पृहणीयोत्सर्गेण स्वकीयया प्रभावबन्धुरया वक्तृतया च भारतीयानां मानसे नैजस्थानविशेष मविन्दत। भारतीयानां स्वाधीनतायै तस्य चेतसि प्रबलोऽग्निः प्रज्वलन्नदृश्यत ।

१९०७ तमेशवीयाब्दे पञ्चालेषु कुल्यान्दोलनसम्बन्धे तत्कालवर्तिभारतशासनं तं भारतान्निर्वासितं कृत्वा माण्डले-कारासदने चिक्षेप। एतेनाखिलेऽपिदेशे जनता ससंरम्भं स्व-विरोधं शासने प्रकटीचकार। श्रीमतो लाजपतरायस्य निर्दोष-त्वाद् भारतमखिलं तत्र प्रगाढं समवेदना मदर्शयत्। देशे सर्व-त्रैव तस्य हुतत्वेन तेन तन्महिमा भृशं ववृधे

अनुग्रो नेता श्रीगोखलेऽपि यदा श्री लाजपतरायो देशा-न्निर्वासितोऽभवत् तदा सर्वकारस्य नीतिं महास्खलितित्वेना-मंस्त। सः तदा श्रीलाजपतरायं विमुक्तं कारयितुञ्च परम प्रयत्नमकरोत्। स एतदर्थं श्रीसरफिरोजशाहमेहताभागेऽमि-लत्। तेन साकं जाता तदीया वार्ता सफलाजायत। तयो रुभयो रपि वार्ताया मैकमत्य मेव संवृत्तम्। श्रीमहाराज्यपाल-स्य सेवाया मास्मारकस्य समर्पणे निश्चयो जातः। परं तदा-स्मारक समर्पणप्रयासे निष्फले सति, श्रीगोखलेमहानुभावेन इंगलेण्डम्प्रति प्रतिनिधिमण्डल-प्रेषणाय सङ्कल्पः कृतः। स तदुन्मोचनाय सर्वथैवोत्तमोत्तमानुपायानन्वतिष्ठत्। श्रीलाज-पतरायस्य देशान्निर्वासन माकर्ण्य देशः समग्रः प्राचीतः प्रतीचीं यावद् अवाचीत उदीचीं यावदधुनोत्। श्रीमाननीयोगोखले-ऽन्ततः स्वीयैः प्रयत्नैः कठोरैः श्रीलाजपतराय मुदमूमुचत्। तस्मिन् भारत मागते, सर्वमपि भारतं भक्त्या श्रद्धया च तमभ्युपागमत्। तम्प्रति तद् हार्दिकं स्वागतं व्याजहार। श्री-लाजपतरायोऽपि प्रबलोत्साहेन देशसेवाया मात्मानं न्ययूयुजत्। स राष्ट्रस्य राजनीतिके सामाजिके च विकासे यन्महनीयं महीयश्च कार्यं मनुतस्थौ तद्भारतेतिहासेऽमरं भूत्वा विद्योतेत।

**श्रीविपिनचन्द्रपालः**

श्रीविपिनचन्द्रपालो भारतस्य तेष्वग्रणीषु नेतृष्वासीद् ये वङ्गविभाजनानेहसि सर्वाशाव्यापि गगनघोषकारि मेघघटाटोप मिव कार्य मकार्षुः। तस्मिन् काले नवां चेतनां नवं जागरणं स्रष्टुं तेषां नेतृणां भाषणानि समुपश्लोकनीयं कार्यकलाप मकुर्वन्। श्रीविपिनचन्द्रपालः कांग्रेसे प्रथमश्रेणीयवक्ता मतोऽभूत्। श्रीविपिनचद्रन्पालस्य कांग्रेसेन सह संवृत्तस्य समन्वयनस्य चिरकालोव्यतीतस्तस्मात्कारणात् तद्गतिविधौ सम्यगसावभिज्ञतां गत आसीत्। विदेशीयवस्तुवहिष्कार-स्वदेशीयबस्तुव्यवहार-प्रसार-राष्ट्रिय-शिक्षादिपरकसिद्धान्तान् लक्ष्यीकृत्य सः सर्वस्मिन्नपि देशे वभ्राम। सः स्ववक्तृतताशक्तिप्रभावञ्चोच्चैः प्रातिष्ठियत्। कलिकाताधिवेशने विदेशीय-वस्तुवहिष्कारस्य स उग्रं व्यापकञ्चार्थं चक्रे। केचन तदीयां तां वहिष्कारपद्धतिं नान्वमंसत। मद्रासे तत्कृतानि भाषणानि राजद्रोह कारिभाषणानीव मतान्यभूवन्। अतः शासनं तं तत्प्रदेशाद् वहि र्भवितु मादिदेश। लॉर्डमिण्टोसमये सकृत् स देशान् निर्वासितोऽपि कृतः। एकदा च स यदारविन्दो 'वन्दे-मातरम्' पत्रस्य सम्पादक आसीत्, तस्मिन्नभियोगश्चालितोऽभूत्, तदा स तत्प्रतिभूत्व मरविन्दानुकूलतां न गच्छेदित्याशङ्क्य साक्षित्वाद् विमुखो जातस्तस्मात् कारणात् षण्मासभोग्यं दण्ड मवाप्नोत्। निर्वासनसमयं गमयित्वा यदा स भारतं निववृते तदा तदीयानि राजनीतिकक्षेत्रे कृतानि कार्याणि न तद्यशः प्रसारणे क्षमानि समजायन्त। परमिदन्तु न विस्मरणीय मस्ति यत स तेषु नेतृष्वन्यतम एव भूत्वा शुशुभे यः स्वभाषणैः 'न्यू इण्डिया', 'वन्दे-मातरम्' इत्येतदाख्ययोः पत्रयो र्देश समाजहित पराँल्लेखान् लिखित्वा लिखित्वा तदानीन्तनान् युवकानमूमुहत्।

**अरविन्दयोगी**

अरविन्दोऽस्मद्भारतस्यानुपमो महान् नेतृशिरोमुकुटमणिर्बभूव। सः स्वकीयेनाद्भुतेन त्यागेन अभिव दर्शनेन तपसा च राष्ट्रं भारतं गन्तव्य पथं प्रादीदृशत्। तदीयैः पार-

मार्थिकैः राष्ट्रोत्थापनक्षमै रुत्तमैः कार्यैर्जना अजागरः। प्राप्न-वंश्च ते तज्ज्योति र्येन मानवो मानवत्वं गन्तु मर्हति।

अरविन्द इंगलेण्डे जनुरग्रहीत। तत्रैव सः शिक्षामानर्ज। स आत्मप्रेरणा मवाप्य देशसेवायां रतोऽभवत। राष्ट्रियान्दो-लनं सञ्चालयतस्तस्य प्रभावः सत्वर मेव वृद्धि मुपेयिवान्। जनतायाश्च स द्रागेव स्त्याग-कर्त्तव्यपालन-सेवादिसद्गुणै रादरभाजनं बभूवः। 'वन्देमातरम्' इत्येतन्नामधेयं मांग्लपत्रं स सम्पादयामास। तेन च पत्रेण सः स्वाधीनतासन्देशं दातु मारेभे। आंग्लभाषायां तस्यासीदधिकार आश्चर्यजनकः। तस्य लेखेषु समशोभत आध्यात्मिकता श्रीः साहित्यिकञ्च सौन्दर्य मराजत। एतदेव वैशिष्ट्यम न तत्र समुल्लास तत्र राजनीनि-ज्ञता-सुषमा च व्यभ्राजत। पाठकाः परमप्रीत्या रुच्या च तल्लिखितान् लेखान् अधीत्याधीत्य परामेव मुदममन्दा मविन्दन्त। श्रीघोषस्य लेखेषु लोकमत मावर्जयितु मद्भूत-क्षमतासीदतः सद्य एव लोकप्रियता माससाद। ब्रिटिशशासनं तस्मिन् क्रान्तिकृद्विचारानवद्यावदाते साध्वसावहमेवारोपमा-रोपयत्। परं भगवदनुग्रहेण तदभियोगान्निर्मुक्तोऽजायत। श्री-देशबन्धुश्चित्तरञ्जनदासस्तदभियोगेऽरविन्दस्य प्राड्विवागा-सीत्। स भृशप्रशंसनीयां प्रकर्षपेशलां प्राड्विवाक्तां कृत्वा तम-मूमुचत्। देशबन्धुस्तदाप्रभृत्येव विख्यातोऽतितरां बभूव; गच्छतैवानेहसाल्पेन स भारतस्य महान् नेता च समजायत।

श्रीघोषोऽरविन्दो न चिरं राजनीतिक्षेत्रे स्वजीवनं रमयामास। सः शीघ्रमेव तस्मिन् व्यरज्यत्। ब्रिटिशं भारत मपि हित्वा सः पाण्डेचरीं स्ववसतित्वेन स्वीचक्रे। तत्र स तत्त्व-ज्ञानसम्बन्धिनां गहनानां विषयाणां व्याख्याया मात्मानं प्रावी-वृतत्। तत्तद्विषयिकाः प्रभूता रचनाश्चारचय्य भारतीय-साहित्यस्य श्रिय मपूपुषत्। वस्तुतस्तत्कृता स्ताः सर्वा अपि कृतयः संसारस्थस्थायिसाहित्ये विभूतित्वेन विद्योतन्ते।

**देशसेवा मभिनन्दनीयां**
**व्यधात् सहित्वापि विपत्कठोराः।**

**प्रादीदृशल्लोकहिताय मार्गं**
**चाध्यात्मिकं योगयरविन्द विज्ञः ॥**
**आसीत् स देशस्य महोज्ज्वला श्रीः**
**लोकोत्तराणां महसां च राशि ।**
**दिव्यं प्रकृष्टं शुभवल्गुपुण्य**
**मस्मत्पवित्रप्रियभारतस्य ॥**
**स्वसेवयासौ निजभारताम्बां**
**कर्तुं प्रसन्ना मनिशं ययास ।**
**शरीरिणां स्थावरजङ्गमानां**
**सुखाय जातः सदह क्षमायाम् ॥**

येषु स्वकीये देशे सुदृढं सत्यं प्रेम राजते त एव स्वदेशस्य पारतन्त्र्यं न क्षणमपि सोढुमर्हन्ति तस्मात्ते तस्य पराधीनताया दूरीकरणाय आत्मान मपि बलिवेद्यां जुह्वति । यथा यथा शास्तार स्तेषु दमनं विदधति तथा तथा नवं जीवन मवतरति समुदेति च नवोत्साहः । आंग्लशासनं १६०८ तमेशवीयाब्दे वङ्गप्रदेशस्य बहून् नेतॄन निर्वासयामास । तदश्विनीकुमार कृष्णकुमारदत्तौ निरवासयत् । कार्यं मिदं १८१८ तमाब्दीयानियमन मनुस्त्याक्रियत । श्रीरासबिहारी घोषस्तु तदवैधत्वेन मन्यमानः प्रत्याचख्यौ । तदैव साहसविधि (क्रिमिनललॉ) संशोधना (एमेण्डमेण्ट) धिनियमः (एक्ट) पारितोऽभूत् । संस्थाना मवैधत्वघोषणे तस्योपयोगोऽजायत । तदानीन्तले काले देशस्य सर्वेष्वपि भागेषु शासनं कठोरेण दमनेनान्दोलनानि नाशयितुं पूर्णया शक्त्या स्वकीयमेहाञ्चक्रे । न वद्मः कियन्तो न कारागारे क्षिप्ताः । कियन्तो देशान्निर्वासिताः । कियन्तो व्यापादिताः; कियन्तश्च कालोदकाय सम्प्रेषिताः । परः सहस्रांस्तदा परमासहनीय-दत्रयु मगमयदांग्लशासनम् । हिंसापराधकारिणो न तदा तथातीतपन् यथा राजनीतिकवन्दिनः । अतिप्रज्वलदुदाहरण मिह श्रीमत्या एनीबेसेण्टमहोदयायाः 'न्यूइण्डिया' पत्राद् दीयते:—

"स्वराज्यस्य" भूतपूर्वसम्पादक श्रीरामचरणलालस्य दुःखितावस्था यथायथमत्रैव विद्यते । नागपुरस्य नगराधीशेन (*City magistrate*) भवदीयदण्डस्यावधौ समाप्तामामपि कठोरेण

षण् मासव्यापिना दण्डेन पुनर्दण्डितोऽस्ति सः। कार्यं कर्तुं तेन प्रतिषेधः कृत इत्येतावन्मात्रमासीद् भवत आगः। पठका भवन्त मधिकृत्य स्युरेवाभिज्ञाः। तस्य राजनीतिज्ञस्य वन्दिनः प्रताडनं चर्मभुजेन क्रूरतापूर्वकमियत् कृतं येन स निःसंज्ञतामगमत्। संज्ञायां प्राप्तायां पुनः सः प्राताड्यत। कारागृहचिकित्सकेन "तादृशताडनाद् वन्दी न दिनानिचत्वार्यपि कार्यं कर्तुं समर्थो भवेदि" त्युक्तम्। "षट्सु दिनेषुगतेष्वपि न तत्प्रताडनचिह्नानि विगतानि भवितुमशक्नन्। राजनीतिक वन्दिनि कीदृगयं पाशवो व्यवहारः क्रियते? इत्येषः प्रश्नः, किं लोकसदने (*House of Commence)* केनापि न भूयते सदस्येन, येन क्रियेत"।

भारतस्य तत्कालवर्तिना भारतराज्यमन्त्रिणा (*Secretary of State for India*) स्वग्रन्थे (*My Recoletion*) लिखित मासीत्। तत्र तेन सः पत्रव्यवहारोऽपि प्रकाशितो यो लॉर्ड मिण्टो-मन्त्रिणोर्मध्ये प्रवृत्तः। तेन पत्रव्यवहारेण ज्ञायतेयत् सः स्वयं लॉर्ड मॉर्ले भारतसर्वकारस्य तस्या भयङ्करदमननीतेः प्रतिकूल आसीत् या तस्मिन् कालेव्वयहारेऽगृह्यत। अत्रैकद्वयुदाहरणाभ्यामिदं प्रकटीकरणमपेक्ष्यते। लॉर्ड मार्ले लॉर्ड मिण्टोसंविधे पत्रं प्राहिणोत्। तत्र स लिलेख :—

"राजविद्रोह माधृत्याद्यपर्य्यन्तं दीयमानान् दारुणान् दण्डान् ज्ञात्वाहमतिचिन्तायां पतितोऽस्मि। पश्यामि तान् भृशभयेन। मुम्बय्यां लोष्टक्षेपणापराधे जना द्वादशमासभोग्यदण्डेन दण्डिताः इत्येतदहमपठम्। वस्तुतोऽस्तीदं परमक्रूरत्वम्।

तिनवेल्याः पुरुषौ द्वौ यथाक्रम माजन्मकालोदक द्वीपवासात्मकेन किञ्च दशवर्षव्यापिना च कारावासदण्डेन दण्डितौ स्तः। तौ द्वावपि दण्डौ नोचितौ। मम निर्णयोऽत्र क्षिप्रं पत्रविभागेन सम्प्रेषितो भवेत्। इदं सत्यं भवितुमर्हति यन्न्यायपतिर्न तदपराधेषु सन्देहभृत्स्यात्; परमीदृशो दण्डः! नाहमेवं विधान् दण्डान् परिपोषयामि। अतोऽहं भवदीयं चेतस्तास्त्रुटीर्दुष्कृत्यताश्च प्रति आवर्जयितुं कामये। परं परमकठोर व्यवस्थापथोनावलम्बनीयः"। श्रीलॉर्डमार्लेमहाशयेनैवंविधा अनेकेऽत्याचारा वर्णिताः सन्ति।

भारतसर्वकारस्य दमननीतिं यदा राज्यमन्त्र्यपि निन्दति तदा जनसामान्याः कथं न निन्देयुः। लघुतरेष्वप्यपराधेषुप्रदत्तां-स्तान् क्रूरतमान् दण्डान् विलोक्य कथं न भारतीयानां नव-युवकानां रक्तउद्वेल्लितः स्यात्। निरपराधेषु क्रियमाण मन्यायं प्रेक्ष्य प्रकुप्यतिसः,मानवस्य स्वभाव एवेदृक्। दमननीतिः क्रान्तेः राजविद्रोहस्य च बीजानिवपतीति संसारस्येतिहासोऽपि ब्रवीति। सुविदितस्य अमेरिकावासिन : श्रीथारोमहाशयस्य कथन-मस्ति :—

"यच्छासनं यावतीं प्रभूतां दमननीतिं संश्रयति तदस्ति तावदेवायोग्यम्" ।

भारतशासन मेकतो वङ्गविभाजनानन्तरं कठोर दमन-नीति माललम्बे एकतश्च तज्जनमतं तोषयितुं मनागयतत। श्रीलॉर्डमार्लेमहाभागेन सदुद्धारयोजनैका प्रकाशिता। लोक-संसत् तामभ्युपजगाम। तां योजनाञ्चाधिकृत्य भारतसर्वकार-स्य प्रस्तावः प्रकाशितोऽभवत्। उक्तोहि विधिरमुकतिथितो-व्यवहारे आहृतः स्यात्; भाविनिचाब्दे संक्षालिता विधिसभाः संगठिता भूत्वा स्वकार्यं प्रारप्स्यन्ते। इत्थं १५-१-१९१० तमे दिनाङ्के तत्कालवर्तिनो महाराज्यपालस्य मिण्टोमहोदयस्या-ध्यक्ष्ये सदुद्धारयोजनाच्छायायां विधिसभाया बभूवोद्घाटनम्।

नैतत्कार्यं राष्ट्रवादिनोऽतूतुषत् परं यदपि प्राप्तं भवेत् तद् ग्राह्यं; प्राप्तादधिकतरायाः प्राप्तेः प्रयोजनेनान्दोलनं कार्य-मिति ते निश्चिक्युः।

तद्विधेनायोजनेन विधिसभाधिकव्यापकनिर्वाचनतत्त्वे समस्थाप्यत। नासीत् परं स उपक्रमो लोकसंसत्स्वरूपानुकूलः। लोकसंसद्द्वारेण पारमार्थिकी सत्ता भारतीयजनतायाः कृतेऽर्पि-ता भवेदित्येतन्न भारतसचिव महोदयस्येष्टमासीत्। निर्वाचन-नाम्ना निर्वाचनं तत्रोपस्थापितमवश्यं कृतम्। तत्र परिषदां (कौंसिलानाम्) सदस्यसंख्या संवर्द्धिता; पृच्छाधिकारे विस्तारं नीतः; प्रादेशिकपरिषत्स्वराजकीय सदस्या मतप्रदानाय बहुत्वं नीताः भारतीयानां कृते भारतमन्त्रिपरिषदि, प्रान्तीयकार्य-कारिपरिषत्सु च स्थानं प्रदत्तमभूत्; भारतीयाः परिषत्सु सदस्य-

त्वेन नियतीकृताः कस्याञ्चिन् नियतायां संख्यायाम्। परमिद मश्रुपरिमार्जनार्थं कार्यमासीत्।

श्रीलॉर्डमिण्टो प्रागेव ततः साम्प्रदायिकनिर्वाचनस्य सूत्रपातञ्चकार। यदीयं कुफलमद्योपभुज्यते। तद्विधं विषवृक्षारोपण मेवासीत्। १-१०-१९०६ तमदिनाङ्के शिमलास्थाने भारतस्याखिलस्य मुसलमानानां प्रभावशालिप्रतिनिधि मण्डलं हिजहाइनेस आगाखाँनेतुर्नेतृत्वे श्रीमहाराज्यपालेऽमेलीत्। तत्प्रतिनिधिमण्डलमाश्चर्यकराणि स्वत्वानि प्रास्तावीत्। स्पष्टतयैव पृथक्करणविषयकसिद्धान्तोऽभवत् तत्र गीतः।

लॉर्डमिण्टो सपदि तान्यदूरदर्शितापूर्णान्यत्यनुचितानि तत्त्वानि पर्यपूपुषत्। तेन जनेषूदपद्यत सन्देहः। मुसलमानप्रतिनिधिमण्डलकृत एषः प्रयत्नो वस्तुतः शिमलात उपनतेन सङ्केतेनानुष्ठितोऽभवत्। गृहविभागस्य चतुरैः कर्मचारिभि रवसरो दृष्टस्तैर्द्वयोः प्रमुखयोः सम्प्रदाययोर्मध्ये भेदबीजमुप्तम्। आंग्लानांन सम्प्रदाययोस्तयोरैक्यंप्रियमासीत्। ते तु भेदमेव (अनैक्यम्) तयोर्द्रष्टुमकामयन्त। लॉर्डमार्ले तद्विधया रीत्या भारतमपकर्तुं नाभिलषते स्म। परं भारतशासनं तु किमप्यन्यदेवैच्छत्। मुसलमानैः स्वार्थान्धैः स्वान्दोलनं प्रवर्तितम्। अनुकूलां स्थितिमधिगम्य तदान्दोलनं सफलता मगमत्। भारतीयराजनीतिक्षेत्रे सः साम्प्रदायिको विषमहीरुहः स्वविकासाय संवर्धनकरमुदकमवाप्नुत।

सौविध्यद्वाराण्यथ स्वतन्त्रतास्वरोत्थापनकृतां कृते संवृतान्यक्रियन्त। श्रीलोकमान्यतिलकस्य प्रधानसहकारी श्रीनृसिंह चिन्तामणिः केलकरो बम्बई परिषदः (कौसिलस्य) कृतेऽभ्यर्थित्वेनोदतिष्ठत। परं तदीयस्यातीत जीवनस्य सर्वकारदृष्ट्या अपरितोषकारित्वात्, तस्याभ्यर्थित्वं निरस्ततांनीतिमभूत्। तमेव समुद्धारणविधि माश्रित्य शासनं नगरपालिकायां, स्वायत्तशासने (जिला परिषदि) उग्रराजनीतिक मतानुगामिनां प्रवेशं विघ्नाकुलं विदधौ।

मिण्टोमार्ले सदुद्धारणानुसारेण स्थापितायां विधानविधि) सभाया माद्य एव विधिः (एक्टः) भारतीयजनता मौलि-

काधिकारप्रहर्ता बभूव। राजनीतिविद आचार्याः स्वरैणैकेन मुद्रणस्वातन्त्र्यं जनताया मूलभूत मधिकारं मन्यन्ते; पर मत्र तु केन्द्रीयपरिषदि मुद्रण स्वातन्त्र्यघातक विधेयकं प्रस्तुतीकृतम्। तत्तु सत्वरमेव पारितताञ्च प्रापित मभूत्। स मुद्रण स्वातन्त्र्यघाती विधिः परमानुचितो वा कर्कश आसीत्। स द्वादश वर्षाणि महत उत्पातान् जनयामास। समाचारपत्र विकाशाध्वनि स वाधको बभूव।

नांग्लशासनं वस्तुतः पिता पुत्रे इव प्रजाया मस्निह्यत्; तत्तु स्वकीयं देशमिङ्गलेण्डं वैभवै विपुलैश्चार्थैः समृद्धतरं कर्तु मेवैयेष। दिवसानुदिवसं तद् भारतात् प्रतिक्षणं प्रभूतां सम्पदं नानाप्रकारेण बहुस्रोतोभि राचकर्ष। न केवलं व्यापारेणापि तु बहुविधैः करै रमितं धन मावर्ज्य तद् भारतस्य शोषणे स्वदेशस्यैङ्गलेण्डस्य च संवर्धने संलग्न मासीत्। न तत् यदिह प्रजास्वाचरत् तत्तु कठोरतमोऽपि शत्रु र्नो आचरिष्यति।

आंग्लशासनेन स्वाभिमता मांग्लशिक्षां शिक्षणालयेषु प्रारभ्य प्रसार्य्य च भारतीयासु भाषासु निर्दयतया प्रहारः कृत आसीत्। भारतस्य सा भाषा यस्यां भारतीयानामाचारः, संस्कृति र्धर्मः शास्त्राणि, दर्शनानि, समस्त मपि प्रतिभाधनं राजते, यत्र हि शोभन्तेऽद्वितीयाः आध्यात्मिकताधिभौतिकताधिदैविकता लोकोत्तराः श्रुत्युपनिषद्भूतसम्पद आंग्लशासनेन परमकुटिलचतुरतयापकृताः शिक्षालयेषु संस्कृतभाषायाः प्रभुत्वं समाप्यांग्लभाषायाः प्रभुत्वं स्थापितम्। सा संस्कृतभाषा चेद् दृष्टाप्यभवत् तदा मृतेवोपेक्षितेव, पादप्रहृतेव, कदर्थितेव, पीडितेव, रुग्णेव, क्रन्दन्तीव, गमिष्यत्प्राणेव समलक्ष्यत। या हि तेन (आंग्लशासनेन) काश्यां राजकीयप्रधानसंस्कृतपाठशाला स्थापिता तत्र व्याकरणाध्ययनमेव नीतिकौशलेन प्रियतां नीतम्; संस्कृत विदुषां प्रतिभां तत्रैव नियोज्य वस्तुतो मन्ये तस्याः (प्रतिभायाः) दार्शनिकी वैज्ञानिकी च दृष्टिः कुण्ठिततां प्रापिता वा क्षीणतां नीता। संस्कृतपाठशालायास्तस्याः स्थापनन्तु केवलं शासनस्यांग्लीयस्य भारतीयजनतायां कृता महतीकुटिलतापरिपूर्णाच्छलदूषिता नीति रेव

राजनीतिक्यासीत्। भारतम्प्रति तस्यांग्लशासनस्य परमहानिकरं भारतीयता विनाशनं कुकार्यं बभूव। यस्य दुष्फल मद्यापि हन्त भारत मुपभुनक्ति।

भारतं यदा परतन्त्रतावेदनया निपीड्यमान मासीत् तदा चतुर्दशाधिकैकोन विंशतिशततमाब्दे यूरोपे महायुद्धानलः प्रज्वलितु मारेभे। प्रत्यासन्ने काले भाविनि, भारतस्यापि राजनीतिकाभिलाषाः सफला भविष्यन्तीति विमृश्य भारतीयास्तद्युद्धेऽर्थबलेन, जनबलेन च ब्रिटिशसर्वकारम्प्रति कृत्स्नतया साहाय्यञ्चक्रुः।

पञ्चोत्तरैकोनविंशतिशततमेशवीयाब्दे राष्ट्रियमहासभाया अधिवेशनं बम्बय्या मायोजित मभवत्। तत्र श्रीलॉर्डसिन्हा ब्रिटिशसर्वकारो भारतमधिकृत्य स्वकीयां नीति मुद्घोषयेदित्यत्र सबलैः शब्दैः स्वविचारानभिव्यनक्तिस्म। श्रीलोकमान्मस्तिलकश्च स्पष्टतयाचष्ट "ब्रिटिशसर्वकारो भारतस्य राजनीतिकाभिलाषान् पूरयितुञ्चेद् वचोदद्यात् तदा भारतमपि समरे पूर्णसहायतां विधास्यतीति"।

वपुषा मनसा वचसा वित्तेन कर्मणा च भारतीयजनाः प्रथममहासमरे ब्रिटिंशशासनस्य कृते हार्दिकं साहाय्यं प्रदाय स्वकीयं कर्तव्यमपालयन्। भारतप्रदत्तं तत्साहाय्यं ब्रिटिशराजनीतिविशारदा मुक्तकण्ठतया पुनः पुनः प्रशशंसुः। परं किं फलं जातं तदीयम्? सति समाप्ते विश्वसमरे भारतं प्रति स्वराज्यं तु न दत्त मभूदपितु 'रॉलेट विधि (एक्टम्), पञ्चालेषु सैनिकशासनादपि कठोरतरं जननिपीडनात्मकभीषणतर्जनाप्रदं शासनं, तज्जनितानि च कष्टान्यनेकानिलेभे। देशे सर्वत्र निराशाभवद् वितता। आंग्लसर्वकार समर्थकाः अपि "विना स्वराज्यं नास्ति देशस्योद्धार" इत्येतां धारणा मगमन्।

प्रथमे महायुद्धे प्रारब्धे सति, श्रीलोकमान्यस्तिलको माण्डलेकारावासाद् ब्रिटिशशासनेनोदमुच्यत। षड्वर्षाणि सः कारावासदण्डमसहत। श्रीतिलकस्योन्मुक्त्या भारतस्य राष्ट्रियजनमण्डलं नवं जीवनं नवाञ्च चेतना मधिजगाम। लोकमान्योऽपि मुक्तिप्राप्ते रपरस्मिन्नेवक्षणे राष्ट्रियगति-

विधि परमोत्साहेन नितान्तौजसा प्रारभत। सोऽलिलेऽपि देशे परिभ्रम्य लक्षशोमनुष्येषु स्वराज्यसन्देशं व्यतानीत्। तत्पावनोद्देश्यप्रयोजनेन सर्वविधमपि त्यागं कर्तुं जनाः सन्नद्धा भवेयुरिति सः प्रार्थयाञ्चक्रे। देशार्थं ते दानं कुर्वन्तु; देशार्थं ते तपांसि चरन्तु; देशार्थं ते यज्ञपरा भवन्तु; सर्वदैव ते देशहितं मनसि निदधतः कार्येषु व्यापृता भवन्त्विति स जनान् सानुरोधं कथयन्—

**यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥**

इत्येतं गीताश्लोकं समस्मारयत्। (गी०,१८।५)

राष्ट्रस्य पर्यावरणं श्रीलोकमान्यतिलकेन स्वराज्यभावनाभावितं द्रागेव विहितम्। पुनः सर्वत्र भारतवसुन्धरा जजागार। १९१५ तमेशवीयाब्दे श्रीतिलकः स्ववर्गस्य महाधिवेशन माजुहाव। तत्र च स्वराज्यार्थ मान्दोलनचालनपरकः प्रस्तावः सर्वसम्मत्या स्वीकृतोऽभवच्च सः पारितः।

स्वराज्यान्दोलनं हि श्रीमत्येनीविसेण्ट् स्वकीयया होमरूल' (गृहशासनस्) संस्थया भृशमुत्थापयति स्म। स्वराज्याज्यान्दोलनं नितरांरयेण प्रचचाल। आन्दोलनस्य वेगमयी गति देशस्य ध्यान माचकर्ष। तस्मिन्ननेहसि श्रीमत्ये ीविसेण्ट् यां महतीं सेवां देशार्थं समर्पयत्, तां देशस्येतिहासः कृतज्ञतया श्रद्धया च चिरं स्मरिष्यति। आन्दोलनं वर्धयितुं सफलीकर्तुं च श्रीमत्येनीविसेण्ट्-प्रदत्तं साहाय्यं मद्रासस्य राज्यपालं लॉर्ड पेण्टलैण्ड भृश मकोपयत्। स तां तदीयान् सहकर्मचारिणश्च जनदृष्टिपथादाकृष्य रहसि क्वापि प्रचिक्षेप। एतेन राष्ट्रे रोषवह्निः प्रजज्वाल; स्वराज्यान्दोलनञ्च परां शक्ति लेभे। सर्वत्रैव देशे सभाः अभूवन्। तत्र च लॉर्डपैण्टलैण्डस्य तस्मिन् कर्मणि प्रबला जुगुप्सादर्शत। तदैव श्रीलोकमान्यतिलकोऽप्युग्रभाषणहेतो मण्डलाधीशेन (*colletor*) पुनाकारावासान्नामुच्यत। तत्प्रयोजनेन तत्कृतं न्यासमुद्दिश्य महाधिकरणेन तस्यानपेक्षितत्वान्मण्डलाधीशादेशो निरस्ततां नीतिः।

साम्प्रतं सः सुसमये आगतो यो राष्ट्रियमहासभायाः

प्रगत्यर्थं मनुकूलोऽसिद्ध्यत्। अतीतानेहसि राजनीतिज्ञेषु यद् वैमत्य मदृश्यत तदुपशशाम। १६१८ तमेशवीयाब्दे महामनसः श्रीपण्डितमदनमोहनमालवीयस्याध्यक्ष्ये दिल्ल्यां कांग्रेसं स्याधिवेशनं सोत्साहहर्षं समपद्यत। इदमधिवेशनं स्वराज्याधिकारे भृशं स्वर मुदनीनमत्। तदानीं तन्महोद्देश्याधिगमनाय संगटनं परमप्रबलं विधातुं प्रेरणा प्रदत्ताभवत्। हिन्दुमुस्लिमैक्यं लक्ष्यीकृत्य कृतं श्रीपण्डितमालवीयस्याभिभाषणं पाषाणहृदयानामपि हृदये आर्द्रतां प्रावीवहत्। सर्वेष्वपि जनेषु तस्य भाषणस्यातितरां प्रभावोऽपतत्। सर्वेपि एकतार्थं यतितुं प्रत्याशुश्रुवुः।

श्रीमहात्मगान्धियुगावतारणातः प्राग् देशे क्रान्तिकारिण्यः प्रवृत्तयो भीषणाः प्रबलाश्च भवन्त्यो लोचनगोचरता मुपेयु रित्येतस्मिन् विषये किञ्चिन्निरूपण मुपरि कृतमेव वर्तते। न देशस्येदृक् कश्चिद् भागोऽवालोक्यत यत्र क्रान्तिकारिणां गतिविधयो न वितता अभूवन्। वङ्गेषु प्रसृतेन क्रान्तिकृदान्दोलनेन तु वैदेशिकशासनं दूयमान मासीत्। श्रीं-वारीन्द्रकुमारघोषोल्लासकरदत्त—हेमचन्द्रदास—गिरीन्द्रमोहन—दासादिकाः शतशः क्रान्तिकारिणः क्रान्तिकर्मणि विशश्वसु स्तस्मात् मनसा संलग्ना भूत्वा सर्वविधमपि प्रयासं कर्तुं संलग्ना अजायन्त। तदर्थं ते जीवनसुखान्यपि तत्यजुः। अलीपुरषड्यन्त्रं तु वर्तते तत्रत्य मन्यतमं षड्यन्त्रम्। स्वक्रान्तियज्ञाय क्रान्तिकारिणो बहवो दस्युकर्मण्यपि समलगन्। लक्षशोरूप्यकाणि दस्युतातः संगृह्य क्रान्त्यां प्रायूयुजन्। हावड़ाषड्यन्त्रमपि दस्युत्वपरकप्रवृत्तिः पर्यपूपुषत्। अन्यानि च लर्चगुरुणि कतिपयाणि षड्यन्त्राणि तदा सक्रियाणि प्राप्यन्त। तेषामुद्भेदे सति बहवः क्रान्तिकारिणोऽदण्ड्यन्त। वस्तुतो वङ्गेषु क्रान्तिकारिभि वैदेशिकाना मानसेषु स्वातन्त्र्य प्रेमोग्रोत्कटराष्ट्रियत्वञ्चाङ्क्यत।

प्रदेशेषु चापरेषु क्रान्तिकारिणां कार्याणि, तेषां संगटनं, तेषां रहस्यमयानि कतिपयानि तत्त्वानि चावालोक्यन्त।

बिहारप्रदेशे सञ्जाताः क्रान्तिकारिणोऽपि देशसेवायै स्व-

जीवन मप्यजुहवुः। अन्यानि चानेकविधानि कष्टानि ते सेहिरे। क्रान्तिकारिणो मुजफ्फरपुरे हत्याः अपि अकार्षुः। भागलपुर-वांकीपुरादिस्थानेषु च क्रान्तिकारिणां कार्याणि दृष्टान्यभूवन्। प्रदेशेऽनेकस्थानेषु तेषां शाखाः अवाप्यन्त। सशस्त्रक्रान्त्यां विहारोऽपि न कस्मादप्यन्यस्मात् प्रदेशान्नन्यूनोऽभवत्।

संयुक्तप्रान्त (उत्तर प्रदेशः) स्तु स, प्रदेशो यतः स्वातन्त्र्य युद्धं जनुर्जग्राह। वाराणस्यां वङ्गवासिनः सन्ति प्रभूताः। तस्मात् तन्नगरं क्रान्तिकारिणां कृतेऽनुकूल मसिद्ध्यत। प्रदेशेऽस्मिन् क्रान्तिकारीणि स्वातन्त्र्यप्रियाणि 'स्वराज्यादिपत्राणि' प्रकाशं ययु;। पत्राणा ञ्चात्रत्यानां सम्पादका अनेके राजद्रोहागसि दण्डञ्च प्रापुः क्रान्तिकारीतिहासः प्रदेशस्यास्य विशिष्ट-घटना वेन मतो भवति। अलीगढे श्रीहोतीलालः शासनेन धृतः। शासनदृष्ट्या तत्समीपस्थं साहित्य मापज्जनकं मतमभूत्। तस्मात्कारणात् स देशान्निर्वासितः कृतः। दशवर्षाणि देशाद् वहि रेव स्थित्वा जीवनं निनाय। तत्र च कष्टान्यप्याप। फैजाबादे च हरनामसिंहः सेनाचरः क्रान्तिकारिषु निमेल। सोऽपि दशवर्षाणि कारासद्मवासनिपीडनान्यनुबभूव। प्रदेशे बहून्यवैधायुधानि तदालभ्यन्त। अत्र प्रदेशे क्रान्तिकारिण्यो विज्ञप्तयश्चानेकान् कार्यकर्तॄन् कारावासे न्यपातयन्। वाराणसी षड्यन्त्रस्य त्वस्त्येव ख्यातिः। श्रीनलिनीमोहन मुकर्जी तद्धेतो-रेवा दण्ड्यत। श्रीविनायकराव कपिलः प्रदेशे क्रान्तिवीजवपन मैच्छत् परं न तत्रासौ सफलो जातः। रहस्यभेदात् सोऽध्रियत। दण्डञ्च सः प्राप्नोत्। भावोऽयं देशेप्रायेण सर्वेष्वपि प्रदेशेषु क्रान्तिकारिण्यः प्रवृत्तयोऽवाप्यन्त। क्रान्तिकारिदलसम्बन्धिन्यो बहुलाः शाखाः इतस्ततः प्रसृता आसन्। तासु 'गवालियर' षड्यन्त्रन्तु विश्रुतमेव भृशम्। यदास्यषड्यन्त्रस्य बोधोऽभूत् तदा नवभारतसमाजस्य द्वाविंशतिसदस्याः, अभिनवभारत-समाजस्य चैकोनविंशति ब्राह्मणा अगृह्यन्त। अभियोगानन्तरं मदण्ड्यन्त च ते।

अस्मद् देशस्य श्रीविनायक सावरकर स्तद्बन्धुर्गणेशसावर-करः क्रान्तिकारिणां समाजे देशस्य स्मरणीयौ अभिव दनीयाः

सेवाश्चक्रतुः । आंग्लशासनप्रदत्तान् देशनिर्वासनकारागारादि-विषयकासह्यानि कष्टानि तौ सेहाते । श्रीविनायकसावरकरो-लन्दनं प्रयाय इण्डियन हाउसकार्ये सक्रियं भाग मादाय, विद्रोह-दिवसमायुज्य, क्रान्तिकारिणां कृते शस्त्रसाहाय्यञ्च विधाय बहूनि चान्यानि देशसेवायै कार्याणिनिरन्तर मनुष्ठितवान् । समयान्तरेण स वन्दितां नीतो बभूव । निर्वासनञ्च लेभे । तद्बन्धु र्गणेशश्च महाराष्ट्रप्रदेशे क्रान्तिकार्येषु प्रबलं योगं प्रददावतः सोऽपि देशादाजीवनं निर्वासितोऽभवत् । श्रीमदनलाल धींगरा सर फ्रेंसिस कर्जनवायलीं (*Sir Erancis Curxen Willie)* व्यापादयामास; अतः सः प्राणदण्ड मवाप । क्रान्ति-कारिणां वर्गं हन्त, आंग्लशासन मन्विष्यान्विष्य जग्राह; तान् बहुविधाभिः पीडाभिर्निपीड्य हन्ति स्म ।

देशस्य स्वाधीनता मुद्दिश्य समुच्छ्रिताः क्रान्तिकारिण्यः प्रवृत्तयः कामं सफलतां न लेभिरे परं तासां प्रयासस्तु वर्तत एव देशभक्तिदृष्ट्या समुचितोऽभिनन्दनीयश्च । अत्रेदं चेत् कथितं भवेत् तदा कदा चिन्नानुचितं स्यात्—एषः क्रान्तिपथो ऽस्मदीयै देशभक्तयुवभि र्देशान्तरेषु जातेभ्यः क्रान्तिकारिभ्यो गृहीतः । नास्मदीय : शान्तिप्रियो देशो हिंसायां कदापि रज्यति स हिंसा हत्या क्राथनादिदुष्कर्माणि नितान्त घृणया प्रेक्षते । अत एव तु श्रीदेशबन्धुः कदापि "......सिद्धान्तदृष्टया राज-नीतिकहत्याः हिंसाश्च विरुणध्मि......"इत्येतदादिविचारान् सविस्तरं व्यनक्ति स्म ।

श्रीपूज्योमहात्मा गान्धी तु देशहिते हिंसां परमभयावहशत्रु मेव मेने । अस्तु; कामं क्रान्तिकार्यङ्गीकृतानि साधनानि समय-स्थित्यादि विपरीतानि स्युः परं भारतस्येतिहास स्तेषां महा-न्त्युद्देश्यानि, स्वाधीनतोत्कटोद्दामानुरागानुपमत्यागादिसद्-गुणान् सहर्षं ससम्मान मजस्रं कीर्तयिष्यति ।

प्रथमे हि महासमरे भारतेन ब्रिटिशसाम्राज्यस्य कृते या श्लाघनीया सहायता दत्ता तां मित्रराष्ट्राणां सेनापतयो राज-नीतिज्ञाश्च मुहुर्मुहुः प्राशंसन्नित्युपरि निगदित मेव । भारतीय-यानीकिन्या फ्रान्सस्य रणाजिरे स्थित्वा जर्मन्याः सेनायाः

उपसरणं स्वीयाद्भुतशौर्येण न्यरोधि। भारतीयासेनैतावत्या वीरतया संयुगक्षेत्रे युयुधे यदिंगलेण्डफ्रान्सयोः सेनापतिभि र्भारतीयानां रणभटानां सा शूरता नितरा मस्तूयत।

श्रीजनरलफ्रेञ्चो लिखति :—

"यदा यदा भारतीय सेनाना माह्वानं कृतं तदा तदा सा दिव्येन पौरुषेणाश्चर्यकरेण शौर्येणायुध्यत।"

भारतीयानां शूराणां शौर्यं लक्ष्यीकृत्य श्री लॉर्ड हाल्डे-नेनाभिहितम्—

भारतीयाः सैनिका मानवजातेः स्वाधीनतायै तथैव युध्यन्ते यथा वयं युध्यामहे। भारतं मुक्तहस्ताभ्यां मानवस्यास्मिन् महति हिते स्वासूनपि सहर्षं महौषीत्। वयमेतस्मिन् सम्पराये युगपदेव स्कन्धेन स्कन्धं योजयन्तो योद्धुं रताः स्मः। एतेन तेषा मस्माकञ्च मध्ये ऐक्यस्य बोधो जायते। एतावदेवन, भारतेंगलेण्डयोः सम्बन्धो द्रदीयस्कताञ्चोपेतः। ईदृग् द्रढः सम्बन्धो नातः प्रागवैक्ष्यत। अस्मद्विजयः समस्तसाम्राज्यस्यास्ति विजयः।

भारतस्य तत्कालवर्तिनोपराज्य सचिवेन श्री चार्ल्स रा-वर्टेण न्यगादि लोकसदने (हाउस ऑफ कॉमन्से) भारतीयवीर-सैनिकानां वीरतामुद्दिश्य स्वकीयेऽभिभाषणे। स भारतीय सैनिकान् नितरामेव प्रशशंस। तान् प्रशंसता तेन भारतस्य न्याय्याकाङ्क्षापूर्त्यै वचोऽपि प्रदायि। युद्धानेहसि इंगलेण्डस्य प्रायेण सर्वेऽपि महान्तोऽभिकारस्थिताः भारतकृताः संग्रामसमयवर्तिनीः सेवाः भृशमस्ताविषुस्ते विजये प्राप्तेसति, भारतेनवयुगस्यारम्भो भवेदित्येताञ्चाश्वासनामपि प्रददुः। इंगलेण्डस्य प्रायेण सर्वाण्यपि वार्तापत्राणि युद्धे विहिताः भारतस्य सेवाः श्लाघाञ्चक्रिरे; किञ्च ब्रिटिशसाम्राज्यान्तर्गतं पूर्णं मौपनिवेशिकं स्वराज्यं स्थापितं भवितुं तान्युद्घोषणाञ्च चक्रिरे। परं ताः सर्वाः मधुरमधुरतरवार्तास्तालत्कामुच्चैरक्रियन्त, यावद् भारतात् साहाय्यमपेक्ष्यते स्त। यदैव युद्धे विजयोऽधिगतस्तदैव दृष्टिः परावर्तिताभूत्। विचारेषु विपर्यासोऽवातरत्: मनुष्य-जातेः स्वाधीनतां विस्मृत्य तस्याः पराधीनतायै विचाराः प्रा-रब्धाः समजायन्त। दुर्बलहृदयाध्यक्षं विलसनं निर्दिष्टचतुर्दश-

तत्त्वानि सपद्यपास्त्रियन्त । यूरोपस्य कूटनीतिज्ञेभ्यो महती मेव प्रवञ्चनां पराधीनतामयीं मनुष्यजातिः प्राप्तवती । स्वाधीनानां जातीनां स्वाधीनतां नाशयितुं प्रयत्नानां प्ररम्भः सञ्जातः । स्वनिर्यातिनिर्णयनिष्ठं तत्त्वं तेष्वेव राष्ट्रेष्वारोप्यत येभ्यो विजयिनो मित्रराष्ट्राः स्वार्थं साधनायै अवसरं दृष्टवन्तः । अन्येषाञ्च राष्ट्राणां भाग्यस्य निर्णयन मेतै गौरैः राष्ट्रैः स्वहस्तायत्तं कृतम् । स्वय मभवंस्ते गौरा भाग्यविधातारः । निखिलापि जगत्यवशिष्टा भृशमेव तैः प्रवञ्चकै विप्रालभ्यत । निर्बलानां राष्ट्राणां स्वाधीनता मिमे आंग्लाः पादैश्चूर्णयाञ्चक्रुः । तुर्की ते खण्डशः कृतवन्तः मेसोपोटामियादिकतिपयदेशानां ते स्वयमेव विना तत्तद्रा कृतष्ट्राणां सम्मति रक्षका अजायन्त । मिश्रदेशस्य पराधीनता मतितरां ते कठोरां कृतवन्तः । जर्मन्याः आस्ट्रियायाश्च यां दुर्दशां ते विदधुः सास्ति कस्य न विदिता ? भारतं तोषयितुं यत् ते दुर्जनतास्पदं पद मुत्थापितवन्तस्तस्य कथनात् न कथनमेववरम् । तद्दत्ताः स्वल्पा अधिकारा स्ते शून्या इवाभवन् । भारतसर्वकारस्याधिकाराः अवश्यमन्यच्च प्रबलं स्वाच्छन्द्य मगुः । न भारतीयाः कुतोऽपि व्यावहारिकं लाभ मवाप्तवन्तः । भारतौकसा माशा मूलत एव निरस्ताभूत् । ते भृश मेव नैरश्यं प्रापुः । आंग्लशासनं विविधकठोरनीती राललम्बे । तद् भारतीयानामुतिष्ठतो भावान् पेष्टु ममानुषिकानुपायान् जग्राह । इदं हि तदीयं दुष्टतापूर्ण मन्यायोपेतं कृत्यं नवयूनां शोणित मक्षुम्नात् । तेष्वनेके क्रुद्धा भवन्तः प्रत्यूहयुक्तान् मार्गान शिश्रियन् । शासन माङ्ग्लीयं यथायथा दमनं चकार तथा तथा तद्विधा भावाः शक्ति मगृह्णन् । आंग्लशासतं न तेषा मुपद्रवाणां मूलकारणे दृष्टि न्यदधात् । तत्तु तान क्षोत्तुं प्रावर्तत । परं न तत् तत्र सफलता मगच्छत् । तच्छतशो नवतरुणान् भारतरक्षा विधि (*Defence of India act*) संश्रित्य प्रतिषिद्धगतिकांश्चकार । तज् जस्टिस (न्यायाधीश) रॉलेटस्याध्यक्षताया मायोगं नियुयोज । स आयोग उपद्रवान्वीक्षणं विदध्यात्, तान् दूरीकर्तुञ्चोपायां च्छक्तिमतः प्रस्तुवीत इति शासनस्योद्देश्य मासीत् । रॉलेटायोगो यत् प्रति-

वेदनं प्रास्तावीत्; तस्य विरोधाय देशे महदान्दोलन मुदतिष्ठत्। आयोगविचारान् प्राप्य विधौ निर्मिते सति भारतस्य नागराणां स्वातन्त्र्य मेव विनाशं प्रपद्येत इत्येतद् विमृश्य देशोऽभवदुद्दीप्तः; कोपस्तस्यावर्धत। दिल्लयां राष्ट्रिय महासभाधिवेशने श्रीपण्डितमदनमोहनमालवीयः स्वभाषणेन सर्वकारं सावधानं व्यदधात्। 'स रॉलेटायोगसूचना मनुसृत्य विधिं न तद्रचेत्, तथा विधाय तदात्मानं सङ्कटे निपातयेदि'ति स्वां हितान्वितां सम्मतिं प्रायच्छत्। श्रीदादासाहिबप्रभृतयोऽन्यानि च तत्त्वानि समुपस्थाप्य सर्वकारं देशाहिताचरणान्निवारयामासुः। श्रीसुरेन्द्रनाथ वनर्जी–सरगङ्गाधरचिटनवीस—डॉ० तेजबहादुरसप्रू-श्रीशफीसदृशसर्वकारपक्षपात्यनुग्रवादिनेतृभि रपि यस्य विधेयकस्य घोरो विरोधः कृतः। श्रीपण्डितमदनमोहनमालवीयो माननीयः श्रीनिवासशास्त्री च विधेयकं स्ववादै स्तर्कैश्च छिन्न-भिन्नं कृतवन्तौ। तौ परमयोग्यता पूर्वकं दृढतया च तस्य विनाशकं रूपं प्रदर्श्य तदीया मनुपयोगितां प्रस्तुतीचक्रतुः। परं शासनं तु प्रजाप्रतिनिधीनां सम्मति मवाजानात्। राजकीयसदस्यसम्मति मधिगम्य तद् विधेयकं विधौ पर्यवीवृतत्। एतेनाखिलोऽपि देशो निस्तब्धतां ययौ। राज्यस्य कार्येषु प्रजायाः प्रतिनिधीनां सम्मति र्नाद्दता भवतीति देशः सम्यक् तदाजानात्। तस्यां क्षोभ रोषोद्वेगविकृतायां स्थित्यां महांस्तेजस्वी महात्मा गान्धी "रॉलेट एक्टोऽस्त्यन्यायपूर्णः; सः स्वाधीनतां, न्यायञ्च क्षिणोति; स जनाना माद्यान्यपि स्वत्वानि, येषु जातिरक्षावतिष्टते, हिनस्ति। अतश्चेद् विधित्वे तस्य पर्यवसानं संवृत्तं, तदावयं तान् तादृशांश्च विधीन् मन्तुं प्रतिषेत्स्यामः। वयं विश्वसिमो यदस्मिन् युद्धे समाप्ते सत्यमनुसृतं स्यात्। कस्यापि मनुष्यस्य जीवनं तदीयाः अधिकारास्तदीयाश्च सम्पदः समुपसंहृते सति संग्रामे नो हानिं मनागपि गच्छेयु रित्यस्मदीयो दृढो विश्वास इति निजगाद।

भारतस्य राजनीत्यजिरे महात्मनो गान्धिनः प्रवेशो देशस्य वसुन्धरायां नवीनामेव प्रभात सुषमा मकिरत्। महात्मनो गान्धिनो जीवनं सत्याहिंसातत्त्वयो र्महनीययोः स्थित

मासीत् । समग्रमानवजातेः कल्याणं दृष्टौ निधाय सः संसारस्य राजनीतेः समाजनीतेश्च समक्षे एतादृश मादर्शं स्थापितवान्; येन मनुष्यजाति रखण्डं सुखं विश्वबन्धुत्वजनितानन्दमुपभोक्तुं शक्नुवींत । अहिंसायां सत्ये च भारतस्य महर्षयो धर्म-राज-नीति-समाजविषयिकां नीतिं संस्थापयामासुः । महात्मा गान्धी भौतिकताध्वान्ते निपतिता माधुनिकीं जगतीमुद्धर्तुं तस्यां समालोकं व्यकिरद् यो मानवजाति तानि महान्ति पुण्योद्देश्यानि प्रति नयेद् यदर्थं सा चिरन्तनादनेहसः समुत्सुका वर्तते ।

आधुनिके जगति राजनीतिक-सामाजिकार्थिकक्षेत्रेषु परमकर्कशसंघर्षः प्रवर्तते । तेन मानवीयात्मनि घोराशान्ति र्निराशा च व्याप्तास्ति । तत्कारणानि म० गान्धी बुद्ध्वा स्वकीययाभ्यन्तर दृष्ट्या लोकस्य पुरतोऽहिंसासत्ययो र्व्यापक-मादर्शं निदधौ; येन संसारोऽयं शान्ति माप्नुयादनुभवेच्च ताम, खिले च जगति विश्वबन्धुत्वस्य सुखदं साम्राज्यं स्थापितं स्यात् । अहिंसां म० गान्धी विश्वस्योत्कृष्टतममद्वितीय मनुपमं ममंस्त । अस्ति सात्मशक्तिः । मानवीयात्मनि राजमानस्येश्वर-रीयतत्त्वस्यास्ति सा प्रकाशः । यत्रात्मनि विद्योततेऽहिंसाज्योति स्ततः कामक्रोधलोभादिदोषाः पलायन्ते । अहिंसायां सा विद्युच् छक्तिर्यारीनपि सुहृत्सु परिवर्तयति । म० गान्धी अहिंसायाः प्रकर्षं सततं प्रशंसन्नपि नातुष्यत् । जनरल स्मिथ स्तस्य (म. गान्धिनः) परमविरोधी समालोचकश्चासीत् । परं गच्छता कालेन स तस्य परममित्रं बभूव । म. गान्धिना अहिंसा मधि-कृत्योक्त मेकदा—"अहिंसा संसारस्य गुरुतमं बलं वर्तते । अस्ति सा संसारस्य सर्वोत्कृष्टो धर्मः (*law*) मम पञ्चाशद्-वर्षव्याप्यनुभव स्तत्र वर्तते । नाहं कदापि तस्याः परिस्थित्याः साम्मुख्यमकरवं यदाह मात्मानं साहाय्यशून्य माप्नुवम्; नाहं कामपि परिस्थितिं सोढु मक्षमं स्वं प्राप्नुवम् । अत्र कारणं स्पष्ट मेव सर्वदैव मम अहिंसान्वित्वात् । वैज्ञानिक पद्धत्या अहिंसां, सम्भावनाञ्च तदीयां व्यवहरतो मम व्यतीतानि पञ्चाशद्वर्षाणि । जीवनस्य प्रतिक्षेत्रं, कामं क्षेत्रं तत् किमप्य-भवद् गृहसम्बन्धि वा संस्थापरकं वा समाजपरकं वा राजनीतिकं

वा आर्थिकं सर्वत्रैव मया तस्याः प्रयोगः कृतः; नाहमेकमप्युदाहरण मीदृश मवाप्तवान् यत्र न सफलः सञ्जातः। ममापूर्णत्वादेव क्वापि जाता असफलता। अन्यथा सर्वत्रैव प्राप्तं साफल्यम्। अहमस्मि पूर्ण इत्येतत्तु साधिकारं न ब्रवीमि। पर मिदन्तु वदाम्यवश्यं सत्यस्योत्साहवानासमनुसन्धाता। अस्ति सत्यं परमेश्वरस्य नामान्तरम्। सत्यानुसन्धानेऽह महिंसायाः प्राकट्य मपश्यम्। सम्प्रति मम जीवनस्यास्ति ध्येयं तत्प्रचारणम्। ध्येयस्यास्य गतिमत्त्व मेव मज्जीवनस्यास्ति रसः, न तद् विहाय नाहं क्वापि जीवनं रसत्वेनानुभवामि।

नाह मस्मि स्वप्नवादी। अहमस्मि व्यवहारतः सत्यवादीति साधिकारं भणामि। नास्ति धर्मोऽहिंसा ऋषिमुनीना मेव कृते। सा तु जनसामान्यस्यापि कृते वर्तते। अहिंसास्त्यस्मदात्मनौनैसर्गिको धर्मः। हिंसा तु पशुवृत्ते र्नियमः। उच्च नियमाना मात्मिक शक्ते श्चाज्ञानुवर्तित्वेऽस्ति मानवस्य प्रतिष्ठा।

अनेनैवोद्देश्येन मया भारतस्य पुरः आत्मत्यागपरकः पुरातनो नियमो निहितोऽस्ति। सत्याग्रह स्तदर्थ मेव योऽस्त्यात्मोत्सर्गी। असहयोगे भद्रावज्ञा, सत्याग्रहश्च तन्निमित्तकः। अस्मद् ऋषयो, येऽहिंसा नियमं वा अहिंसा धर्म मुद्भावितवन्तो, न्यूटनाद् बुद्धिमत्तरा अभूवन्। ते वेलिंगटनाद् बलवत्तरा योद्धार आसन्। शस्त्रप्रयोगविदोऽपि ते तेषां (शस्त्राणाम्) क्षुद्रत्व मवेदिषु स्तस्माद्धेतोस्ते संसारं "तन्मुक्तिर्हिंसायां नास्ति परमहिंसाया मस्तीतिति" बोधितवन्तः। आत्मा अस्त्यविनश्वरः। न विनश्वरत्वं कदापि तमभिभवितु शक्नोति। सः (आत्मा) संसारस्य भौतिकं संगठनं हेलया पराभवति।

भारत मसिसिद्धान्त मङ्गीकृत्य क्षणिकं साफल्यं प्राप्तु प्रभवति; परं तस्यां स्थित्यां भारतं स्वभारतत्वं स्रंसयिष्यति। न तदा, भारतं ममहृदयस्याभिमानो भवेत्। भारतेन सह मम निर्बंधनं पूर्णप्रभृति सन्तिष्ठते। तस्य मदीयसर्वस्वत्वात्। भारतस्य सविधे जगद्धिताय वर्तते मङ्गलपथप्रदर्शकसंघः। न तेन यूरोपस्यान्धानुसरणं कर्त्तव्यम्। यदि भारत मसिसिद्धांत मग्रहीष्यत् तदा तन्मम परीक्षाया घटी अभविष्यत्।

नास्ति मम धर्मो भौगोलिक सीमागतः। सर्वजनीनत्वं कतिपयानीदृशान्युदा हरणानि निधत्ते, यै निष्क्रयणसामर्थ्यं निदधदप्यहं प्रतिशोधाद् दूरेऽस्मीति सिद्धयेत्। मम जीवन मेतस्यैव सिद्धान्तस्य प्रचारणार्थं वर्तते। मयायमेव महान् सिद्धान्तो भ्फाँरेस्टर-महावीर-वेलियन-जेसस-मुहम्मद-नानकनीकाशेषु महत्सु गुरुषु राजमानो दृष्टः।

अहिंसा मामकीनस्य विश्वासस्यास्ति प्रथमस्रङ्गः। स एव च मद्धर्मस्यान्त्यश्च ज्ञेयः। अहं जानानः कमपि प्राणिनं प्रति न हानिकरो भवितु शक्नोमि। मानवापकरणन्तु मम मनस्यपि नोत्पन्नं भवितुं शक्यम्। कामं ते (मानवाः) मयि महतीं हानि माचरेयुः। भारतं मानवजातेः कृतेऽहिंसायाः सन्देशं दास्यतीति ममाविचलो विश्वासः। कामं तत्र सफलतायाः प्राप्त्यां शतशो वर्षाणि व्यतीतानि स्युः। परं महतोऽस्योद्देशस्य पूर्त्या तद् (भारतम्) जगतः सकलेश्वपि देशेषु प्राप्स्यत्याद्यं स्थान मित्येत दहमवयामि।

अहिंसायां तावज्जीवितभृद्विश्वासो न भवति यावदीश्वरे नास्ति जीवनभृद्विश्वासः। ईश्वरकृपां किं वा तच्छक्तिमन्तरेणाहिंसकः पुरुषो न किमपि कर्तुं मर्हति। तां विना सः कोपभयनिष्क्रयणादिनिष्ठभावनाभ्यो मुक्तो भूत्वा न मर्तुं साहसं कदापि कर्तुं शक्नुते। ईश्वरः सर्वेषामध्यन्तः करणमध्यास्ते। न भय मीश्वरोपस्थित्यां स्थातु मर्हति। ईश्वरास्थावान् जनो न कदाप्यनुचिते कार्ये प्रवर्तते। ईश्वरस्य सर्वशक्तिमत्ताया, सर्वव्यापकतायाश्व ज्ञानमस्मान् स्वविरोधिनो जीवन स्याप्यादरं कर्तुं प्रवर्तयति।

मम महत्त्वाकाङ्क्षाः सन्ति नियमाधीनाः। संसार मह मर्हिसापथगामिनं कर्तु मर्हेय मित्येतद्विधा शक्तिर्मयीश्वरेण सञ्चारितास्ति। ईश्वरेण भारतस्याग्रेऽहिंसापरक सिद्धांत स्थापनायाहं स्वसाधनत्वेन निर्धारितोऽस्मीति मम विश्वासः। अद्यपर्यन्तं तत्-सम्बन्धे कृताप्रगति रस्ति महती; परमिदानीमपि तद्दिशाया मनुष्ठातु मवशिष्यते नितराम्।

अहिंसायां, सत्ये, सत्याग्रहे, सत्याग्रहिणि च महात्मना

गान्धिना स्वविचारा एते व्यक्तीकृताः पत्रेषु च लिखिताः ।

महात्मगान्धिनो राजनीति रहिंसावलम्बिनी बभूव । तस्याहिंसासीद् वीराणा महिंसा । न च कापुरुषाणाम् । कापुरूषस्याहिंसा तु भीरुता ज्ञेया । सा भीरुतायाः नामान्तरम् । महात्मा हिंसां वर ममंस्त न च भीरूताम् । सोऽवददत्रेदम् :-

समस्ताया जातेः क्लीवत्वीकरणात् हिंसाया अङ्गीकरणं सहस्र-गुणितं वर मस्ति । अहन्तु विश्वसिमि यदा हिंसा-भीरुतयो र्मध्ये एकतरस्याश्चयन मपेक्ष्येत तदाहं हिंसायाश्चयनाय स्वसम्मतिं दास्यामि । भारतमसहाय मिव स्वापमानं क्लीव इव सहेत इत्येतदुचितं न मन्यमानोऽहं स्वसम्मानं पातुं शस्त्रस्य ग्रहण मुचितं मन्ये । निःसंशय मह महिंसां हिंसातः पर मनन्त-गुणोच्छ्रितां गरीयसीञ्चावगच्छामि ।

ममाहिंसा न वदति—:जनाः प्रियजनान् स्वकीयान् अरक्षितान् विहाय भयात् क्लीवा इव पलायेरन् । नाहं कापुरुषं तथैव अहिंसा मुपदेष्टुं प्रभवामि यथा अन्धं जन मारोग्यशाला-दृश्यं दर्शयितुं न क्षमः । अहिंसा वीरताया उच्चतमः शिखरः । यै हिंसा पाठशालायां शिक्षा प्राप्तास्ति तेषां पुरोऽहिंसायाः श्रेष्ठतांप्रदर्शयितुं नाहं मनागपि काठिन्य मनुभवेयम् । चिरं यदा कातरता महमधारयं तदाहं स्वहृदये हिंसा मासयम् । परं यदाप्रभृत्येव मया कातरता त्यक्ता तदाप्रभृत्येव मया अहिंसायाः सम्मानं कर्तु मारब्धम् । अहिंसाधिकतमा मात्मशुद्धि कामयते । विना कमप्यपवादं हिंसातोऽहिंसोत्कृष्टतरा । हिंसकजननिहितशक्ते रहिंसकजननिहितशक्तिर्भवति महीयसी । अहिंसायां क्व पराजयस्यावस्थानम् । तत्र तु विजय एव सन्तिष्ठते । परं हिंसायास्तु फलं पराजयादन्यत् किमपि न ।

म० गान्धी अन्याय मनाचारञ्च विरोद्धु ममोघाया अहिंसात्मिकाया युद्धकलाया आविष्कारं विदधौ । तन्नामास्ति—सत्याग्रह इति । सत्यमवलम्ब्याहिंसात्मकैः साधनै रन्यायात्या-चारयोर्विरोधनमेव सत्याग्रह इति कथ्यते । म० गान्धी मानव-जातेः पुर इदममोघं शस्त्रं निदधौ । प्रार्थयते स्म च मानवजातिं यत् सा पशुबलु मप्रयुज्यैव महिंसाख्यं शस्त्रं प्रयुञ्जीत । अनुरु-

रोध च स मानवजातिं जगति सत्यं प्रेम स्थापयितु मनारतम्।
सत्याग्रह मुद्दिश्य महात्मनो गान्धिनोऽन्ये च केचन विचारा इह प्रस्तूयन्ते :—

सत्याग्रहस्तु सश्चन्द्रहासो यस्तमुपयुनक्ति सः (प्रयोक्ता) भद्राणि भद्राणि शतं पश्यति। इदं शस्त्रं सत्याग्रहात्मकं यस्य हि विरोधिन उपरि प्रयुज्यते सोऽपि कल्याणानि पश्यति। बिना शोणितविन्दुपातं सत्याग्रहसंज्ञक ममोघं प्रहरणं नूनं दूरगामीनि सत्फलानि प्रसूते।
अहिंसायां सत्यान्वितायां सत्यां, संसारं तत्प्रयोक्ता स्वचरणयोः प्रणतं कर्तुं प्रभवति। नास्ति वस्तुतः सत्याग्रहो राजनीतिके राष्ट्रिये च जीवने सत्यविनययोश्च प्रवेशाद् भिन्नः कोऽप्यन्यः। तावत् सत्याग्रही विजयी न भवितुं शक्नोति; यावत् तद्धृदये दुर्भावनोपविशति। आत्मानं ये निर्बल मवगच्छन्ति ते न प्रेम्णि योग्याः। वयं प्रतिप्रत्यूषं "नाह मस्यां धरायां कस्मादपि भेष्यामि। केवल महं परमेश्वराद् भेष्यामि, नाहं कस्मिन्नपि दुर्भावनां निधास्यामि; नाहं कस्याप्यन्यायं प्रति स्वशिरो नमयिष्यामि; अहं सत्येनासत्यं जेष्यामि। असत्यं विरोद्धु महं सर्वविधान्यपि कष्टानि सोढुं समुद्यतो भविष्यामि"—इत्येषः शिवसङ्कल्पोऽस्माभिः करणीयः।

सत्याग्रहस्य सन्ति पर्यायाः—पूर्णात्मशोधनम्; मूर्धन्योविनयः, अधिकतमं सहिष्णुत्वम्, अत्यवदातश्च विश्वासः।

सत्यान्वेषणं, सत्य मासादयितुं कृतो निश्चयो हि सत्याग्रह इत्युदीर्यते। सत्याग्रहस्तु नीरवतापूर्वकं मन्दगत्या कार्यं कुरुते, पर मस्मात् सत्याग्रहबलादन्यत् न किमपि बलम्। तदस्ति प्रत्यक्षत्वरितकार्यविधायकम्।

सत्याग्रहः प्रत्यक्षकार्यकारितयाः शक्तिसम्पन्न मुपकरणम्। सर्वसाधनप्रयोगान्तरं सत्याग्रही सत्याग्रहसाधन मवलम्बेत।

सत्याग्रही यथा योद्धुं सन्नद्धः स्यात् तथैव सः सन्ध्यर्थं शान्त्यर्थञ्चोत्सुकः सन्तिष्ठेत। सन्धिनिमित्तेनागमिष्यन्तं सम्मानपूर्णं सदवसरं स आह्वयेत्।

सत्याग्रहिण संहितायां पशुबलस्यपुरः शिरोनतीकरणस्य नास्ति कोऽप्यादेशः।

सत्याग्रही प्रकृत्या सौम्यः न सः कमपि क्षिणोति। सः संरम्भाद् द्वेषाच्च दूरे सन्तिष्ठेत। सः सत्येऽहिंसायाञ्च श्रद्दधीत। भवेच्च सः प्रकृतेः श्रेष्ठताया मास्थाबान्। सत्याग्रहे धूर्तता, विश्वासघातिता, असत्यञ्च स्थानं न लब्धुं शक्नुयुः।

अद्यतने संसारे धूर्तता असत्यता च नितरां व्यवह्रियेते। चेदहं तदुपैक्षिष्ये तदा परमेश्वर स्तदर्थं मां प्रक्ष्यति।

सत्याग्रही किं वा सर्वसामान्यजनता कस्यामपि दशायां न हिंसां संश्रयेत्। एतस्मिन् विषये तदितर स्तत्र विस्रम्भभाग् भवेत्। एषा प्रत्याश्रुतिस्तत्रापेक्ष्यते। न सत्याग्रहो हिंसामये वातावरणे संवर्धते न च स्थातु मर्हति। हिंसात्मककृत्यत्वस्योत्तेजना राज्येन वा अभिकरणैः समुत्पादितेत्यत्तु वर्ततेऽर्थरहितम्। भवति हि सत्याग्रही समाप्तसाधनः कदापीत्येतदपि न पारमार्थिकत्वम्। अतः स न कदापि सत्याग्रहं न च सविनयावज्ञा मवजानाति।

अस्ति सत्याग्रहः पद्धतिविशेषः। तत्र कष्टानि सहित्वाधिकाराः प्राप्यन्ते। सत्याग्रहस्तु सशस्त्रस्य विरोधस्य परिपन्थी। आत्माननुमोदितकार्याचरणप्रतिषेधस्त्वात्मबलस्योपयोग इति मन्तव्यम्। इदं हि बोधयितु मिहोदाहरणं निधीयते— कल्प्यतां यच्छासनेन कोऽपीदृग् विधिः प्रयुक्तीकृतो यो मां शरव्यीकरोति परमस्ति सोऽप्रियः। तादृशं विधि निरस्तं कारयितुं हिंसामुपयुज्य शासनं चेदनुरुध्यते, तदा तद्बलं दैहिकं बलं भवेत्। परं तथा नानुष्ठाय न यदि स विधिः सत्क्रियते; तद्विध्यनादराच्च दण्डः सह्यते तदा तद् आत्मबल मिति ज्ञेयम्।

आत्मबलिदानं परबलिदानाज्ज्यायोगरीयश्चेत्येतत्तु सर्वेषामपि स्वीकरणीय मस्ति। तदविधे कार्ये तदुपयोगोऽन्याय्यः। तदुपयोक्ता तु कष्टं लभते। न सः स्वस्खलितिभिः परान् पीडयेत्।

अहिंसा महं प्रेम्णो भावात्मिकां स्थितिं मन्ये। अहिंसां

सत्य ञ्चाहं वपुषो द्वौ······वेद्मि। न तौ विनाहं जीवनं वोढुं क्षमः। अनुक्षण महिंसा महं महाशक्ति मिवावधारयामि।

सत्याग्रहस्यार्थोऽस्ति सत्यस्य बलम्। सोऽस्ति प्रेम्ण आत्मनो वा बलम्। सत्यस्यानुसरणे हिंसा न क्वापि स्थातु मर्हतीति सत्याग्रहं प्रयुज्य मयाङ्गीकृतम्। सिद्धान्तस्यार्थोस्ति सत्यस्य परिपोषणम्; पर मेतत् कार्य मुद्दिश्य न स्वविरोधी निपीडनीयः। परमात्मानं संश्रित्यैव तत् करणीयम्। सत्याग्रह-निष्क्रियप्रतिरोधो निर्बलस्यायुध मस्ति तदा सत्याग्रहो बलवत्त-रस्यास्ति शस्त्रम्।

डेनियालो मेडेज पर्वियनयो विधिं न मेने। यतो हि स विधि स्तदान्तरात्मनो विरुद्ध आसीत्। तदवज्ञाहेतो रेव सः शान्तिपूर्वकं दण्ड मसहत। एतेन तस्य शुद्धसत्याग्रहित्वं सिद्धम्। स इदं यत्पावनाचरणमपालयत् तद् ज्ञापयति तस्य सर्वाधिक-शुद्ध सत्याग्रहकारित्वम्। शुकरातो ग्रीकयूनां कृते सत्योपदेश-नात्र स्वाननं व्यावर्तयत्। एतस्मात् कारणात् वीरतापूर्वकं मृत्युदण्डं सेहे। अतः स आसीत् सत्याग्रही। सत्याग्रही मृत्यु-दण्डमप्यङ्गीकर्तुं समुद्यतो भवति परं न सोऽसत्यं जीवनरक्षायै कदापि वृणुते। प्रह्लादः स्वपितु राज्ञामुपेक्षाञ्चक्रे। पितु रादेश मसौ स्वकीयाभ्यन्तरात्मनो विपरीत ममंस्त। अतः स तथा कर्तुं मबाध्यत। सः पितृप्रदत्तानि सर्वाण्यपि कष्टानि विना कामप्यापत्ति शान्त्या सेहे। सोऽप्यत आसीत् सत्याग्रही। मीरा-बाई स्वात्माज्ञानिर्देशेन कार्यं विधाय भर्तार मकोपयदित्येत-त्कारणात् सा वहून्यपमानपूर्णानि कष्टानिसोढवती; परं सा स्वमहोद्देश्यपूर्त्यामेव संललाग। तदेवं सापि सत्याग्रहवत्यासीत्। अत्रेदमपि स्मरणीय मस्ति न डेनियालो न शुकरातो न प्रह्लादो न मीराबाई तेषु दुर्भावना मविभर्यें तत्र तत्र कष्टप्रदातार आसन्। डेनियालश्शुकरातश्च स्वराज्यस्य श्रेष्ठाभिवन्दनीय-नागरावधगम्येतेऽधुना। प्रह्लादः सत्पुत्रो मीरा चादर्शपत्नी जगत्यामद्यावगम्येते।

प्रेम्णो नियमौनान्यः कश्चित्; सत्यमेव तस्य नियमः। यत्र सत्यं न तत्र प्रेमापि न। सत्य रहितं प्रेम 'मोह' इति

निगद्यते। परकीयान् देशानपकृत्य स्वदेशे कृतं प्रेम; कस्यचन यूनोयुवत्यां प्रेम, पितुःस्वसुते कृत मन्धप्रेम मोह एवाभिधीयते। अस्ति प्रेम सर्वविधपशुप्रवृत्तिभ्यः परस्तात्। न तत्र भवति पक्षपातः। तत्तु वर्तते तत् कार्षापणं यस्यैकस्मिन् भागे प्रेम विराजतेऽपरस्मिंश्च भागे सत्यम्। तदीदृशं कार्षापणं यस्य सर्वत्र प्रचलनं भवति। भवति तन्मूल्यातीतम्।

'स्वराज्यम्" इत्येतस्य पदस्यार्थोऽस्ति—"तद् राज्यं यत्र जनमतद्वारेण सर्वजनहिताय शासनं सञ्चाल्यते"।

वसन्तर्तोः शोभा तरौ तरौ विलसति। तद्ऋतो रागमने पृथिवी नवयौवनश्रिया समास्वज्यते एव मेव यदा स्वराज्य-भावः समाजे परमार्थतया सन्निबिशति, तदा जीवनस्य प्रत्यङ्गं नवीन जीवनं शक्तिश्च समुत्पद्येते। चतुरस्रतया जीवन प्रवाहः प्रवहमानो दृश्यते। राष्ट्रस्य सेवकाः स्वस्वयोग्यता-शक्ति-गुणै विविधासु विश्वजनीनासु सेवासु संलग्ना जायन्ते। न कस्यामप्यवस्थायां राष्ट्राद् राष्ट्रान्तरम्प्रति दानेन स्वराज्यं प्राप्यते। तत्तु राष्ट्रस्योत्कृष्टत्याग-शोणितेनाधिगम्यते। स्व-राज्यं ह्यपरिमित कष्टसहनस्य सततपरिश्रमस्य च फल मस्ति। अस्मद्देशस्य साधारणतमोऽपि जनः स्वातन्त्र्य मश्नुवीत इत्येषः स्वराज्यस्यार्थं इत्यहं मन्ये। आंग्लबन्धनाद् भारतं स्यान् मुक्त मित्यत्र न मदीयं मनो रमते; अहन्तु सर्वविधबन्धनात् स्या-दुन्मुक्त मिति कामये।

मम स्वराज्य मस्मत्संस्कृति-सभ्यताश्रितां शेमुषी मक्षुण्णां निषेविस्यते। अहं भूयांसि वस्तूनि स्वीकर्तु मिच्छाम्या-त्मभावेन, परं तेषां समेषा मपि स्थिति र्भारतीयधरातलस्था स्यात्। अहं प्रतीचीत स्तस्यां दशाया मृण मादातु मुद्यतो भवेयं, यदाहं तद्गृहीतमूलधनं सकुसीदं निवर्तयितुं क्षमतां प्राप्नोमीति विश्वासो मामकीने मानसे जायेत।

स्वराज्यस्य कृते करिष्यमाणा यात्रा नितान्तकष्टप्रद-पर्वतारोहण यात्रेव। न हि सा तु ततोऽपि कठिनतरा। तदर्थं सर्वतोऽपि चित्त मावर्ज्य स्वध्यानस्य तस्मिन्नेव कृत्स्नतया संस्था-पन मभिलष्यते। तन्निमित्तेन विशाला संगठन शक्तिरभि-

लष्यते। आहोस्विदेव मिदं वाच्यम्—"स्वराज्यप्रयोजनेन राष्ट्रियशिक्षा—जन-समाजव्यापिनी शिक्षा—जनतायां राष्ट्रिय-भावनानिष्ठोद्बोधनञ्च भृश माकाङ्क्ष्यन्ते। नेदं कार्यं मैन्द्र-जालिक यष्ट्या सद्यः सम्पद्येत तद्विकासः स्याच्छनैः शनैः। न च रुधिरक्रान्त्या तद् भवितु मर्हति"।

"आत्मशासनस्यार्थोऽस्ति शासनतन्त्रात् स्वातन्त्र मवाप्तु मनारतं प्रयासः। कामं तच्छासनं वैदेशिक स्याद् वा तद्-भिन्नम्"।

मम स्वराज्यं परेषां वधं विधाय न प्रतिष्ठां प्राप्नुयात्, न तत् तद्विधदुष्कार्यस्य परिणामो भवेदपि तु तदात्मत्याग-विषयकं स्वेच्छापूर्वकं कृतं कार्यं भवेत्। मम स्वराज्यं परेषां हत्यायाः फलं न स्यात् कदापि। न मम स्वराज्य मधिकाराणां हिंसां कृत्वोपनतं स्यात्। तत्तु सुन्दर सत्कर्त्तव्यस्वाभाविककृत्यै र्लब्धव्यं भवेत्। तत्र तु चैतन्यप्रभुप्रिय-चेतनेव चेतना भवेत्। तत्कार्यसिद्ध्यर्थं तेषां नवतरुणानां तासाञ्च नवयुवतीनां सन्नि-वेशोऽपेक्ष्यते यद्ध्येयं केवलं राष्ट्रसेवनं विद्यते।

यावत् प्रियात्मत्यागानां दृढप्रतिज्ञाभृतां कार्यकर्तॄणां महती सेना न भविष्यति तावज्जनताया यथार्थतया प्रगति र्न भवितु शक्ष्यतिममास्त्ययं विश्वासः। स्वराज्यस्य दिशाया मस्म-दीया प्रगति रधिकाधिकतरा तदैव भवेद् यदा दीनदरिद्रहिताय कार्यकर्तारः स्वकीयं सर्वस्वमपि होतु सन्नद्धाः स्युः।

स्वराज्यञ्चेदस्मान् न शिष्टसभ्यान् विधातु प्रभवति तदास्माकीना शिष्टता सभ्यता शुद्धा सुदृढा च न भवितु शक्या। अतथाविधत्वे तद् (स्वराज्यम्) व्यर्थम्। अस्मदीयायाः सभ्यतायाः स्वकीयेषु निखिलेष्वपि कृत्येषु—सर्वजनीनेषु व्य-ष्टिगतकार्येषु—नैतिकतायाः उच्चतमासने प्रतिष्ठापनं मूलतत्त्वं ज्ञेयम्।

यस्य स्वराज्यस्य स्वप्न मह मीक्षे तत्र जात्युपजाति-सम्प्रदायमतमतान्तरभेदभावो न लभ्यते। न च तत्र शिक्षा-प्राप्तानां किं वार्थवतां जनाना मेवैकाधिकारः स्वप्रभुतां निद-धाति। स्वराज्यं तु सर्वेषा मपि हिताय, सर्वेषमपि सुखाय

भवेत्। तत्र पूर्वोक्तमानवान् सर्वान् प्रगृह्य लक्षशः कोटिशश्च क्षुधितानां निःसहायानां दीनहीनाना मन्धाना मङ्गविकृतानाञ्च हितानि समावेशितानि भवेयुः।

"रामराज्य" मित्येतेन हिन्दूराज्यमिति नास्तीष्टम्। तेन तु ममप्रयोजन मीश्वरीयराज्य मिति वर्तते। 'ईश्वर' इत्येतेन पदेनात्र सत्यधर्मयोर्ग्रहणं क्रियते। मम कल्पितो रामः काम जातु पृथिव्यां स्वां स्थितिं निदधौ वा न निदधौ परं रामराज्यस्य प्राचीनं पावनं स्वरूपं निःसंशय मवितथ जनतन्त्रस्यास्ति भव्यं पवित्रं स्वरूपम्। रामराज्ये क्षुद्रः क्षुद्रतरोऽपि नागरोऽतिशीघ्रं विनार्थसाध्यकार्याचरणं न्याय मवाप्तु मशक्त्। रामायणे प्रोक्तम्—"तत्र श्वानोऽपि न्याय मलभन्त"। अनुशासित संस्कृतं जनतंत्रं संसारेऽस्त्युत्कृष्टतमं वस्तु। पक्षपातपूर्ण मज्ञान युक्त प्रभान्वितं जनतन्त्रं देशमव्यवस्थातमसि पातयति। मम कल्पनायां जनतन्त्रं स्वकीया मिच्छां भौतिक बलेन परेषु नारोपयति। तदस्ति तद्विरोधि।

जनतन्त्रे नातङ्कवादिनी भावना रक्षां प्राप्तु मर्हति। केषाञ्चन जनानां दृष्ट्या जनतया आतङ्कवादः सर्वकारीयातङ्कवादाद् दारुणतरः। स जनतन्त्रभावनाया उग्रतरः परिपन्थी सर्वकारस्यतङ्कवातः प्रजातन्त्रीयां भावनां दृढयति परं जनतायाः आतङ्कवादो प्रजातन्त्रस्यास्ति हन्ता। वस्तुतस्तु स जनतन्त्रवादी यो विशुद्धा हिंसात्मकोपादानैः स्वस्य, स्वकीयस्य देशस्य, अन्ततश्च सर्वस्याः अपि मनुष्यजातेः स्वतन्त्रतां गोपायति।

यदा जनता राजनीतिक स्वत्व मधियाति, तदा जनस्वातन्त्र्याध्वनि निपतिष्यन्ती बाधा लघीयस्कात मुपैति। किं वेत्थं वक्तव्यं—यो राष्ट्रो राज्यै बाधा मनिपातयन् स्वकार्यं सुचारुतया सम्यक् सम्पादयति स एव परमार्थतो जनतन्त्रात्मको राष्ट्रः। यत्रैतादृशीनां परिस्थितिना मभावोऽस्तित त्रत्यं शासनं नाम्नैव जनतन्त्रात्मकं वक्तु सुशकं, न तद् यथार्थतया जनतन्त्रनिष्ठं शासनम्। अहं अस्या मेवावस्थायां स्वं जनतन्त्रिणं मन्तुमधिकारं निदधामि किं वा तदैव जनतन्त्र्यस्मि यदाहं मनुष्यजातिनिर्धनतरमनुष्यैणः साकं मैकात्म्यगतां भावना मनु-

भवितु मर्हेयम् ।

अहमनुभवामि यद् भारतस्य धर्मसंघो देशान्तरीयाद् धर्मसंघाद् भिन्न एव। भारतं संसारस्य धार्मिकप्रभुर्भवितुं क्षमम् आत्मशुद्धिप्रक्रियायां जगति तादृशीं तेजस्वितां नान्यद् राष्ट्रान्तरं निदधाति । भारतं नायसशस्त्र मपेक्षते । तत्तु दिव्यास्त्रैर्युयुधे तत् सम्प्रत्यपि तत् कर्तुं प्रभवति । अन्ये देशाः पशुबलपक्षे सन्ति यूरोपे प्रवर्तमानं जन्यं तत्र बलीयो ज्वलन्निदर्शनम् । भारतमात्मबलेन सर्वाण्यपि बलानि जेतुं शक्नोति । इतिहास एवंविधोदाहरणै र्बहुभि र्विभूष्यमाणोऽस्ति । तैः आत्मबलस्य पुरतः पशुबलं नितांतं क्षुद्र मेवेति स्फुटतया सिद्धयति । कवय आत्मबलस्य गुणान् गायन्त उपलभ्यन्ते । ऋषिभिरेतस्मिन् विषये स्वानुभवा अभिव्यक्तकृताः सन्ति ।

अहं भारतं स्वतन्त्रं शक्तिश्रितञ्चप्रेक्षितु मभिलषे । एष महान् राष्ट्रः संसारस्य श्रेयसे स्वेच्छया पवित्रात्मत्यागं कर्तु मनिशं स्यात् समुद्यतः ।

मदीया तु महत्वाकाङ्क्षा भारतीयस्वातन्त्र्यादुदग्रतरास्ति । अहं भारतस्योन्मुक्त्यां परतन्त्रत्वात्, प्रतीच्यशोषणनाशितायाः पृथिव्याः निर्बलानां जातीनां पराधीनत्वादुन्मोचन मुद्धरणं वा मन्ये ।

अहं भारतनिमित्तेनैतादृशं विधानं प्रस्तुतीकर्तुं चेष्टिष्ये येन भारतं सर्वविधाया दासतायाः मुक्तं भवेत् । ईदृशञ्च भारतं कर्तुं प्रयत्नशीलः स्यां, येनाकिञ्चनोऽपि मानवो मानवस्य सामान्यं सुखमधिगच्छेद्देशञ्चेमं सः स्वकीयं देशं मन्येत । अहं कामये यदस्मिन् मदीये देशे भेदभावो न सन्तिष्ठेत । अत्र सर्वा अपि जातयः पूर्णामैकतां प्रीतिञ्च संश्रयन्त्यो विलोवयेरन् । भारते नास्पृश्यता न च सुरा नौषधयौ विनश्वरतावर्षिण्यः स्थानं लभरेन् । नार्यस्तमेवाधिकार माप्नुयुर्यं पुरुषाः प्राप्नुवन्ति ।

वयं संसारेऽत्र शान्त्या वसेम; न वयं कमपि देशं जनं वा शोषयेम । एतद्विधतया वस्तुतो नास्माकं कृते लघीयस्यप्यनीकिनी अपेक्ष्यते । लक्षशः कोटिशश्च जना यानि हितानि काङ्क्षन्ति तेषां सर्वेषा मपि हितानां समीचीनतयेह रक्षा

कर्त्तव्या ।

तानि हितानिरीक्ष्येरन् यानि मूकजनता वाञ्छति । न तानि हितानि देशविरोधीनि भवेयु र्न च देशान्तर विरोधीनि । व्यष्टिगतदृष्ट्याहन्तु देशीयादेशीयतायां न मनागप्यभिरुचिं निदधामि । अस्तीदं मम स्वप्नस्य भारतम् ।

अस्तीदं महात्मगान्धिनो विचाराणां दिग्दर्शनम् । एतेषां विचाराणा मुपस्थापितत्वादिदं स्वातन्त्र्यसंग्रामैतिहय मात्मबलस्य तेजोऽधियात्वत स्तेषां सन्निवेशन मुचिततर मेव ।

म० गान्धी राजनीतिकध्येयं (देशस्वातन्त्र्यनिमित्तेन) प्राप्तुं देशस्य तमहिंसात्मकसिद्धान्तं प्रायुनग् ऋषिभि राविष्कृतस्य तस्य सहस्रशो वर्षाण्यतीतानि । तं सिद्धान्तं प्रयुज्य स विश्वस्य पुर आदर्श नव मेव न्यदधात् । सिद्धान्त मेत मादाय स येषां सत्याग्रहान्दोलनानां प्रवर्तनञ्चकार, तेषु कानिचन लक्ष्यीकृत्य तद्विषयकं विवरण मिह विधीयते—

भारते सत्याग्रहान्दोलन प्रवर्तनात् प्राङ् महात्मा गान्धी दक्षिणाफ्रीकायां सत्याग्रहादोलनं प्रावीवृतत् । तत्र च तन्नेतृत्व मभिनन्दीयां सफलता मविन्दत् । दक्षिणाफ्रीकायां प्रवासिषु भारतीयेषु सिताङ्गानां व्यवहारोऽमानपूर्णो निन्द्यश्चासीत् । आंग्लाः स्वांस्तु श्रेष्ठानमन्यन्त परं स्वेतरांस्ते नितरा मेव हीनान् क्षुद्रांश्चामंसत । तेषु तेषां (सिताङ्गानां) दृष्टि जुगुप्सान्यक्कारमय्येवावर्तत । भारतीयाना मन्येषाञ्चैशियावासिना मुपरि ते भृशक्षुद्रधियं निदधुः । तेषां समेषा मपि कृते व्यवहृता विधयः (*law*) बभूवु र्भृशमेव सङ्कुचिता अवनति गर्तनिपातनकारिण स्तिरस्कार जनकाः । न तान् कोऽपि कदाप्यात्मसम्मानभावनावान् सोढुं शक्नौति क्षणमेकमपि । गौराङ्गा भारतीयेषु किंवा समग्राफ्रीकैशियधिवासिषु प्रतिक्षणं निरादरधियं निधायातितरां तानदुन्वन् । प्रवासिभारतीयानां स्वाधीनतां मानवोचिताधिकारांश्च तत्प्रयुक्ता विधयः क्षिण्वन्ति स्म । तस्मात्कारणात् तत्तद्विधीन् विरोद्धुं मसन्तोषाग्ने ज्वाला भयावहा भूत्वान्दोलनरूप माधायोदतिष्ठन् । ऐशियिकनियमसंशोधनाधिनियमेन (एशियाटिकलॉ अमेण्डमेण्टएक्ट) तत्र भारतीय

प्रवासिषु तथाविधतयैव व्यवाह्रियत यथाविधतयाधिब्रिटिश-भारतमपराधिषु हिंसादिदुष्कृत्यकारिषु व्यवह्रियते स्म। स्वनाम्नः पञ्जीकरणाय प्रवासिनो भारतौकसोऽबाध्यन्त। आरक्षी (*Police*) विभागे स्वाङ्गुष्ठ चिह्नं दातुं त आदिश्यन्त। एष नियमः प्रवासिनामात्मसम्मानाघातकारी बभूव।

स्वतन्त्रेष्वपि जनेषु प्रयुज्यमानः सोऽनुचितो नियमो महात्मानं गान्धिनमदुनोत्। तमपमानजनकमन्याय्यं नियमं प्रत्याख्यातुं स विद्रोहपताकामुत्थापयितुं निश्चिकाय।

षडुत्तरैकोनविंशतिशततमेशवीयाब्दे, सभायामेकस्यां विशालायां, यत्र प्रायेण त्रिसहस्रभारतीयप्रतिनिधय उपातिष्ठन्; तस्याधिनियमस्य शान्तिपूर्वकं प्रबलं विरोधमनुष्ठातुं प्रस्तावः पारिततां नीतो बभूव। एकैको भारतीयः प्रतिनिधिः स्वकीयं सर्वस्वमपि हुत्वाधिनियमं भेत्तुं प्रत्याश्रौषीत्। शान्तिमयप्रति-रोधारम्भात् प्राक् प्रतिनिधिमण्डलेन प्रार्थनापत्रैः, साक्षात्कारेण च समुचितेन विधिना शान्तिं श्रयता न्यायव्यहरणाय प्रयत्नाः अक्रियन्त। परं स सर्वोऽपि प्रयासो वैयर्थ्यमगमत्। तत्काल-वर्तिनौपनिवेशिकमन्त्रिणा श्रीडङ्कनेन यूरोपीयानामस्तित्वं श्रेष्टत्वञ्च पातुं सोऽधिनियमोऽनिवार्यतयापेक्ष्यत इत्यभिधाय सर्वोऽपि विहितः प्रयत्नो निरस्ततां नीतः।

अन्ततो यात्वा महात्मा गान्धी सत्याग्रहास्त्रमवलम्बितु मबाध्यत। प्रवासिनो भारतीयाः अङ्गुष्ठचिह्नं दातुं स्पष्टतया प्रतिषेधं कर्तुमारभन्त। सप्ताधिकैकोनविंशतिशततमेशवीया ब्दे जुलाईमासे अध्यादेशमनुसृत्य अफ्रीकासर्वकारोऽनुमतिपत्र-कार्यालयं स्थापयामास। म० गान्धी तत्कार्यालयद्वारे शान्त्या प्रवेशरोधं विधातुं निरचिनोत्। द्वादशाब्ददेशीया अर्भकास्त-त्कार्याय स्वनामालेखयन्। सर्वकारः सत्याग्रहिणस्तन्नेतृंश्च प्रतिबद्धुं निश्चिकाय। सत्याग्रहः शनैः शनैः प्रबलतां जगाम। सर्वकारोऽपि दमनं कठोरतयारभत। स्वनाम्नः पञ्जीकरणाय सत्याग्रहिणो निषिसिधुस्तस्माद्धेतोर्महात्मगान्धिप्राभृतयः सर्वेऽप्यदण्ड्यन्त। जनरलस्मटः सत्याग्रहिणो निपीडयितुं नानो-पायानशिश्रियत। सोऽध्यादेशं न निरास्थत्। भारतीयाना

मफ्रीकाप्रवेशरोधायाप्यसौ विधेयकं प्रास्तावीत्। ततश्च विधेयकं विधानेऽपि पर्यणीनमत्। तद्विधविधानानि विरोद्धुं शान्तिमयः संघर्षः समारभ्यत। जौहांसवर्गे १६-६-१६०८ तमदिनाङ्के वृहद्धोली समायोजिताभवत् तत्र च पञ्जीसम्बन्धिद्विसहस्र-प्रमाणपत्राण्यदह्यन्त। एतानि तान्यासन् यानि जनरलस्मटस्य प्रभुतायां नामपञ्जीकरणपरकाणि कृत्वा प्रादीयन्त। सत्याग्रहसंयुगवीराः सर्वकारस्य परमासहनीयानत्याचारानसहन्त; ते कारागारेऽक्षिप्यन्त। वेत्रप्रहारास्तेष्वक्रियन्त। विविधान्यकर्कशयन्त्रणासु न्यपात्यन्त। एतावदेव न जातं, न्यायाधिकरणं तत्रत्यवैवाहिकसम्बन्धिविधानाननुरूपत्वात्, भारतीयानां तद्विधस्य सम्बन्धस्यापि विधानविपर्यस्तत्वमघोषयत्। एतद्धेतोर्भारतीयमहिलानामन्तःकरणं कठोरमाघातमवाप। भृशञ्च तदव्यथत। भारतीयमहिलाः स्वधर्मस्यापमानं मत्वा सत्याग्रहसंग्रामे मिमिलुः। ताः कारावासदण्डमलभन्त। सहस्रशो नर-नारी-बालाः वैधानिकं तं नियमं भङ्क्त्वा ट्रान्सवालसीमायां प्रविविशुः। तस्मात्कारणात् सर्वेऽपि तेऽदण्ड्यन्त। एतस्मिन्नेवान्तराले श्रमिकाः स्वश्रमकर्मभ्यः पराङ्मुखा अजायन्त। सा स्थिति भयङ्करतामसृटजत। श्रमिकाश्च तेऽदण्ड्यन्त। सकलाः अपि ते सत्याग्रहिणो भारतीयाः संख्यातीतानि कष्टान्यसहन्त। परं भगवत्कृपयान्ततो गत्वा ते सत्याग्रहिणो विजयमलभन्त। महात्मगान्धिपोलकादिकाः सर्वे नेतारः ससत्याग्रहिण उन्मुक्ताः अक्रियन्त। अफ्रीकासर्वकारस्ततः परिक्लान्तो भूत्वा प्रवासिभारतीयकष्टनिराकरणाय आयोगं समस्थापयत्। सर्वेऽपि नियमाधिनियमा निराकृता व्यधीयन्त येषां विरोधाय सत्याग्रहयुद्धं प्रावर्तत।

तदेवं महात्मनो गान्धिनो नेतृत्वे सत्याग्रहजन्यं सफलतापूर्वकमशाम्यत्। यत्र तादृशं युद्धमष्टवर्षाणि प्राचलत्। तत्सत्याग्रहयुद्धं सामाजिकन्यायार्थं क्रान्तिकरिण्या प्रणाल्या एकोऽभिनव आविष्कारो मानवजातेः समक्षे निहितो बभूव। स आविष्कार इत्थं वस्तुतो मानवेतिहासे नवं परिच्छेदमवतारयामास।

## पञ्चम परिच्छेदः

विजयश्रियमफ्रीकायां सत्याग्रहसमरद्वारेण लब्ध्वा, तत्रत्यानां प्रवासिनां भारतीयानामन्यायात्याचारकारिनियमाधिनियमेभ्यस्तत्रत्यसर्वकारसञ्चालितेभ्यो विधायोद्धारं म० गान्धी भारतमाजगाम।

आंग्लशासनं प्रथमविश्वयुद्धसमाप्ते सत्यपि भारतीयानां न्यायोचितानधिकारान् नाश्रौषीत्। तत् तानवज्ञाय भारतीयेषु दमनमेव कर्तु प्रचक्रमे। तस्मात्कारणाज्जनता तद् विरोद्धुं सरोषमुत्थिता बभूव। उग्रवादिनोऽनुग्रवादिनश्च नेतारो जनताया नेतृत्वं विदधु। शासनं प्रथम मेव रौलेट (*Sydney Rowlatt*) स्याध्यक्षतायां समितिमस्थापयत्; तत्प्रतिवेदनाधारे च विधेयकद्वयं पारिततामनैषीत्। तत् सपदि जनतायाः स्वतन्त्रतामपहृत्य जनानपि प्रमुखान् विरोधतत्परान् वन्दिगृहे चिक्षेप। इदं सर्वमपि वीक्ष्य महात्मा गान्धी स्वसत्याग्रहान्दोलनं प्रवर्तयितुमनुकूलमवसरमपश्यत्। स भारतशासनमचेतयच्च चेच्छासनं न तं तमधिनियमं परावर्त्स्यत तदा सत्याग्रहारम्भोऽभविष्यत्। शासनन्तु स्वमनोऽभिलषितं विधिमाश्रित्य स्वहस्तं प्रबलं पूर्वमेव विदधावतस्तैद् विनाभियोगं जनान् वन्दीकर्तुं प्राक्रमत।[1]

प्रथमं सत्याग्रहात्मकमसहयोगान्दोलनं यद्वि महात्मागान्धी प्रवर्तयितुमबाध्यत तत्सञ्चालयितुमहमदाबादं निकषा सावरमतीसरित्कूले स्वाश्रमं स्थापितवान्।

तदाश्रमपदं सत्याग्रहाश्रम' इत्येतेन नाम्ना अप्रथत। महात्मा गान्धी 'श्रीगोपालकृष्णगोखले' महाभागे परमादरदृष्टिं न्यदधात्। स भारतीयेषु नेतृषु तस्य प्रभावादावर्जितो बभूव। तदीया नीतिरपि तमप्रीणात्।

महात्मागान्धी नितान्तदूरदर्शी विचारवानुदारमानसो

---

१. चित्तरञ्जनदास : *Builders of Modern India. pp. 40*

मनीष्यासीत् । तस्य राजनीतिराध्यात्मिकताभुवमधिष्ठाय शोभते स्म । स आसीदहिंसावादी, सत्ये सः स्वां धियं मनश्च सततं निदधत कार्याणि कर्तुमात्मानं प्रावीवर्तत् एतद्वैशिष्ट्य-विशिष्टो जनः कदा कस्मिन् द्वेषधियत्वं निधातुं शक्नुते । स भारतीयेषु यथात्मीयतां न्यदधात् तथैवांग्लादिषु । स इह स्थितो भारतस्वातन्त्र्यनिमित्तेन क्रान्तिकारिभिरुग्रवादिभिरनुग्र-वादिभिश्च क्रियमाणानि कार्याणि धैर्येण ददर्श । सः सर्वमपि सम्यगधीत्य सत्याग्रहान्दोलनं कां सीमां यावत् प्रयोगार्हमित्यत्र प्रथमं प्रयत्नवान् बभूव । प्रारब्धञ्चान्दोलनं काभवधि-मभिव्याप्य सफलतां गन्तुमर्हेदित्येतच्च ज्ञातुं सोऽचीकमत । एतेन तदीयाया द्रष्टेः परीक्षणकर्तृत्वं दूरदर्शित्वञ्चावगम्येते । न तदीया दृष्टिर्युद्धाभिलाषिण्यासीत् । रौलट एक्टं विरोद्धुं महात्मना गान्धिना सत्याग्रहान्दोलनारम्भविचारो विहितः परं बिहार प्रदेशान्तर्गतचम्पारनमण्डले सः स्वसत्याग्रहं लघु-रूपेण प्रवर्तयितुमवसरमविन्दत । स तत् स्थानं सत्याग्रहास्त्र-प्रयोगाय वरमवागमत् । चम्पारनमण्डले कृषीवलेषु गौराङ्गा-श्चिरादत्याचारं कुर्वन्तो व्यालोक्यन्त । कृते समीचीनतया परीक्षणे निरीक्षणे च स यथार्थामवस्थामज्ञासीत् । स तां दृशां ज्ञात्वा भृशमदूयत् । तां शोचनीयां स्थितिं निरस्तुं स निश्चि-काय । यदा सः सत्यं ज्ञातुं प्रयतमान आसीत् तदा आयुक्तः (*Commisioner*) आदेशपत्रं चम्पारनं हातुं प्राप्नोत् । परं म० गान्धी न तत्र स्वध्यानं निदधौ । सः स्वकार्ये यथापूर्वं समलगत् । अथ बिहारोपराज्यपालस्तं व्यतिकरं स्वहस्तायत्तं विधाय महात्मानं गान्धिनम्प्रति परीक्षणाधिकारं प्रदत्तवान् । तत्परी-क्षणानन्तरं जाते तन्निर्णये विहारप्रदेशव्यवस्थापिका कृषि-विधेयकं पारितवती । तद्विधेयकं कर्षकाणां सर्वाण्यपि कष्टानि निरास्थत् । महात्मा गान्धी विजयी बभूव । भारते तस्यायं प्रथमो विजय आसीत । महात्मा गान्धी भारते सत्याग्रहः सफलो भवितुं शक्य इत्येतन्निश्चयं चकार । स भारतीय कष्टनिरसने स्वकीयां मतिं निबबन्ध । १९१८ तमेशवीयाब्दे स 'खेड़ा' ख्ये स्थाने करानप्रदानान्दोलनं (*No Tax Compaign*) प्रवर्तयामास

तदान्दोलनप्रवर्तने कारणमिद दर्शित मभूत्– वृष्टेरभावात् सस्यस्य दशा जातास्ति चिन्त्या। न वर्ततेऽतः, कर्षको हि अर्थहीनत्वात् करं दातुं क्षमः'। गान्ध्यान्दोलनं समचालयत्। शासनकृषीबलयो र्मध्ये सन्धानसभवत्। म० गान्धीहापि सफलो बभूव। कतिपयदिवसानन्तरं श्रमजोदिनोऽहमदाबादे वेतनवर्धनाय महात्मानं गान्धिनं प्रार्थयाञ्चक्रुः। सः तत्प्रार्थनां स्वीकृत्य तेषां कृते साहाय्यं दातुं प्रत्याशुश्राव। सोऽहमदाबादस्योधोगाधीशान् श्रमिकवेतनवृद्ध्यर्थं न्यवेदयत्। परं ते महात्मनो गान्धिनो निवेदनं नाद्रियन्ते स्म। ततो म० गान्धी आमरणमनशन मारभत। उपवासाच्चतुर्थेऽहनि ते धनपनयो महात्मन इष्टं स्वीचक्रुः। शीघ्रमेव ते श्रमजीविनां वेतन मवर्धयन्।

महात्मा गान्धी भारतीयायां राजनीत्यां सहयोगी भवन् समागत इत्येतदुपरिलिखितव्यतिकराः प्रकटीकुर्वन्ति। सः ३१-१२-१९१९ दिनाङ्कस्य 'यङ्ग इण्डियां' (*Young India*) स्वविचाराननेन प्रकारेण व्यानक्–मॉण्ट फोर्ड योजनया कृतया च तया सहोद्घोषणया ब्रिटिशशासमस्य भारतीयेषु न्यायचिकीर्षुत्व मभिव्यज्यते। भारतीया जनता तत्र स्वसन्देहापनयेत्। अस्मत्कर्त्तव्यं नालोचन मपितु आंग्लान् सफलीकर्तुं यतेमहि"। सत्यपि उग्रवादिनां विरोधे, राष्ट्रियमहासभा अमृतसराधिवेशने मॉण्टफोर्डयोजना मन्वेतुं निश्चिकाय; विरोधकर्तृषु प्रमुखावास्तां श्रीदेशबन्धुश्चित्तरञ्जनदासो विपिनचन्द्रपालश्च। श्रीदेशबन्धु मॉण्ट फोर्ड योजनामधिकृत्म यदपि प्रस्तावितं विदधौ तत्र महात्मनो गान्धिनः प्रयत्नैरेने कानिचन संशोधनानि कृतान्यभूवन्। तेन स्पष्टोभवति महात्मगान्धिन; शासनसहयोगिबुभूषुत्वम्।

ततश्च गच्छतानेहसा भारतधरित्र्या मीदृश्यः परिस्थितयोऽजनिषत; ईदृश्यश्च घटनाः काश्चन अघटन्त, यासां प्रभावादभिभवाच्च म० गान्धी, यो भारतस्य राजनीत्या मांग्लशासनस्य सहयोगिबुभूषया पदार्पणं चकार, असहयोगी बभूव।

सितम्बर मासे, १९२० तमेशवीयसम्बत्सरे, कलिका-

तायां, सञ्जाते राष्ट्रियमहासभाधिवेशने म० गान्धी शासनेऽसहयोगी भवन् मॉण्ट फोर्डयोजनान्तर्गतनिर्मितव्यवस्थापिका-सभावहिष्कारकप्रस्तावं न्यदधात्। श्रीचित्तरञ्जनदासविपिनचन्द्रपालौ तु तस्या योजनाया निरसनाय पुरैव सन्नद्धावास्ताम्। एतावन्ये च तत्सहयोगिनो महात्मनो गान्धिनः प्रस्तावं व्यरौत्सुः। महात्मा गान्ध्यासीद् विनम्रो राजनीतिविदांवरः। स ब्रिटिशशासने ब्रिटिशजनतायाञ्चागाधं विश्वासंन्यदधात्; स यदा ब्रिटिशशासनसत्तां यमूदूतत्वेन समबोधयत् यदा निश्चप्रचतया तत्कथनं ब्रिटिशशास्तृषु तदीयेषु च कार्येष्वेकदुःखदटिप्पणीत्वेनावागन्तव्यम्।

महात्मनो गान्धिनोऽसहयोगित्वे कारणा नीमानि—

(१) रौलटाधिनियमस्य पारितत्वान्मण्डलाधीशा (*Distrvedmagistrates*) अधिकारविशेषभाजो बभूवुः। जनतायाः दमनं निग्रहणञ्च तस्याधिनियमस्योद्देश्य मासीत्। जनता तत्र स्वकीयं घोरं विरोधं दर्शयामास। म० गान्धी तमधिनियमं विन्धानो सत्याग्रहान्दोलन विषये भारतशासन मचेतयत्। उदारवादिनोऽप्यधिनियमं विरुरुधिरे तस्यहि जनतास्वातन्त्र्यापहारित्वात्। ६-४-१९१९ दिनाङ्के समस्तोऽपि देशस्तं विरोद्धुं सर्व मपि दैनिक कार्यं तत्याज। हिन्दुमुसलमानाः मिलित्वा शासनम्प्रति स्वरोषमभिव्याञ्जिषुः। शासनं जनतायां कठोरा भूत्वा व्यवाहार्षीत्। देहल्यां जनताऽऽरक्षि (*Police*) मध्ये कलहः सम्प्रवृत्तः। आरक्षिणो गोलिकाश्चाचालयन्। अनेके जना हताहता अभूवन्। घटनयानया जनताया मन्युरिन्धाञ्चक्रे। महात्मा गान्धी तत्राह्वगतः कृतः। यदा सः ८-४ दिनाङ्के देहलीं प्रतस्थे तदाध्वन्येव पलवलस्टेशने वन्दीकृतः। पुलिसन्निरीक्षणे चाज्ञातं स्थानम्प्रातेसः प्राहीयत। उदन्तोऽयं शीघ्रमेव सर्वस्मिन्नपि देशे प्रसृतोऽभवत्। जनता शासनेऽकुप्यत्; शासनञ्च जनतायां दमनचक्रं चालयमास। पञ्चनदेषु समजायन्तोपप्लवाः। परं शासन माशु तान् निजग्राह। तत्र तदा क्रान्तिकृता मान्दोलनन्तु वर्तते स्म एव न; जनता नेतारश्च समप्रधानेषु वैधानिकेषूपायेषु विशश्वसुः।

तदानीं पञ्चनप्रदेश-राज्यपालः सर माइकल ओ डायरो राजनीतिकान्दोलनानां महान् प्रबलः परिपन्थी आसीत्। सः सर्वविधान्यप्यादोलनानि; कामं तानि क्रान्तिकारीणि स्युः किं वा शान्तिमयानि, पेष्टु दृढतया निरचैषीत्। स राष्ट्रियमहासभाया नेतृणां प्रवेशं पञ्चनदप्रदेशान्न्यवारयत्। तदादेशेन प्रदेशस्य द्वौ प्रमुखौ कार्यकर्तारौ डॉ० सत्यपालेन सह अमृतसरमण्डलाधीशेन किमप्यविदितं स्थानं नीतौ बभूवतुः। शासनस्य कार्यमेतद् भारते, पञ्चनदेषु तु विशेषतः शान्तं वातावरणं विनाशयामास। तत्र सर्वत्रोत्तेजनामयी जागृति र्दृष्टा बभूव। नगरेषु सर्वा अपि विपणयो विरोधं दर्शयितु संवृता अभूवन्। नागरा राजपथेषु प्रदर्शनं चक्रुः। तन्नेतारो मोक्तव्या इत्येतदर्थं रोषमयं प्रदर्शनं पथि पथि विदधुः। यदा सः शांतिमयो जनसम्मर्दो मण्डलाधीशस्य भवनो न्मुखो भूत्वा गतिमानासीत् तदा आरक्षिणो निःशस्त्रेषु गोलिकानां प्रपात मसकृद्कार्षुः। बहवो हता बहवश्चाहता अजायन्त। अमृतसरे नागराः शासनस्य तस्मादन्यायादमानुषिक व्यवहाराच्च सञ्जाता उद्विग्नाः संधुक्षिताश्च। ते शवानादाय प्रचेलुः मार्गे योऽप्यांग्लः प्राप्यत; तैः सोऽहन्यत; सार्वजनिकानि च कानिचन भवनान्यदह्यन्त। आंग्लशासनस्य स्तम्भभूता जनतायाः कार्यमिदं न सोढुं शेकुः। तेषु निर्यातनोदतिष्टत्। सर्वमपि नगरं सेनाधिकारे समर्पित मभूत्। आसीज् जनरल ओ डायरः सर्वाधिकारभाक्। अमृतसरस्य जनता विशालं प्रदर्शन मायूयुजत् सर्वत्र सर्वाण्यपि कार्याणि निरस्तान्यक्रियन्त। सैनिकपदाधिकारिभिः सार्वजनिकसभासु प्रतिबन्ध आरोपितः। परं प्रतिबन्ध घोषणाया अपर्याप्तत्वान्न सर्वे जना विदितवेदितव्या भवितु मशकन्। १३-४ दिनाङ्के 'जलियाँ वाला बाग' इत्येतदाख्ये स्थाने सार्वजनिक सभाया आयोजनं कृतम्। सहस्रशो जनास्तत्र गताः। न सैनिकास्तान् रोद्धु मल्पीयांसमपि प्रयत्नं विदधुः। परमाधिकसंख्यायां यदा जना स्तत्र संहृता अजायन्त तदा जनरल डायरः शतं भारतीयान् ब्रिटिशसैनिकांश्च सशस्त्रान् प्रगृह्य तत्राजगाम। स घटनास्थले सभाभङ्गार्थं

मादेश मदत्त्वैव सैनिकान् गोलिकाश्चालयितु मानापयामास। यत्राधिकसंख्यायां जना आसंस्तद्दिश्येव गोलिकाः प्रायुज्यन्त। आकाशभूतरससोममितगोलिकाः प्राक्षिप्यन्त। तदैव सैनिका गोलिकाचालनाद् विरेमु यदा तेषां गोलिकातूणीरा रिक्ता अजायन्त। सहस्रशोजनाः पञ्चत्वं गमिताः। भयभीता जनाः सपदि छिन्नभिन्ना बभूवुः। डायरोऽनिशं मिनटदशकं यावद् गोलिकानां वृष्टि जनेषु विदधौ। स हण्टरसमितेः पुरोऽचकथत् स तु सैनिकशकटी (*Armoured car*) मादाय तत्र ययौ परं द्वारस्य लघीयस्कत्वात् तत्र तस्याः प्रवेशो न भवितुं शशाक। पञ्चनदाधिकारिण इयत्सर्वमपि विधाय न तुतुषुः। अतस्तममानुषिकं नृशंस मत्याचारं कृत्वा पञ्चसु मण्डलेषु (*Districts*) सैनिकशासनं घोषित मभूत्। तच्च कठोरतया कार्यान्विततां नीतमभवत्। जनरल डायरस्य शासने केचन एतादृशा दण्डा व्यालोक्यन्त ये स्वप्नेऽपि न कस्यापि अकल्प्यन्त। अमृतसरस्य विद्युत्सम्बन्ध उदच्छिद्यत; जलप्रदायकानि यन्त्राणि रुद्धगतिकान्यक्रियन्त। यस्यां प्रतोल्यां कु० शेर वुड (*Mirss-herwood*) आक्रान्ताभूत् तत्रोदरेण सर्पणाय जनाः आदिश्यन्त। सर्वेषामपि पुरोबेत्रप्रहारस्तु साधारण मेव कार्य मासीत्। रेलवे स्टेशनानि तृतीयश्रेणीय टिकट विक्रयणाय प्रत्याषिद्ध्यन्त। विधालय महाविद्यालयानां छात्राः सैनिकाधिकारिणां पुरः उपस्थिति प्रदातु महनि चतुः कृत्वो निरदिश्यन्त। कर्मकाराणां समुदाये गोलिका प्रहारोऽक्रियत। वायुयानेभ्यो यन्त्रशतघ्न्यो (मशीनगन) ऽचाल्यन्त। यदैव कश्चिद्-भारतीय आंग्लाधिकारिणि मिलेत् सोऽभिवादयेत् तमित्यादेशः प्रसारितोऽभवत्। यदि कश्चित् कदाचित् यानाधिरूढस्तदांग्लाधिकारिणः पुरो यानादवतरेत्। आतपत्रधारी स्वकीयमातपत्रं तस्य पुरतः संवृण्वीत। यदि विद्यालयस्य महाविद्यालयस्य च छात्रा अधिकारिणं न प्रणेमु स्तदा तेषां कोमलगात्रेषु वेत्रप्रहारः कृतोऽभूत्।

पञ्चालप्रदेशस्य एते कठोरतर कठोरतमा अत्याचारा अन्ये च निर्दया अत्याचारा भारतस्य प्रदेशान्तराण्यज्ञासिषु-

स्तदा पाञ्चालशासनस्य कार्याणि घोरतापूर्वक मनिन्द्यन्त। श्रीकवीन्द्ररवीन्द्रनाथः शासनस्य बर्बरतापूर्णां नृशंसतामयीं नीतिं व्यवहारञ्च राक्षसीयं तस्य इत्युक्त्वा निन्दत् 'सर' (*Knight hood*) इत्येतमुपाधिं परावर्तयामास। समग्रस्यापि देशस्य सर्वेऽपि भागाः पञ्चनदेषु संवृत्तानां घटनानां पर्यवेक्षणायसत्यता-ज्ञानाय-स्वकीयं विचारं प्रकाशयामासुः। पर्याप्तं समयन्तु शासनमुपेक्षाञ्चक्रे; परं यदा देशस्य सर्वस्य महान् भारवाननुरोध आपपात तदा लॉर्डहण्टरस्याध्यक्षत्वे एकस्याः समितेरायोजनं कृतमभूत्। तत्र लॉर्डहण्टरो द्वौ भारतीयौ (सरचिमनलाल सितलवाडः पण्डितो जगतनारायणश्च) आंग्लाश्च त्रयः सदस्याः आसन्।

हण्टर समित्याः प्रसंवेदः शासनेन प्रकाशीकृतः। तत्र पञ्चनदीया नामेव दोषाः प्रसभं प्रदर्शिता अभूवन्। सा समिति 'जेनरलस्य डायरस्य कार्यन्नूचितमासीत् परं यानि सः साधनानि प्रायुङ्क्त तान्यनुचितान्यासन्नेषा तत्र तस्य च्युतिरेवासीत्। सः परिस्थितेर्यथायथज्ञानमनवाप्य निर्णयमग्रहीदि' त्येतत् स्वीकुर्वाणा अच्छेद्यस्पष्टसाक्षिताभिः कर्मचारिभिर्जनतायामत्याचारा विहिता इत्येतत् प्रमाणितं कृतवती।

राष्ट्रियमहासभाप्यन्वीक्षाञ्चकार। तस्याः समितिर्महात्मनो गान्धिनोऽध्यक्षतायां कार्यमनुतस्थौ। समितेः सदस्याः श्रीचित्तरञ्जनदासः, पं०मोतीलाल नेहरुः, अब्बास तैयबः, डॉ० जयकरश्चासन्। समितेः सदस्याः प्रायेण मासत्रयं यावत् यथार्थतां वेतुमध्ययनं चक्रुः। भारतीयाः सदस्याः स्वकीये संवेदे पञ्चनद कर्मचार्यधिकारिणां कार्याणि भृशमनिन्दिषुः। तदन्वीक्षाधारे शासनं जनरल 'डायर' भृतेश्च्युतञ्चकार परं न तं (डायरम्) राज्यपालपदात् पृथक् ह्यकार्षीच्छासनम्। भारतमन्त्री माण्टेग्युर्जनरल डायरस्य कार्याणि निनिन्द परं राज्यपालस्य महाराज्यपालस्य च कार्याणि श्लाघाञ्चक्रे। लॉर्ड फिनले (*Finley*) लॉर्ड सभायां (*House of lords*) जनरलस्य डायरस्यापराधान् क्षन्तुं प्रस्तावं निदधौ। तस्मिन् प्रस्तावे तत्सभायां जातो विवादो भारतीयान् भृशमदुनोत्।

ते भारतीया आंग्लेभ्य उचितस्य न्यायस्याशा अतितरां मुधेति विशश्वसुः। ताः सर्वा वार्ताः स्व प्रभावं महात्मनि गान्धिनि नितरां निपातयामासुः। यच्छासनमेतावन्तं प्रमादं कर्तुं शक्नोति तत्तु कस्याञ्चन दशायामुचितं युक्तञ्च भवितुमर्हतीत्येषा भावना तन्मस्तिष्के जजागार।

महात्मानं गान्धिनमसहयोगिनं कर्तुं खिलाफतपरा समस्यापि कारणमसिद्ध्यत्। इंगलेण्डशासनं न तानि वचांसि जुगोप यानि तद् टर्की तत्सुल्तानञ्चाधिकृत्य प्रोवाच। प्रथमे महासमरे टर्कीदेश आंग्लविरोधी भूत्वा जर्मनदेशमनुजगाम। भारतस्य मुसलमानानां हृदयं, युद्धे सति विरते, आंग्लाष्टर्क्यां वैरं निर्यातयितुमुद्यता भविष्यन्तीति शङ्क तेस्म। इंङ्गलेण्डस्य प्रधानमन्त्री भारतीयमुसलमानानां भयेऽभिज्ञो बभूव। स झटिति तान् प्रीणयितुं 'जन्यावसाने, इङ्गलेण्डष्टर्की-विरोधे निर्यातनां न स्वीकरिष्यती'त्येता मुद्घोषणां कुर्वन्, 'न टर्कीसाम्राज्यमुच्छिन्नतामुपेयादिति विचारं प्रादीदृशत्। तस्य तदाश्वासनमधिगम्य भारतीया मुसलमाना यथासामर्थ्यमिङ्गलेण्डम्प्रति युद्धकार्येषु पूर्णां सहायतां प्रददुः। जलियांवाल बाग-हत्याकाण्डानन्तरं सीवर्ससन्धिरजायत तेन टर्की समुदच्छिद्यत। तत्र (टर्कीदेशे) उच्चायोगी (*High Commissioner*) न्ययुज्यत। आसीद् वस्तुतस्तु सः शास्ता। सुल्तान स्तु बन्दीवासीत्। सन्धिमिमं यदा भारतीया अज्ञासिषुस्तदा तेषु आंग्लान् प्रति रोष उत्कट उत्पेदे। आंग्लानां नीतिं विरुन्धानास्ते खिलाफतान्दोलनं प्रवर्तयामासुः। टर्की देशो गच्छेत् स्वकीयां विगतां मान्यतामिति तेनान्दोलनेन ते ययाचिरे। खिलाफताभिधाना संस्था च स्वकीयमविच्छिन्नमस्तित्वं लभेत इति च ते स्वमन्तव्यं प्रकटीचक्रुः। १९-१-१९२० तमेदिनाङ्के डॉ० अन्सार्य्या नेतृत्वे शिष्टमण्डलं भारतस्य महाराज्यपाले चेम्सफोर्डे मिमेल। शिष्टमण्डलस्य तस्यायोजनं महात्मनो गान्धिन आदेशेन विहितम्। तदादेशेनैव शिष्टमण्डलमेकं मौ० मुहम्मद अली महोदयस्य नेतृत्वे इङ्गलेण्डमियाय। यद्यपि शिष्टमण्डलं तद् भारतमन्त्रिणो माण्टेग्युमहाशयस्य

समर्थनं प्राप परं तदुद्देश्यं साफल्यं न ययौ। शिष्टमण्डलं निराशं भूत्वा भारतं निववृते। मौ० मुहम्मद अली स्वकीयैः कतिपयैर्मित्रैः सह राष्ट्रियमहासभायाममेलीत्। महात्मा गान्धी खिलाफतान्दोलनस्य समर्थनं चकार; स मुसलमानकृत-विरोधाल्लाभासादनाभिप्रायेण कदाचिदसहयोगान्दोलनं कर्तुं निरचैषीत्।

इह महात्मनो गान्धिनस्तस्यं वक्तव्यस्याप्युल्लेख उचित प्रतीयते यदसौ श्रीअमफोल्डस्य न्यायाधिकरणे १९२२ तमेश-वीयाब्दे चकार तद् वक्तव्यं कस्मात् कारणान्महात्मा गाधी असहयोगी बभूवेत्यत्र प्रकाशमस्यति।

महात्मा गान्धी अचकथत्– स आदौ रौलट ऐक्टादाघात माश्नुतः सोऽधिनियमो जनतायाः स्वतन्त्रतां हर्तुं स्पष्टोऽभूत्। मामकीनोऽन्तरात्मा तीव्रेणान्दोलनेन तमधिनियमं विरोद्धुं नुनोदमाम्। ततश्च पञ्चनदेषु जातानत्याचारान् अपश्यम्। तेऽत्याचारा जलियाँवालाबागहत्याकाण्डात् प्रारब्धा आजा-यन्त। ते ह्यत्याचारा उदरसर्पणावेत्रप्रहारादिनानाकठोर-नियन्त्रणकारित्वाद् दुःखदा अपमानजनकाश्चासन्। टर्कीस्वा-धीनताविषये, ब्रिटिशप्रधानमन्त्रिप्रदत्तानि इस्लामाभिमत-धार्मिकस्थानान्युद्दिश्य, आश्वासनानि कदाचित् कदापि पूर्णानि न स्युरिति चाहमन्वभूवम्। परं सुहृदां सत्यामपि भविष्यद्-वाण्यां, भयावहायाञ्च संज्ञापनायां, १९१९ तमाब्दे अमृतसर राष्ट्रीयमहासभायामहं शासनस्य सहयोगी भूत्वा मॉण्टफोर्ड योजना कार्यान्विता कर्तुमयुध्ये; ब्रिटिशप्रधानमन्त्री भारतीय मुसलमानानां कृते प्रतिज्ञामाशु पूरयिष्यतीत्येतामाशां मनसि दधानः पञ्चनदप्रदेशक्षतानि शुष्कतां गतानि स्युर्योजनाश्चा-सन्तोषाधायकत्वेऽपि भारतस्य जीवने आशासञ्चारः स्यादि-त्येतद् व्यभावयम्। परं हन्त, नाशा सा पूर्तिं गता। पञ्चनदे-षु शासनकृतान्यागांसि यथा तथा मन्दीकृतानि, हन्त, बहव-स्त्वपराधकारिणो दण्डिता एव न कृताः; ते तु यथापूर्वं स्व-स्वपदे आसीना एव प्राप्यन्त। केचनं तु भारतीयकोषात् जीवन-निर्वाहार्थं भृतिं (पेंशनम्) मवापुः। केचन पारितोषिकै रादृता

अक्रियन्त । शासनस्य तानि सकलानि कर्याणि आर्थिकं शोषणं दासत्वञ्च कर्तुं साधनभूतान्यासन्नित्यहं सुदृढतापूर्वकं मनसि निदधे स्म ।

महात्मागान्धी सम्प्रति असहयोगित्वेन दृष्टोऽभूत् । स तं कालमसहयोगार्थमुचिततरमवागमत् । यस्यानेहसो हिन्दु-मुसलमानसहयोगप्रदायतत्वात् अनुकूलपरिवर्तनोत्पादनक्षम-त्वाच्च स सम्यक् सर्वं विमृश्यासहयोगयज्ञं प्रारभत । स राष्ट्रियमहासभाया नीतिञ्च परिवर्तयितुं प्रयासमारभत । अहिंसात्मकमान्दोलनं देशव्यापि च विधातुमुपचक्रमे । भार-तीयराजनीतिकाकाशे विचरतः श्यामान् मेघान् पूर्णतया सूक्ष्म-तया च विचारयितुं राष्ट्रियमहासभायाश्च नवं कार्यक्रमं निर्धारयितुं सितम्बरे मासे, विंशत्यधिकैकोनविंशतिशततमेशवी-याब्दे, कलिकातायां पञ्चालानां महीयसो नेतुः पञ्चनदकेस-रिणः श्रीलालालाजपतरायस्य साभापत्ये विशेषाधिवेशनमा-योजितमभवत् । एतस्मिन्नधिवेशने महात्मा गान्धी स्वयमेव। सहयोगान्दोलननिष्ठं प्रस्तावमुपस्थापयामास । श्रीपण्डित-मदनमोहनमालवीयश्चित्तरञ्जनदासः श्रीमती एनीबेसेण्ट महाशया, तिलकानुयायिनां समवायश्चय खापर्डेनेतृत्वभृत्, श्रीतिलकस्य १-८-१९२० तमे दिनाङ्के ब्रह्मणि लीनत्वात् महात्मनो गान्धिनः प्रस्तावं निशिततया व्यरौत्सुः । केषाञ्चन सतां मतेन लोकमान्यस्तिलकोऽप्यसहयोगान्दोलनमपोषयिष्यद् यदि स जीवितोऽभविष्यत् । महात्मा गान्धी स्वप्रस्तावं निद-र्शनः स्मरणीयममरं भाषणं कृतवान् । तत्र स आचचक्षे :—

"आंग्लशासनं वर्तते कीनाशस्य क्रूरो दूतः । तत्र सह-योगो न सम्भवः कदापि, विना स्वराज्यप्राप्ति पञ्चनदेषु सञ्जातानां क्रूरतानां खिलाफतमुद्दिश्य कृतानां च्युतीनां पुन-रावर्तनस्य निरोधनं न सम्भवम्" ।

एतेनैवोद्दिश्येन सः शासनविरोधिप्रगतिशीलाहिंसात्मिका मसहयोगनीतिं स्वीकर्तुं राष्ट्रियमहासभां प्रार्थयाञ्चक्रे । स इदमप्यचकथत्—

"आंग्लरक्तहस्तात् कस्या अपि उपदायाः स्वीकरणात्

प्राक् अनुशयः करणीयो भवेत्"।

मॉण्टफोर्डयोजनामधिकृत्य सोऽगादीत्—

'स्वराज्यं व्यवस्थापिकसभातः प्राप्तव्यमस्ति वा तां विहाय ? आंग्लशासनं स्वप्रमादेषु स्वस्खलितिषु च नो दुःखितं न चानुशय वदित्येतद् ज्ञात्वापि कथं पुनस्तत्र विश्वासं करवाम। व्यस्थापिका सभाः अस्मत्स्वराज्यमार्गं मार्क्ष्यन्ति किम्"?

सः स्वराज्यं परिभाषमाणो बभाषे—

"एतेनेदृशो राष्ट्रस्य जायते बोधो यत्र स्वतन्त्रं वा यांग्लराष्ट्रमण्डले समानताधारे वयमस्तित्वं निधातुं प्रभवेम"।

कलिकातायां राष्ट्रियमहासभाया विशेषाधिवेषने महात्मगान्धिनिहितः प्रस्ताव आसीन्महत्त्वभाक्। तद्द्वारेण राष्ट्रियमहासभाः स्वाराज्यं लब्धुं साधनान्युपायाश्च परिवृत्तिनीता अभूवन्। अस्ति सः प्रस्तावो दीर्घकाय इह तदीयः सारः प्रस्तूयते—

"खिलाफतपरकप्रश्ने भारतशासनस्य साम्राज्यस्य चासफलत्वाद् भारतीयमुसलमानान् प्रति स्वकर्त्तव्यपालने च्युतत्वात् प्रदत्तस्य चाश्वासनस्य, जानतैव प्रधानमन्त्रिणा भग्नीकृतत्वात्, एकैकस्य मुसलमानस्य कर्त्तव्यं भवति यद् धर्मे निपतिताया आपदस्त्राणं पातुं क्रियमाणे प्रयत्ने स्वमुसलमानबन्धूनां कृते समुचितया रीत्या साहाय्यं विदधीत। अथ च अप्रेलमासे, १९१९ तमेऽब्दे निपातितां दुर्घटनामधिकृत्योपर्युक्तं शासनं पञ्चनदेषु निरपराधां जनतां पातुं किञ्च तानपराधिनो दण्डयितुं, ये जनतायाममानुषिकमशिष्टञ्च कठोरं व्यवहारं विधाय सन्त्यपराद्धा, भृशमुपेक्षिष्ट वा सफलतां न प्राप; तत् सरमाइकलओडायरं निर्दोषमघोषयद् यदा बहूनामपराधानामुत्तरदायित्वं स एव न्यधित; शासनं स्वशासित जनतायाः क्लेशान् प्रति स्वयमेव निर्दयामुपेक्षां प्रादीदृशत् किञ्च कॉमन्ससभातस्ततोऽप्यधिकाया लॉर्ड सभाया वाद-विवादाभ्यां दुःखदमिदं सत्यं स्पष्टं भवति यच्छासनं साम्राज्यञ्च भारतीयजनतायां न निदधति स्वल्पामपि सहानुभूतिं; तत्तु वस्तुतस्तस्य नियमितस्यातङ्कवादस्य नृशंसत्वस्य च परिपोषकं वर्तते

यस्य हि (अत्याचारस्य) पञ्चनदेषु प्रदर्शनं तेनाकारि। अतः महासभेयं विश्वसिति यदेतयोरुभयोरन्याययोः समाधानस्याभावे भारते शान्तिमयस्य वातावरणस्य स्थापना न भवितुमर्हति; राष्ट्रियसम्मानस्य रक्षणार्थं भाविनि चेदृशामत्याचाराणां पुनरावृत्तेर्निरोधनार्थमेकमात्र उपायोऽस्ति स्वराज्यस्य स्थापना।

अथ च राष्ट्रियमहासभाया एतस्यां मत्यामेतद् व्यतिरिच्य, भारतीयजनता न मार्गान्तरमीक्षतेऽतः सा प्रगतिशीलाहिंसात्मकान्दोलनस्य नीतिं पोषयितुं, ताञ्च तं समयं नितरां पालयितुं प्रबाध्यते यावत् न्यायसमाधातृस्वराज्यस्य न संस्थापना जायते।

जनमतस्य निर्माणे प्रतिनिधित्वावलम्बन-संलग्नानामेव कर्त्तव्यं वर्तते यत् ते तदारम्भमनुष्ठातुमग्रेसराः स्युः। इदन्तु सर्वविदितं यद् जनेभ्य उपाधीन् प्रदाय, विद्यालय-न्यायालय-व्यवस्थापिकसभानां संश्रयं विधाय शासनं स्वशक्तिं संग्रह्नाति।

आन्दोलनस्य वर्तमानस्थित्यां, दृष्टिं निधाय लक्ष्ये वाञ्छनीयमिदमेव यन्न्यूनतमानां प्रत्यवायानामाघातः सह्येत; न्यूनतमानि च बलिदानानि क्रियेरन्। तस्मात् कारणाद् राष्ट्रियमहासभाया जनतार्थमियं सम्मतिः—

(१) उपाधयोऽवैतनिकानि च पदानि हेयानि; स्थानीयसंस्थानाञ्च राजकीयं सदस्यता परित्याज्या।

(२) राजकीयसभासु अन्येषु वा राजकीयेषु अर्धराजकीयोत्सवेषु येषामायोजनं सम्मानप्रयोजनेन राजकीयाधिकारिभिरनुष्ठितं, न भागो ग्राह्यः।

(३) वर्तमानेभ्यो विद्यालयेभ्यश्च छात्राः शनैः शनैः दूरीकरणीयाः; विभिन्नेषु प्रदेशेषु राष्ट्रीयविद्यालय-महाविद्यालयानां चस्थापना कर्त्तव्या।

(४) प्राडविवाका न्यायार्थिनश्च आंग्लशासननियतन्यायाधिकरणानि बहिष्कुर्वीरन्; पारस्परिकविवाद कलह निर्णयनाय जनता-पञ्चायतनानि स्थापनीयानि।

(५) सैनिकाः कर्मचारिणः श्रमिकाश्च भृतौ प्रतिषेध्येरन्।

(६) नवयोजनान्तर्गत निर्मितपरिषदां (कौंसिलानाम्) कृतेऽभ्यर्थित्वेन प्रदत्तं स्वकीयं नाम परावर्तनीयम्। चेन्महासभायाः परामर्शमवज्ञाय केनापि निर्वाचने प्रयत्यते तदा न मतदाता तस्मै स्वमतं प्रयच्छेत्।

(७) वैदेशिकानि वस्तूनि बहिष्करणीयानि।

असहयोगान्दोलनस्य योजना अनुशासनम् आत्मबलिदानञ्चोद्दिश्य प्रगृहीतास्ति; तद्विधान् गुणान् विना न कोऽपि देशो वस्तुतस्तून्नतिं कर्तुं प्रभवति। आन्दोलनारम्भे एकैकः पुरुषः स्त्री चैकैकानुशासनात्मबलिदानार्थमवसर मधिगच्छेदतो राष्ट्रिया महासभा परामर्शं प्रददाति यत् कार्पासवस्त्रसम्बन्धे स्वदेशिसिद्धान्तो व्यापकतया परिगृह्येत; स्वदेशीयसम्पद्राशिणा तद्व्यवस्थया च गतिं प्रगतिं च दधत उद्योगागारा राष्ट्रापेक्षितानिवासांसि तन्तूंश्च न सृजन्ति; न च चिरं तथाकर्तुं ते समर्था अपि स्युः अतः राष्ट्रियमहासभाया मतेन गृहे गृहे तन्तु निर्माणप्रथा पुनः प्रचलेत; ये च तन्तुवाया लक्षशः प्रोत्साहनमनवाप्य स्वकीयं पुरातनं सम्मानपूर्णं व्यवसायं त्यक्तवन्त पुनः हस्तनिर्मित वस्त्रवयनस्य प्रेरणां लभेरन्नेतदर्थं माशु विशाला व्यापिका च वस्त्रवयनप्रथा प्रचलिता भवेत्"

महात्मनो गान्धिन उपर्युक्तस्य प्रस्तावस्य पक्षे एकसहस्राष्टशतषडशीतिसंख्यानि मतानि प्रदत्तान्यभूवन् विपक्षे च तस्य, चतुरशीत्यधिकाष्टशत मतानि दत्तान्यजायन्त। अतस्तत्प्रस्तावो भूयोभि र्मतैः पारितोऽभवत्। स्वीकृतश्च सञ्जातः। खिलाफतान्दोलनस्य समर्थकत्वात् प्रस्तावोऽयं पारितोऽभूदिति विरोधिन स्तदावादिषुः।

महात्मा गान्धी सम्पूर्णेऽपि देशे भ्रमणं कृत्वा स्वसिद्धान्तान् भूयस्कतया प्रचारयाम्बभूव। तेन तत्समर्थकानां संख्या भृशं सम्ववृधे। स निराशायां हतोत्साहायां दारिद्रयव्यथितायां जनतायां नवां स्फूर्तिं वलीयांस मुत्साह मदमनीयञ्च सत्साहसं

समचीवरत्। तत्कृतै र्घोरैः पुरुषार्थैः सर्वत्रापि राष्ट्रे संघर्षस्य शक्तिमती प्रेरणा प्रास्फुटत्। राष्ट्रिय महासभायाः नियमित मधिवेशनं दिसम्बरे, १६२० तमेशवीयाब्दे नागपुरे समजायत। तत्र अश्विनीकुमार-वसु-भूत-युग-सोमिताः प्रतिनिधयो हि भाग मग्रहिषुः। अस्मिन् सम्मेलने कलिकाताधिवेशने स्वीकृतो महात्मगान्धिनः प्रस्तावः पुनः प्रस्तुतीकृतो विचारार्थम्; सञ्जातश्च सः पूर्णबहुमतेनाङ्गीकृतः। इत्थं तदधिवेशनं पुनस्तत्कार्यक्रममपोषयत्। तदधिवेशनं महात्मनो गान्धिनो महत्याः सफलतायाः प्रतीकत्वाय अकल्पत। श्री सी० आर० दासोऽपि महात्मनि गान्धिनि मिमेल। सः तस्य कार्यक्रमं नीतिञ्च पर्यपुपुषत्। लाला लाजपतरायश्च स्वविरोधं न्यवर्तयत्। सोऽपि प्रस्तावपोषकोऽजायत। तदेवं वङ्गपञ्चनदप्रदेशौ म० गान्धिनः कार्यक्रमं समर्थितवन्तौ। भावोऽयं समस्तस्यापि देशस्य भूयांसो जनास्तत्प्रस्तावपक्षेऽजायन्त।

कतिपये उदारवादिनो नेतारो विपिनचन्द्रपाल-एनीबेसेण्टप्रभृतयो राष्ट्रियमहासभा महासिषुः। राष्ट्रियमहासभातो भिन्नैका नवा नेशनल लिबरल फेडरेशन (*National Libiral Federation*) नाम्नी संस्था तैः समस्थाप्यत।

नागपुराधिवेशने कलिकाताधिवेशने च पारिततां प्रापितं प्रस्तावं व्यतिरिच्य राष्ट्रियमहासभा द्वयोरन्ययो विधानयोर्म ये महत्त्वपूर्णं परिवर्तनमकार्षीत्। तेन महत्त्वपूर्णः प्रभावो न्यपप्तत्। तत्परिवर्तनं राष्ट्रिय महासभां महनीयतरां स्थिति मगमयत्। अतः प्राग राष्ट्रियमहासभायाध्येयं ब्रिटिशसाम्राज्यान्तर्गतस्वराज्यासादन मासीत्। एतद्धेतो ब्रिटिशसाम्राज्यान्तर्गते वासे आपद ममन्यन्त ये जना स्ते न सहमता अभूवन्। महात्मागान्धी राष्ट्रिय महासभाया उद्देश्य मस्ति स्वराज्य प्राप्तिरित्यजघुषत्। ततो ब्रिटिश साम्राज्यान्तर्गततेहत्येपदं दूरीकृतम्। म०गान्धी ब्रिटिशसाम्राज्यान्तर्गतं स्वराज्यं यदि सम्भवं स्याद् वा सत्यपेक्षितत्वे ततो दूरीभूय स्वराज्यं, प्राप्तव्यमित्यनेन प्रकारेण 'स्वराज्य' मित्येतत्पदं व्याचरव्यौ। 'स्वराज्यम्' इत्येतस्य पदस्य अर्थे सञ्जातपरिवर्तनत्वाद् द्वयो-

रपि विचारयोर्जनाः स्वस्वविचारानुसारमर्थं कर्तुं स्वतन्त्रतां लेभिरे किञ्च राष्ट्रियमहासभायां कार्यं विधातुं स्वकीयमानुकूल्य मनुबभूवुः। एतस्मिन् नागपुराधिवेशने स्वराज्यप्राप्तिसाधनेष्वपि परिवर्तनं विहितम्। एतवान्त मनेहसं राष्ट्रियमहासभा स्वोद्देश्यप्राप्त्यर्थं वैधानिकसाधनसीमाधिष्ठितासीत्; परं सा साम्प्रतं साधनानि शान्तान्यूचितानि च परिग्रहीतुं प्राप्तस्वत्वासीत्। श्रीमहात्मगान्धिस्वीकृतेननाने परिवर्तनेन श्रीमालवीय-जिन्नासमदक्षिणौदारमार्गिणो वामपक्षिणश्च नेतारः सन्धानमीयुः। सर्वविधतया ये देशं स्वतन्त्रमचिकीर्षस्तेऽपि तुतुषुः।

राष्ट्रियमहासभा तिलकपुण्यस्मृत्यायोजनोद्देश्येन जनताजनार्दनं कोटिरूप्यकाणि याचितुं शिवं संकल्पञ्चकार। जनता तत्र महतीं तत्परतां प्रशंसनोयाञ्च संलग्नतां प्रदर्शयाञ्चकार। एतेन कार्येण राष्ट्रियमहासभायाः संगठनात्मकमपि आयासमन्तरेण समपद्यत।

वस्तुतस्तु राष्ट्रियमहासभाया इतिहासे नागपुराधिवेशनमुल्लेखनीयाधिवेशनत्वेन स्मृतमस्ति। तदधिवेशनं राष्ट्रियमहासभांप्राज्यप्रभाववतो मतुलशक्तिशालिनीञ्चाकरोत्। सा शासनं सक्रियतया विरोद्धुं निश्चिकाय। अतः सोग्रवादिनींनीतिमवललम्बे। महात्मा गान्धी तां नीतिमहिंसासोमास्थितां विधाय प्रयुयोज। सः हिंसात्मकानुपायानवाजानात्; तदविधानुपायानालोचयामास च। न कदापि तान् पर्यपुष्णात्। अस्मिन् विषये पट्टाभिसीतारमैय्या कांग्रेसेतिहासे लिखति—"नागपुर राष्ट्रियमहासभाया अधिवेशनात् वस्तुतो भारतेतिहासे नवस्यैकस्य युगस्यावतारणा भवति। निर्बलःक्रोधोऽभिनिवेशपूर्णप्रार्थनानां स्थानम्, उत्तरदायित्वात्मको नवो भावः स्वावलम्बनमयीं निष्ठां परिजगृहतुः। यदि स्वतन्त्रतेष्ठास्ति तदा तदर्थं स्वयं प्रयतितव्यमिति जनतानुभवं कर्तुमारभत।

महात्मा गान्धी राष्ट्रियमहासभायाः सहयोगं समर्थनञ्च प्राप्य देशव्याप्यान्दोलनस्य कार्यक्रमं निश्चितं चकार। महात्मा अलीबन्धुभिः सार्धं समस्तेऽपि देशे भ्रमणं व्यदधात्। स जनता-

मान्दोलने भाग मादातुं प्रोत्साहयन्यास। आन्दोलनारम्भात् प्राक् स १-८-१९२० तमदिनाङ्के महाराज्यपालार्थं पत्रमेकमलेखीद् भारतशासनं पञ्चनदकृतेष्वत्याचारेषु, कृते च खलीफापमानेऽनुशयीत; भारतीयनेतृभिः समं परामर्शे विहिते सति, मार्गं तदीदृशं मार्गयेद् येन जनता तुष्येत्। असहयोगस्य गरिमाणं परिवीक्ष्यैव तदीयः कार्यक्रमोऽपि निर्धारितोऽभूत्। परं न भारतशासनं महात्मागान्धिनः फलस्य दिशि स्वध्यानमावर्जयत्। शासनप्रदत्तं पदकं परावर्त्य म० गान्धी अहिंसा सिद्धान्तमवलम्बमान मसहयोगान्दोलनं प्रारभत। आन्दोलनारम्भे सत्येव वहवो विद्यार्थिनो राजकीयविद्यालयानत्यजन्। राष्ट्रियशिक्षासंस्थासु तैः प्रवेशोऽगृह्यत। शतशो जनाः स्वोपाधीन् मुमुचुः। सहस्रशः प्राड्विवाकाः प्राड्विवाक्त्वं चामुञ्चन्। तत्र वङ्गप्रदेशस्य श्री चितरञ्जनदासः उत्तरप्रदेशस्य पं मोतीलालनेहरू, तत्सुपुत्रः पं. जवाहरलालनेहरू च, पञ्चालेषु लाला लाजपतरायः, सौराष्ट्रेषु श्रीवल्लभभाइपटेलो विट्ठलभाई पटेलश्च, पूनायां नरसिंहचिन्तामणिः केलकरः, मध्यप्रान्ते डॉ० मुञ्जे अभ्यङ्करश्च, विहारप्रदेशे डॉ० राजेन्द्रप्रसादो, मद्रासे राजगोपालाचार्यः, सत्यमूर्तिः, टी० प्रकाशनश्च विशेषोल्लेखनीया अभूवन्। मुस्लिमनेतारश्चान्दोलने सक्रियं भाग मगृह्णन्। तत्र अलीबन्धु (मौ० मुहम्मदअली, शौकतअली च) डॉ० अन्सारी, मौ० अब्दुल कलाम 'आजाद' सन्ति प्रमुखाः।

एताश्च राष्ट्रियसंस्थाः स्थापिता अजायन्त—

१. अलीगढ़ मुस्लिम विश्वविद्यालयः, गुजरातविद्यापीठः, (३) बिहार विद्यापीठः, (४) काशी विद्यापीठः, वङ्गेषु राष्ट्रिय विश्वविद्यालयः, तिलकमहाविद्यापीठश्च।

(ख) वैदेशिकानां वस्त्राणां वहिष्कारोऽजायत। जनाः स्वदेशीयानि वासांस्यवयसत। सहस्रशोजना तन्तु निर्माणकार्येऽलगन्।

(ग) मादकपदार्थविरोधान्दोलनं प्राचलत्।

एतानि कार्याणि शासनार्थागमेऽसत्प्रभाव मपातयन्। तत् (शासनं) भृशार्थिकहानिं सोढु मवाध्यत। वहिष्कारकाले

राष्ट्रियमहासभायाः स्वयं सेवकेषु शासनेन वहवोऽत्याचाराः कृताः ।

(घ) नवयोजनानुसारेण व्यवस्थापिकासभावहिष्कारः प्रारब्धोऽभूत् । अभ्यर्थिनां कृते स्वमतं न दातुं जनताया मभ्यर्थं ना कृताभवत् मतमभ्यर्थी न प्राप्तुं शक्नुयादित्येतद्-विधो यत्नो विहितः; परं कृतेऽपि तादृशे प्रयत्नेऽनेके नवाव-जमींदार-धनिक-श्रेष्टि-प्राड्विवाक्प्रभृतयो निर्वाचने साफल्य मधिजग्मुः । ते शासनम्प्रति नैजं सहयोगं दत्तवन्तः; परं राष्ट्रिनमहासभा जनता च तान् देशद्रोहित्वेन मेनाते । व्यवस्थापिकासभानामुद्घाटनाय फरवर्यां, १९२१ तमेशवीयाब्दे डयूक आफ कनॉट (*Duke of Connaught*) भारतमुपेयिवान् । म० गान्धिनोऽसहयोगान्दोलनाद् भारतीयं वातावरणं न शान्त मासीत् । शासनं वातावरणं शान्तं विधातुं यथाशक्ति प्रायतिष्ट, परं न तत् सफलता मलब्ध । तदभ्यलषत डयूकागमनं विरोद्धुं प्रायतत; यत्रापि सः (डयूकः) जगाम तत्र तदभ्युपगमने सर्वाण्यपि कार्याणि विरतान्यक्रियन्त । ततः शासनं घोरं दमनचक्र मचालयत् । राजद्रोहिसभाधिनियमः कार्यान्वितः कृतः । आन्दोलनसम्पर्ककारिणोजना अध्रियन्त । बह्वोवन्दिनः कृताः । कारागारे च ते प्राक्षिप्यन्त । अप्रेलमासे, १९२१ तमेशवीयवर्षे लॉर्ड माण्टफोर्डस्थाने लॉर्ड रीडिंगो महाराज्यपालो भूत्वा न्यषीदत् । पण्डित मदनमोहन मालवीयस्य प्रयत्नेन महात्मा गान्धी महाराज्य पालेऽमेलीत् । तावद्-प्रचारो न कृतः स्याद् यावद् अलीबन्धू आन्दोलने वर्तेते इत्येतद् फलं तदा तन्मेलनान् निर्गतम् । आन्दोलनं ययापूर्वं गति मदर्शयत् । जुलाई मासे, १९२१ तमाब्दे, म० गान्धी विदेशीय-वस्त्रवहिष्कारान्दोलनं घोरं कृत्वा प्राचीचलत् । तेन स्थाने स्थाने वैदेशिकान्यम्बराण्यदह्यन्त । अस्मिन् समये मौ० मुहम्मद अली महाभागस्य नायकत्वे खिलाफत-सम्मेलनं राजकीय-सेवासु प्रवेशं न कर्तुं मुसलमानान् प्रार्थयामास । अलीबन्धू करांच्यां परभौजसा अभाषेताम् अतो द्वावपि बन्धू वन्दितां नीतौ; वर्षद्वयभोग्यं कारादण्डं तौलब्धवन्तौ । राष्ट्रियमहा-

सभा वेल्स राजकुमार (*Prince of Wales*) वहिष्करणाय निश्चिकाय। तदागमनं १९२१-'२२ सत्रे, गौत्ये सम्भावित मभूत्। सः १७।११।१९२१ तम दिनाङ्के बम्बईनगरी माजगाम। तदा देशे सर्वत्रापि सर्वाण्यपि कार्याणि प्रतिहतान्यक्रियन्त। यस्मिन् काले स बम्बई-वायुयानावतरणस्थानेऽवततार, महानुपप्लवोऽजायत। म० गान्धी तत्र निनिन्द। यत्रापि सः (वेल्स-राजकुमार) प्रययौ तत् स्थान मक्रिय मदृश्यत। युवराजः सर्वत्र स्वागमने शोकं ददर्श। भारतीया एव न, अनेके वैदेशिका अपि निरशना भूत्वा दिनं तन्निन्युः। सर्वेऽपि भोजनालयाः पिहितद्वारा अदृश्यन्त। पण्डित मदनमोहन मालवोयो मुहम्मद अली जिन्ना च राष्ट्रियमहासभाशासनयोर्मध्ये सन्धानाय भृशं प्रायतिषाताम्। महाराज्यपालश्च सन्धानपक्षे समजायत। शान्तवातावरण निमित्तेन प्रभूतः प्रयासोऽक्रियत; परं म० गान्धी अलीबन्धु निर्मुक्तिसमयं भावत् सन्धानाय नोद्यतोऽभूत्।

साम्प्रतं शासनं दमनचक्रं प्रायूयुजत्। १९२१ तमाब्दान्तं वन्दिनः पञ्चाशतसहस्रं सञ्जाताः। शासनं मान्यान् राष्ट्रियमहासभानेतृन् कारागारस्थांश्चकार। सार्वजनिकसंस्थाः अवैधा अघोष्यन्त। इत्थमेकत आन्दोलनं तीव्रतरां गति मविभ एकतश्च शासनमपि स्वदमनचक्रं कठोरतया सक्रिय मन्वतिष्ठत्। १९२१ तमेऽब्दे राष्ट्रियमहासभाया अधिवेशनम् अहमदाबादे बभूव। अत्राधिवेशने म० गान्धो हिंसककार्याणि निनिन्द। पुनश्च राष्ट्रियमहासभा असहयोगनीतिमपुष्णात्। राष्ट्रिय महासभा म० गान्धिन आन्दोलनस्याधिनायकपदमध्यासयामास। अथ सविनयावज्ञान्दोलनारम्भाय निश्चयः सञ्जातः। तत्र च राष्ट्रियमहासभायाः स्वयंसेवकत्वाय जनता प्रार्थ्यत। आन्दोलनं तीव्रया गत्या चचाल। अत्र श्री डॉ० राजेन्द्रप्रसादस्य कथन मिदम्—

"यदाप्रभृ येव भारतसम्बन्धो ब्रिटेनेन सह संवृतस्तदितिहासे जनतायाः क्षोभ उत्साहश्च तां सीमां गतौ न दृष्टावभूताम्। एतावन्तं दोर्घमनेहसं न देश एतावतां सुपुत्र णां सेवा

मवाप्तुमशक्नोत्। जनतायाः स्वयोग्यतायां स्वकठिनतादूरीकरणपरकक्षमतायां तावान् बलीयान् विश्वासो न कदाप्यवालोक्यत। महात्मनो गान्धिनो नेतृत्वे आन्दोलनस्य प्रचण्डत्वमतितरां सम्भाव्यमानमासीदतो भारतीया नेतारः शासनराष्ट्रियमहासभयोर्मध्ये सन्धानं कामयाञ्चक्रिरे। भारतीयनेतृणां सम्मेलनं बम्बय्यामजायत। महात्मागान्धी तत् सम्भावयामास। तदानीं राष्ट्रियमहासभाया नेतारो महान्तः कारागारे आसन्। तस्य सम्मेलनस्योद्देश्यमासीद् द्वयोरपि (शासन-महासभयोः) मध्ये सन्धानं स्यात्। सम्मेलनेऽस्मिन् पर्याप्तवाद-विवादानन्तरं निश्चय एषः सञ्जातः—

(१) यावत् सन्धानवार्ता प्रातेत, तावद् अहमदाबादराष्ट्रियसम्मेलननिर्धारितमान्दोलनं न चालितं स्यात्।

(२) असहयोगिनो जना अन्ये च कारावासिनो राजनीतिकवन्दिनो मुक्ताः स्युः।

(३) गोलपटलसम्मेलनमभ्याहूतं भवेत्; तत्र च खिलाफत–पञ्जाबहत्याकाण्ड–स्वराज्य—विषयकव्यतिकराणां निर्णयनार्थं यत्नः कृतः स्यात्। राष्ट्रियमहासभाकार्यकारिणी प्रस्तावांस्तान् स्वीचकार; परं न भारतशासनं तानङ्गीचकार। राष्ट्रियमहासभा तु सहयोगार्थिन्यासीत्, परं शासनस्य निर्बन्धपरत्वात् सफलता न लब्धाभूत्। बाधितो भूत्वा म० गान्धी असहयोगान्दोलनं शरणमयासीत्।

महात्मागान्धी १-२-१९२२ तिथौ भारतीयनेतृणां सम्मेलने बम्बय्यां जाते सति निष्फले, भारतमहाराज्यपाल सेवायां पत्रमलेखीत्; तत्र सः शासनस्य कठोरां नीतिं निन्दन् आलोचयंश्च शासनं भृशमचेतयच्चेच्छासनं स्वनीतिं प्रवृतिञ्च न परिवर्तयेत् तदा सप्तदिवसाभ्यन्तरे वारदोल्यां सत्याग्रहान्दोलनं चालितं स्यात्। अस्ति वारदौली सूरतमण्डले पत्तनं लघीयः। तत्रत्या जनता म० गान्धिनः सर्वामपि सम्मति वचनानि च पालयितुमात्मानं समनीनहत्। सा आन्दोलनाय उद्‌ङ्‌युक्त। सप्तदिनसमाप्तेः प्रागेव गोरखपुरमण्डलान्तर्गत चोरीचोरानामकस्थाने दुर्घटनैकाघटत। तत्रत्या जनता पुलिस-

स्थानमेकमदहत्। सा पुलिसोनिरीक्षकं (*Police sub Inspector*) आरक्षिणश्च कतिपयान् निजघान। यदा म० गान्धीदमजानात् तदा दुःखमसोममन्वभवत्। स न तत् सोढुं शशाक। ततः प्रागपि मालावारे, बम्बय्यां चोपप्लवाः समजायन्त। आन्दोलनस्य हिंसोन्मुखता भृशं व्यथयति स्म। स तदान्दोलनं समवारीत्। वारदोल्यां ततो राष्ट्रियमहासभाया अधिवेशनमभ्याहूतमभूत्। म० गान्धिन आन्दोलनस्थगनप्रस्तावे बहुविवाद उदतिष्ठत्। अन्ततोगत्वा प्रस्तावोऽभवत्स्वीकृतः। म० गान्धी रचनात्मकं कार्यक्रमं प्रसभं पर्यपुष्णात्। आन्दोलनमभूत निरस्तम्। सः आन्दोलनमेव न, राजकीयविध्यवज्ञां करप्रतिषेधमपि निरास्थत्। १३-३-१९२२ तम दिनाङ्के सः (म० गान्धी) वन्दितां नीतो बभूव। राजद्रोहापराधे स न्यायाधिकरणस्य पुरोऽनीयत। स षड्वर्षभोग्येन दण्डेनादण्ड्यत। यरवदाकारागृहे च वन्दित्वेन स न्यधीयत। शासनस्याशङ्कां कार्यकर्तारो निर्मूलां प्रमाणितीकुर्युरिति महात्मागान्धीयेष। तदर्थं न कोलाहलो न च रोषो न विरोध एवेष्ट इति च सः स्वेच्छामभिव्यानक्।

महात्मा गान्धी यदा असहयोगान्दोलनमुपसंजहार तदान्दोलनमासीत् पराकाष्टागतम्। एवं स्थिते, कस्मात्कारणात् महात्मा तत् संव्रवारेत्येष प्रश्नोऽनायासेनोत्तिष्ठति। महात्मनः स निश्चयो यदा कारागृहस्थितैर्नेतृभिरश्रूयत, तदा न ते तत्कार्यक्रममुचितममंसत। पं० मोतीलाल नेहरू, लालालाजपतरायश्चोभौ कारासदनादेव गान्धिनीतिं निनिन्दतुः। कस्यचनैकस्य पापात् समग्रोऽपि देशस्तत्पापजनितं दण्डमवाप्नुयात् इति मत्वा तौ महात्मन्युग्रं वैमत्यं प्रदर्शयाम्बभूवतुः। केचन तयोः कथनं स्वभावेनापुपुषन्। श्रीसुभाषचन्द्रवसुः स्वकीये इण्डियन स्ट्रगल (*Indian Struggle*) पुस्तके (पृ० ९०) लिखति "तस्मिन्काले आन्दोलनस्य निरोधनं, यदा तदुच्चपराकाष्ठागास्यापीत्, आसीद् राष्ट्रविपदिव। म० गान्धिनः पोषकः श्री चित्तरञ्जनदासोऽहञ्चैतदमनुबभूविव परमदुःखमिव। न देशबन्धुस्तद्दुःखितो मेने; न च पं० मोतीलालनेहरू लाला लाज-

पतरायश्च तद् युक्तममन्येताम् । पं० जवाहरलालनेहरू लिखति स्वात्मकथायाम्—"यद्यान्दोलन मुपसंहृति नानेष्यत् तदा जनतायां हिंसाप्रवृतिर्बलवतीभूत्वा व्यक्ताभविष्यत् । तस्यां स्थित्यां शासनविरोद्धा भीषण आहवोऽवश्यंभावी स्यात् । तत्र शासनस्य विजयः सुनिश्चित आसीत् । परं तत्संवृतावनैतिकतावश्यं सञ्जाता; आन्दोलननिवारणाद् देशे दुःखदा विचारतति रुदपद्यत । राजनीतिकसंघर्ष उत्थितां हिंसामवश्यमेव निजग्राह, परं निगृहीता हिंसा स्वनिर्गमनमार्गं ममार्गयत् । भाविनि समये जाताः साम्प्रदायिका उपद्रवा स्तत्फलमेव[1] । यद्यप्यान्दोलनसंवरणे हेतु स्तत्कालवर्तिन्यासीच् चौराचोरीघटनैव पर मन्यांश्च कांश्चन हेतून् प्रेक्ष्योत्प्रेक्ष्य च सः (म० गान्धी) तं निश्चयमगमत् । अस्मिन् विषये लिखति चोपरिनिर्दिष्ट एव महान् लेखकतल्लजः श्री नेहरू "आन्दोलनसंवरणे कारणं न केवलं चौराचोरीघटना; आन्दोलन मापाततोऽवश्यं शक्तिमदर्शयत्;गतिशीलञ्च जनैः तदन्वभूयत;परं वस्तुतस्तु तच् छिन्नतां भिन्नताञ्च गच्छदासीत्[2]। चौराचोरीघटनातः प्राक् च भारतस्य विभिन्नेषु स्थलेषु कानि चिद् हिंसात्मकानि कार्याणि अवश्यमेवाघटन्त, तेषु च मोपला-बम्बईकाण्डौ स्तः प्रसिद्धौ । नान्दोलन स्थगनं तदा तामेव घटना मादाय महात्मा गान्धी चकार; अपि त्वनारतं तद्विधकाण्डानां घटितत्वान् म० गान्धीदमनुबभूव-चेद् राजनीतिर्हिंसात्मिका जायते, तदा शासनस्य दमनचक्रं तीव्रतरां गतिं प्राप्नुयात्; तत्सोढुं भारतीयाः क्षमतां न निदधति, शासनस्यारक्षिणः सैनिकाश्च एतावन्तं प्रचण्डं कठोरं घोरञ्च दमनं विधास्यन्ति; यावता त्रस्ता खिन्नाः क्लान्ता च भूत्वा ते चिरकाल मान्दोलनोन्मुखा न भविष्यन्ति । भवेयुरपि चेत् ते, तदा स्वराज्यप्राप्तिप्रश्नस्तु अतिदूरस्थो भवेत् । वस्तुतो नेतृणां कारागारस्थितत्वाद् योग्यनेतृत्वस्य समाप्तिः सञ्जाता; तस्माज्जनतायां निर्यातनात्मिका भावना

१. जवाहरलाल नेहरू :*Autoliography, Page. 86.*
२. ,, ,, ,, ,, 85

प्राज्वलत् [1]। रजनीपामदत्तः स्वपुस्तके (*India Today*) महात्मानं गान्धिनं कटुतयालोचयाञ्चकार। तत्र सः स्पष्टितयेदं-प्रकटीचकार–'तस्मिन् समयेऽपि महात्मनि गान्धिनि, राष्ट्रिय-महासभायाञ्च धनवतां जनानां प्रभावो भूमीशानाञ्च प्रभुत्व मवर्तत। अतोऽसौ (म० गान्धी) आन्दोलन स्थगनात्मकं निश्चयं विदधौ। एतस्यामालोचनायां सत्यांशोन्यूनतम एव। वस्तुत स्तस्यां स्थित्यानान्दोलनस्य अग्रेसरत्वम्भारतम्प्रति न भवेद् धितावह मित्येतं निष्कर्षं महात्मान आत्मान मनयत्। तद्विचारेण अहिंसा मानवस्य विशिष्टो गुणो यदा ह्यहिंसास्ति पशोर्गुणः।

आन्दोलनारम्भसमये महात्मना गान्धिना देशवासिन आश्वास्यन्त यत् तत्कार्यक्रमानुसाराचरणे कृते सति, वर्षाभ्यन्तरे, स्वराज्यं लब्धुं शक्यं, परं जातन्त्विदं न, आन्दोलन-प्रवर्तक एव वन्दिगृहायस शलाकाशालि कोष्ठेऽक्षिप्यत। आन्दोलने सति विरते, देशे निराशा निशा विततभवत्। जनास्तदा किं कुर्युरिति न वेत्तुं शेकुः।

एकविंशत्यधिकैकोनविंशति शततमेशवीयवर्षे देशे निःसंशय मेकं सुगठितं सुव्यवस्थितं संगटनं दृष्टं बभूव। राष्ट्रियमहासभा तदासीद् वैधानिकताजालग्रथिता। सा तत्समयं यावद् वचस्येवारमत न च कर्मणि। म० गान्धी तां नवेनैव विधानेन व्यभूषयत्। एतावदेव न, स तां क्रान्ति-कारिणि संगठने च परिवर्तयामास। देशस्य काश्मीरात् कन्या-कुमारीं यावदेक एव संगठितः प्राणवान् स्वरोऽश्रूयत, एकैव नीतिरेकएव विचार-प्रवाहः प्रावहत्, आंग्लभाषाया महत्ता व्यलुम्पत्, राष्ट्रियमहासभा हिन्दी राष्ट्रभाषात्वेन स्वींचकार। 'खादी' नाम पदवाच्यं वसनं सम्प्रति राष्ट्रियमहासभायाः सदस्यानां नियमितो वेषः संवृत्तः। अत आन्दोलनाद् देशोऽवाप्तवान् महान्तं लाभमुल्लेखनीयम्। समासेन स लाभ इत्थं गेयो भवितुं शक्यः—

1. *R. Palme Dutt :*
*India Today, Page 329.*

(१) आन्दोलनं भारतीयेषु राष्ट्रियतां प्राचीचरत्। तस्यान्दोलनस्य प्रभावः सर्वस्मिन्नपि देशे न्यपप्तत्। विभिन्न-प्रदेशवासिनः राष्ट्रियमहासभायाः पताकायाः अधस्तात् कुटु-म्बिन इव समवेता अभूवन्।

(२) एतावन्त मनेहसं यावद् राष्ट्रियमहासभाया नीति वैधानिकैः साधनै स्वोद्देश्यस्यासादन मासीत् परं सम्प्रति तु सा सक्रियमान्दोलनमहिंसात्मिकां सृतिमाश्रयन्ती राजकीयविध्यव-ज्ञानं निरचिनोत्।

(३) तदान्दोलनं भारतवासिषु स्वदेशीयवस्तुव्यवहार-परकं प्रेम अजीजनत्। भारतीया लक्षशो वैदेशिकानि वस्तून्य-हासिषुः। तेन वैदेशिकवसनोद्योगो महतीं क्षति मगात्। भारतस्य कुटीरोद्योगा व्यवसायाश्च प्रोत्साह्यन्ते स्म। तत्र नवस्य जीवनस्य सञ्चारः समजायत।

(४) आन्दोलनं शासनस्य मूलश्रिय मवेपयत्। राष्ट्रिय-महासभाया जना उदारवादिषु सहयोगं न कुर्वाणा राष्ट्रहित-कारिणीं नवामेव योजनामन्वेतुं प्रायस्यन्।

तदेवमान्दोलनं परममहत्त्वमयमासीत्। जनता जागृताजायत। स्वराज्यस्य सन्देशं सर्वेऽप्यज्ञासिषुः। तद्गुञ्जनं देशस्य दिशि दिशि व्याप्तमभवत्[1]।

महात्मा गान्धी हिंसायां परमकठोरं सपत्नत्वं न्यदधात्। स न कदापि देशस्य हिंसोन्मुखतां सेहे। देशे यत्र तत्र जातानि हिंसात्मकानि कार्याणि पर्यवेक्ष्यैव स आन्दोलनं झटिति निरु-रोध। आन्दोलन निरोधं न श्री चित्तरञ्जदासादिकाः कतिपये नेतारोऽसहन्त। अतस्तैः 'स्वराज्यदल' नामिका नवैका संस्था प्रतिष्ठापिता। तै राष्ट्रियमहासभाया नीत्यां परिवृत्तिमाहर्तुं मेते परामर्शाः प्रदत्ताः—

१. देशस्य साधारण जनताया असहयोगान्दोलनेऽसन्न-द्धत्वात् तद्विधस्यान्दोलनस्यायुक्तत्वमेव सिद्ध्यति

२. सत्याग्रहिणि पञ्चनदप्रदेशे खिलाफते च कृतान् राजकीयान् प्रभावान् प्रमार्ष्टुं स्वराज्यपरक मन्तव्याधारे

1. *Coupland : India Restatement, Page 119.*

निर्वाचने भागो ग्राह्यः ।

(३) चेत् कौंसिलेषु बहुमतं प्राप्तमस्ति तदा शासनस्य एकैकं कार्यं विरोद्धव्यम् । शासनकृतत्रुटिपरिहाराय स्वराज्याय च प्रस्तावः प्रस्तुतीकृतः स्यात् । यदि कौंसिलेषु बहुमतं प्राप्तमस्ति तदा कौंसिल (परिषद्) सम्बन्धिनि कस्मिन्नपि कार्ये भागो न ग्रहीतव्यः ।

इमान् परामर्शान् श्री राजगोपालाचार्य—डॉ० अन्सारी-प्रभृतयः केचन सदस्या व्यरौत्सुः । आसंस्ते विचारा महात्मनो गान्धिनो नीतेः परिपोषयितारः । तत्र कौंसिल प्रवेशो देशार्थं महितकरं मतमभूत् । देशस्य तदा वातावरणं शङ्काकुल मदृश्यत । राष्ट्रिय महासभा यथा १९०७ तमेशवीयवर्षे विभक्ताभूत् तथैव १९२२ तमवर्षे नविभक्ता भवेदित्येषा शङ्का समुदपद्यत । कलिकाताया मखिलभारतीय राष्ट्रियमहासभायाः १९२२ तमवर्षे, नवम्बर मासे, अधिवेशनं बभूव । तत्र कौंसिल-प्रवेशविषय मादाय द्वयो रपि समुदाययो र्मध्ये महान् भीषणो वाक्संघर्षः प्रवृत्तः । परं तस्मिन्नेववर्षे मुहर्रमावसरे हिन्दू-मुस्लिमयो रुपप्लवः प्रवृत्तः । स राष्ट्रिमहासभायाः प्रवृत्ति संसदवादंदिशि अग्रेसरीकर्तुं महत्वमयं साहाय्यं कर्तुं भूमिकात्वेनासिद्ध्यत । तस्मिन्नेव वर्षे राष्ट्रिय महासभाया गयाधिवेशने श्रीचित्तरञ्जनदासो ऽध्यक्षो बभूव । परं सन्नपि सभापति रसौ राष्ट्रियमहासभां न स्वकार्यक्रमार्थं मुद्युक्तां कर्तुं शशाक प्रस्तावपक्षे ८९०, विपक्षे च १७४८ मतानि प्राप्तान्यभूवन् । तदेवं सभापति श्चित्तरञ्जनदासः पराजितो जातः । अपरिवर्तनवादिनो बभूवु विजयिनः । राष्ट्रियमहासभा विजयिपक्षस्य कार्यक्रमं स्वीचकार । श्रीचित्तरञ्जनदासो राष्ट्रिय महासभायाः सभापतिपदं पं० मोतीलाल नेहरू च महामन्त्रिपदममुञ्चताम् । एदद्धेतोः, स्वराज्यदलसंस्थापनञ्च आन्दोलन मश्लथत; बभूव च तद्रुद्धगतिकम् ।

चिरसमयपर्यन्तं नेतारः परस्परं कौंसिल-प्रवेश विषये भृशं विवदन्ते स्म । अन्ततोगत्वा बहुप्रयासे जाते सति, कोकण्डा राष्ट्रिय महासभाधिवेशने कौंसिल-प्रवेश विषयकः प्रस्तावः

पारितोऽभूत् । १६२४ तमेशवीयवर्षे आंग्लशासनं राष्ट्रिय-महासभया सह सन्धि कर्तुं महात्मानं गान्धिनं कारागारान्मुक्तं-चकार। स्वराज्वादिनो म० गान्धिनः सहयोगं समर्थनं च प्राप्तुं तस्मिन् मिमिलुः । यद्यपि म० गान्धी स्वराज्यवादिनां नीत्यां कार्यक्रमे च न विशश्वास परं राष्ट्रिय महासभाया तेषां बहु-मतं विलोक्य सः स्वानुमतिं दातु मवाध्यत। परं स तदीय संसद् परकगतिविधिनीतिभ्यः पृथगेवात्मानं निदधाति स्म। स रचनात्मकेषु कार्येषु समलगत्। स्वराज्यवादिन स्तदीयं तत्कार्यक्रमं पर्यपुष्णन्। एतेन राष्ट्रियमहासभा पार्थक्याद् विभाजनाद् वात्मान मरक्षत्। राष्ट्रियमहासभाया अधिवेशनं १६२४ तमेशवीयवर्षे बेलगाँव इत्येतत्स्थानेऽभूत्। तत्र सभा-पति र्महात्मा गान्धी सञ्जातः। अधिवेशनेऽस्मिन् म० गान्धी वैदेशिकवस्तुवहिष्कारान्दोलनं निरन्तरं चालयितुं, तन्तुं स्रष्टुं, वासांसि च कर्तुं पूर्णबलेन प्रेरयामास। तत्कार्याणि सन्ति महत्त्वपूर्णानि नितरा मिति स समभाषत। स्वराज्यवादिन-स्तत्कार्यक्रमं कृत्स्नतया परिपोषयन्त स्तत् कार्यक्रमं प्रवर्धयितु माश्वासयामासुः। म० गान्ध्यपि तत्कार्यक्रमम्प्रति स्वकीयां सहमतिं प्रकटीचकार।

स्वराज्यदलोद्देश्येषु प्रकाशं क्षिपन् तज्जन्मदाता श्री चित्तरञ्जनदासः १६२५ तमेशवीयाब्दे वङ्गविधानसभाया-मवादीत्–'इदमुच्यते यदस्मदीय उद्घोषोऽस्ति–"नाशयत, नाशयत······" ? कस्मात्कारणाद् वयं स्मो नाशयितुमनसः? वयं तस्मान्मुक्ता भवितु कामाः, नास्ति यदस्माकं कृतेहितावहं; न च यद् हितावहं भवितुं सम्भवम्। वयं तदुत्पादयितु मभिलषामहे। वयं तत्स्थाने, तां परिपाठीं रचयितुं कामयामहे या सफलतापूर्वकं कार्यं कुर्वाणा सार्वजनिके हिते साहाय्यं कर्तुं मर्हेत्। इत्थं सः स्वराज्यदलस्य स्थापनाया महत्त्वमयं मुख्यमुद्देश्यं भारतस्य कृते स्वराज्यप्रदापनम् आंग्ल-सत्ताधीनतापरिपाठ्याश्च समापनं स्वभारते समुपतिष्ठत इत्येतत् स्पष्टीचकार।

स्वराज्यवादिनाम् 'असहयोगविषयकः कार्यक्रमः परि-

षत्सु (कौंसिलेषु) प्रविश्यैव विधातुं शक्यो, विना तदवलम्बनमसहयोगान्दोलनं न सफलं भवितुं सम्भव मित्येषा धारणासीत्। तन्मतेन कौंसिलाभ्यन्तरे असहयोगस्यार्थोऽस्ति निर्वाचनेषु भागं प्रगृह्यात्यधिकसंख्यायां सदस्यानां निर्वाचनं कारयितुं यत्नो विहितो भवेदथ च शासनस्य नीतेर्घोरं विरोधं विधाय तत्कार्याणि बाधितानि कृतानि स्युः। येन कार्याणि न सुचारुतया चलितानि भवेयुर्भवेच्च शासनं स्वनीतिं परिवर्तयितुं प्रवाधितम्। कौंसिलेषु प्रविश्यैव १९१९ नमेऽब्दे कृतानां मार्जनानां क्रियाया मन्वयनं शक्यं स्यादिति तदुद्देश्यं च वर्तते। उद्देश्यप्राप्त्यर्थं निम्नकार्यक्रमोऽभवन्निश्चितः—

(क) राजकीयायव्यम विवरण निरसनम्।

(ख) भृत्यताप्रभुतावादिशक्तिप्रगुणीकरण क्षम प्रस्तावानां विरोधनम्।

(ग) कौंसिलस्य पुरः राष्ट्रशक्ति प्रवर्धक प्रस्ताव-योजना विधेयकप्रतिष्टापनम्; भृत्यताप्रभुतावादिशासन समाप्तिकृत्-समर्थप्रयासानां कार्यान्वियनम्।

(घ) कौंसिलाद् वहि महात्मगान्धिनो रचनात्मकेषु कार्येषु पूर्णतया स्वसाहाय्यप्रदानम्।

(ङ) सत्याग्रह मन्तरेण न भृत्याताप्रभुतावादिनी शास्तृशक्तिः समुचितपथारूढा भवितु मर्हतीत्येतस्यां स्थित्यां, सत्याग्रहस्यानिवार्यत्वे सत्यापतिते क्षिप्रमेव कौंसिलेषु स्वस्वास्थानानि शून्यीकृतानि स्युर्देशे च सत्याग्रहं कर्तुं पूर्णो युक्तश्चोद्योगः कृतः स्यात् तत्र च स्वकीया निःशेषा शक्तिः प्रयुक्ता भवेत्; महात्मानं गान्धिनं प्रति च प्रतिसम्भव साहाय्यप्रदातु मुद्योग आचरितः स्यात्, राष्ट्रियमहासभायाश्च ध्वजायाः अधस्तादेकीभूता सन्त स्तदा स्वराज्यदल कार्यकर्तारो नेतारश्च सत्याग्रहं सफलीकर्तुं प्रयत्नवन्तो भवेयुः।

(च) कार्यक्रमं प्रभाववन्तं विधातुं तेष्वखिलेष्वपि कार्येषु अधिकारस्य प्रतिष्टापने यत्नस्याचरणं, यत्र कौंसिल सदस्यत्वेनाधिकारस्थापनं सफलं भवितु मर्हेत्। तासु च समितिषु भागग्रहणं, यत्र भागं गृहीत्वा राजकीयानि कार्याणि संप्रत्यवा-

यानि भवितु मर्हेयुः स्वमन्तव्यञ्च निदृध्येत् ।

भारतस्य केचन नेतारः स्वराज्यवादिनां वाधानीत्या मुपयोगितायाञ्च तदीयायां सन्दिदिहुः । श्रीविपिनचन्द्रपाल सन्निकाशा राष्ट्रियमहासभाया नेतारः किञ्च श्री जोसेफादि-स्वतन्त्रसदस्यास्तां नीतिमेकान्ततो व्यर्था मेव मेनिरे । उदार-वादिनोऽपि तत्र विरुद्धा अदृश्यन्त । श्री सुरेन्द्रनाथ वनर्जी च तां नीति अर्थशून्यां नाभिमतफलप्रदा ममंस्त । वस्तुतः केवल वाधानीति संश्रयेण सरक्षणीय विषयकप्रशासनार्थं वा केन्द्रार्थं कस्या अपि दृढीयस्या लाभाशाया दर्शनं न सम्भवमासीत् ।

स्वराज्यवादिनः प्रदेशयो द्वयो द्वैधशासन निरोधनेऽवश्यं सफलतां प्राप्तवन्तः, परं न ते देशं तद्ध्येयभूतस्वराज्यम्प्रति नेतु मजायन्त क्षमाः श्री डॉ० जकरिया स्वराज्यवादिनां वाधा-नीते र्यच्चित्रमालिखत् तद् युक्त मेव प्रतिभाति स्म । तद्विचा-रेण स्वराज्यवादिनोऽसौ जन इवासन् यः स्वखाद्यं पातु मपि कामयते किञ्च तद् भोक्तुमपि । ते उग्रवादिनां चर्चा चर्चन मपेक्षित ममंसत पर संसदवादेऽपि नैजं पूर्णं विश्वासं निदधते स्म । मन्ये, यमध्वानं ते प्रियममन्यन्त तत्र सहयोगस्यार्थ आसीदसहयोगः

राष्ट्रिय महासभायाः पूर्णं समर्थनं प्राप्य स्वराज्यवादिनो नेतारो नवम्बरे, १९२३ तमेशवीयवर्षे निर्वाचने सफलतामी-प्सितुं भृशमश्राम्यन् । लब्धवन्तश्च वङ्गमध्यप्रदेशयोः आशा-तीतां सफलताम् । सा सफलता नूनं जनान् विस्मापयति स्म । तत्र ते स्ववाधानीत्या मन्त्रिणस्तत् कार्यकलापं विघ्नाकुलं विधाय सफलता विमुखांश्चक्रुः ।

वङ्गेषु स्वराज्यवादिनां स्पष्टं बहुमत मासीत् । तत्रत्यो राज्यपालस्तान् मन्त्रिपरिषदं स्थापयितु मामन्त्रयाञ्चकार स्वराज्यवादिनः । परं न ते स्वीचक्रुः । वङ्गप्रदेशस्य विधान परिषत् (लेजिस्लेटिव कौंसिल) द्वयो र्मन्त्रिणो र्वेतनप्रस्तावं बहुमतैरस्वीकृत्य त्यागपत्रार्थं मन्त्रिणाववाधत । १९२५ तमेवर्षे श्रीदेशबन्धू रुग्णः सन्नपि *Legislatibe Council* स्य द्वैध शासन-प्रणालीं समाप्तां कर्तुं सभामयासीत् सफलतां च जगाम । स

मन्त्रिमण्डलनिर्माण मसम्भव मकार्षीत्। वङ्गप्रदेशस्य राज्यपालो लॉर्ड लिटनो विधानपरिषदं भङ्क्तुमबाध्यत। सोऽजूघुषद् वङ्गेषु द्वैधशासनप्रणाली पूर्णतया असफला सञ्जातास्ति।

मध्यप्रान्ते च स्वराज्यवादिनी नीतिः सफलाभवत्। सा वैधानिकं विरोधं दृढं कृत्वा वङ्गेष्विव तत्रापि द्वैधशासनप्रणालीं विफलां विदधौ।

केन्द्रीयव्यवस्थापिका सभा (लेजिस्लेटिव असम्बली) थंमपि स्वराज्यवादिनो निर्वाचने भाग मगृह्णन्। तत्र ते १४५ स्थानेषु ४५ स्थानान्यलप्सत। तत्र च तत्समवायस्य नेतासीन् मोतीलाल नेहरू। स्वतन्त्रसदस्यैः राष्ट्रवादिभिश्च सममेकां विधाय स बभूव तत्र च बहुमतवान्। राजकीयेषु कार्येषु बाधायाः समुत्पादनं प्रारब्ध मभूत्। ८।२।१९२४ दिनाङ्के पं० मोतीलाल नेहरू १९१९ तमाब्दीयाधिनियमं (एक्ट) सम्मार्ष्टुं प्रस्ताव मेकं प्रास्तावीत्। शासनेन विरोधे कृते सत्यपि, सः प्रस्तावः स्वीकृतोऽभूत्। प्रस्ताव आसीदयम्—'परिषदियं परिषदि राज्यपाले चाभि निविशते यद् भारते पूर्णोत्तरदायिशासनस्य स्थापनायाः प्रयोजनेन १९१९ तमेशवीयवर्षीयं भारतशासनाधिनियमं परिष्कर्तुं पदमुत्थापितं भवेत्; तदर्थं च (क) भारतस्य समस्तानां प्रतिनिधीनामेका गोलपरिषदाहूता भवेत्; सा देशस्य महत्त्वपूर्णाल्पसंख्यकसम्प्रदायाना मधिकारान् हितानि च ध्यायन्ती भारतस्य कृते विधानं विरचयेत्। किञ्च (ख) वर्तमान केन्द्रीयव्यवस्थापिकासभां भङ्क्त्वा नवनिर्मिता या व्यवस्थापिका सभायाः पुरः सा योजना (विधानम्) प्रस्तुतीकृता भवेत्; सा च (योजना) धर्म (*law*) निर्माणनिमित्तेन ब्रिटिशसंसदम्प्रति प्रहीयेत'।

प्रस्तावस्योपरिनिर्दिष्टस्योत्तरे सर मैलकम हेली विधान सभाम् (असेम्बलीम्) आश्वासयामास यदसौ सद्यः द्वैधशासनव्यवस्थाया दोषान् तत्सम्बद्धानि च काठिन्यानि परीक्षितुं शासनस्य दृष्टिकोणं व्यक्तीकरिष्यति, तद्दूरीकरणोपायान् साधनानिच १९१९ तमाब्दस्याधिनियमस्योद्देश्यानि निदधानो ध्यानाध्वनि, प्रकाशयिष्यति। एतेनोत्तरेण असेम्बल्याः सदस्या

न तुतुषुः। तेऽनुदानमन्तव्यान्यस्वीकुर्वन्ति स्म; वित्तविधेयकञ्च प्रस्तुतीकर्तुं नानुमतिं प्रददुः। महाराज्यपालस्तत् स्वविशेषाधिकारेण स्वीचकार। शासनं च परीक्षितुं, भारतशासन-गृह-सदस्य सभापतित्वे समितिमेका मघटयत्; सा समितिश्च मुडीमन समिति रित्येतेन नाम्नाप्रथत। तत् सदस्यतार्थं पं० मोतीलाल नेहरू प्रार्थ्यंत परं सनस्वीचक्रे। स्वराज्य दलसंस्था तां समितिं वहिश्चकार। सर तेजबहादुर सप्रू, मुहम्मदअली जिन्ना च तत्सदस्यता मङ्गीकृतवन्तौ।

श्री सी० डी० आयङ्गरः केन्द्रीयव्यवस्थापिका सभायां प्रस्तावेनैकेन वङ्गदमनकृदध्यादेशान् समाप्तीकर्तु मयतिष्ट, सफलश्च तत्राभवत्। श्री वी० जी० पटेलोऽपि १९२५ तमेशवीयाब्दे बहून् दमनकारिणो विधीन् संहर्तुं प्रास्तावीत्; सोऽपि स्वीकृतोऽजायत। श्रीराजा भारते सैनिक विद्यालयं स्थापयितुं प्रस्तावं न्यदधात्। विरोधे शासनेन कृते सत्यपि सः प्रस्तावश्च पारितोऽभूत्। समयान्तरेण स्वराज्यवादिनः सभातोऽस (असेम्बलीतः) कृद् वहिर्ययुः। तदेवं ते तत्र कार्यकलापे स्वासहमतिं दर्शयामासुः। अत्र विषये श्री सी० वाई० चिन्तामणिर्लिखति—"मार्च मासे, १९२६ तमवर्षे व्यवस्थासभायां ते प्रविविशुः परं तत्क्षणं च निववृतिरे। अत्रत्यं भेदं तएवज्ञासिषुः। सर तेजबहादुर सप्रू तदीयां तां भक्तिं 'भ्रमन्ती भक्ति' रित्यभिदधौ।

१९२६ तमेशवीयवर्षे स्वराजतदलजन्मदाता श्री चित्तरञ्जनदास उपरेमे अतः स्वराज्यदलस्थितिर्न्यपप्तत्। वङ्गेषु तच्छक्तिरश्लथत। पं० मोतीलाल नेहरू महाभागस्त नान्तरीयकः सहयोगी नावाशिष्यत। (ख) असहयोगनीत्या मस्थिरत्व मदृश्यत। (ग) निर्वाचनेषु सफलतातिस्वल्पाभवत्। (घ) राष्ट्रियमहासभायां दलान्तरस्यापि समावेशः समलक्ष्यत। तत्स्थापनां श्री पं० मदनमोहनमालवीयो लाला लाजपतरायश्च चक्रतुः। वाधानीत्या हिन्दूनां हानिमाशङ्कमानौ तौ स्थापयामासतुः। (ङ) स्वराज्यदले ऐक्यं विनष्ट मभूत्। वैमत्यं बलीयो जातं; केऽपि नेतारः शासनसहयोगिनोऽभूवन्, केचन च

तस्यासहयोगिनः । राष्ट्रिय महासभा असहयोगनीतिमेव समशिश्रियत ।

१९२७ तमेशवीयाब्दस्य राष्ट्रियमान्दोलन मोजोमयं वैशिष्ट्यं दधान मदृश्यत । स्वराज्यवादिनः स्वनीत्यां स्वयमेवापरितुष्टाः समजायन्त । न ते तां नीतिं देशहिते उचितं युक्तञ्च मेनिरे । कारागृहाद् (१९२४ तमवर्षे) मुक्तो भूत्वा म० गान्धी हिन्दूमुस्लिमैक्यमुद्दिश्य कठिनं श्रमञ्चकार । अस्पृश्यताया निवारणाय पूर्णतया स उद्युयुजे । सोऽस्पश्यतां हिन्दूधर्मस्य कलङ्कत्वेन मेने । सः सर्वत्र देशे बभ्राम । देशे पुनः सत्साहसमुत्साहश्च पर्यवालोक्येताम् । कृषीबलेषु श्रमजीविषु च जागृतिरजायत । ते संगठिता अभूवन् । राष्ट्रिय महासभायाः कार्यक्रमे नीत्यां च ते सहयोगिनो भवितु मुद्युयुजिरे । राष्ट्रियमहासभाया नवयुवसु वामपक्षवृत्तिरुदियाय । तेषु साम्यवादिनां समाजवादिनां च प्रभावः पपात । अत्र ए०आर० देसाई वदति[1] रूसदेशे सञ्जाता समाजवादिनी सफलता समाजवादिराज्य स्थापना च भारतीयक्रान्तिकारिराष्ट्रवादिषु समाजवादिसाम्यवादिराद्धान्तास्तरुणानां हृदयान्यावर्जयाञ्चक्रुः । अस्मिन् समये श्रमिणामान्दोलनं दृढतया संगठित मभवत् । साम्यवादिनां प्रभाव स्तत्र बलीयान् समलक्ष्यत । वर्गचेतना च तत्र स्थानं गृह्णन्त्यवाप्यत । 'ह्विटलेआयोगनियुक्तिकाले साम्यवादिप्रभावपरिगृहीता भूत्वा श्रमजाविनो विरोधं दर्शयितुं दैनिकं कार्यं परित्यक्तवन्तः । सौराष्ट्र (गुजराते) प्रदेशे कृषीवलाः श्री बल्लभभाई पटेलस्य नायकत्वे, बारदोल्यां शासनविरोध्यान्दोलन मायूयुजन् । तत्र पूर्ण सफलता प्राप्ताभवत् । राजस्ववर्धिनी शासननीतिश्चिरात् कर्षक निपीडनसंलग्नासीत् । अतस्तदान्दोलनं प्रवर्तितम् । शासनं परमकठोरदमनचक्रं प्रावीवृतत्; तत् साम्प्रदायिकांश्चोपप्लवान् जनयामास परमन्तोगत्वा शासनं प्रणतं बभूव; सत्याग्रहिणश्च विजयं प्रान्पुवन् ।

मॉण्टफोर्ड योजनायाः प्रगतिं प्रेक्षितुं प्रतिदशमवर्षे राजकीयायोगप्रेषणव्यवस्था कृतासीत्; तदनुसारेण सादूमन कमी-

1. *Social Back Ground of Indian Nationalism, p. 324*

शनस्य नियुक्तिर्जाता। म० गान्धो तस्यायोगस्य व्यर्थत्वं सम्यगजानात्। आमन्त्रितोभूत्वा यदा महाराज्यपालसविधे प्राप्तोऽभूत् तदा स तस्य व्यर्थत्व मसङ्केतयत्। साइमन-कमीशनस्य सर्वत्रापि देशे वहिष्कारोऽभवत् 'राष्ट्रियमहासभा तदेम' प्रस्तावं पारितं कृतवती—

ब्रिटिशशासनं भारतस्य स्वभाग्यनिर्णयाधिकार मुपेक्ष्य साइमनायोगं नियुयुजे। अतः राष्ट्रियमहासभेयं निश्चिनुते यद् भारतस्य कृते आत्मसम्मानपूर्णः पन्थाः अयमेव यत् सा साइम-नायोगं सर्वथैव वहिष्कुर्यात्। इयं राष्ट्रियमहासभा भारतस्य जनतां देशस्य राष्ट्रियाः संस्थाः अनुरुन्धे यत् आयोगे भारतागते सति, विरोधदर्शीणि सामूहिक प्रदर्शनान्यायोजितानि भवेयुः। भारतस्य यस्मिन्नपि पुरे आयोगो दृश्येत तत्रापीदृशान्येव प्रदर्शनानि स्युः। उच्चैः प्रचारं कृत्वा लोकमतं तथा संग्रहीतं स्याद् यथा राजनीतिकविचारवन्तो भारतीया आयोगस्य वहिष्कार मुच्चै विधातुं सन्नद्धाः स्युः। राष्ट्रियमहासभा तानि सर्वाण्यपि साधनान्युपयुयोज यैः आयोगस्य विरोधं भारतस्य समस्तान्यप्यङ्गानि कर्तुं क्षमेरन्। भारतस्य सर्वेऽपि राजनी-तिकसमवायाः राष्ट्रियमहासभायां स्वकीयां पूर्णां सहमतिं दर्शयाम्बभूवुः। श्री पं० जवाहरलाल नेहरो विदेशादागमनाद् वहिष्कार नीति भृंशबलमवाप्नुत। श्रीमती एनीवेसेण्ट् च राष्ट्रियमहासभाया स्वस्मिन् प्रस्तावे नापत्ति मारोपितवती। सापि सहयोगिनी बभूव। सा तदावोचत—"क्षते लवणक्षेपो-ऽयम्"। श्रीदिनशावाचा अखिलभारतीयोदारदलनेता कमीशनं विरोद्धुं घोषणापत्रं प्रसारयामास अखिलभारतीयराष्ट्रिय-महासभा यदायोगं व्यरुणत् मुस्लिम लीग संस्था तत्स्वागत-ञ्चकार। परं तस्याः संस्थायाः सदस्येषु तस्मिन् विषये वैमत्य मुत्तस्थावत एकतरः पक्ष एव प्रत्युज्जगाम।

फरवर्यां, १६२८ तमेशवीयवर्षे यदा साइमनायोगो भारतागमनायोद्यत आसीत्, तदा लाला लाजपतरायः केन्द्रीय-व्यवस्थापिका सभायां प्रस्तावं प्रस्तुतीचकार। तत्रोक्तमासीत् "आयोगस्य योजनास्ति सर्वथा अमान्या। न कोऽपि सदस्यः

कस्यामपि भूम्यां, कस्मिन्नपि रूपे न तमिच्छति—तत्र हि स्व सम्बन्धं न निधित्सन्ति"। तदीयः प्रस्तावः स्वीकृतोऽभवत्। तस्मिन्नेव काले पं० मोतीलाल नेहरू प्राब्रवीत्—"शासनं सहयोगाशां तदैव कर्तुं शक्नोति, यदा साइमनायोगे भारतीयाः सदस्याः समानसंख्यायां समावेशिता भवेयुः।

साइमनायोगः सर्वत्रावज्ञातोऽभूत्; न कुत्रापि देशे जनता तत्र स्वानुकूलता मदर्शयत्। शासनं तं घोरं विरोधं न सोढु मशकत्। तत् साइमनकमीशनविरोधिषु कठोर मभूत्। जनतायां लगुडप्रहारः कृतः। लाला लाजपतरायो लाहौरे शासनस्यारक्षिभिः प्रहारै राहतः कृतः। लखनऊ नगरे पं० जवाहर लाल नेहरू, पं० गोविन्दवल्लभ पन्तश्च कठोरलगुड-प्रहारानसहेताम्। क्रान्तिकारी युवसमाजो न शासनस्यान्यायं सोढुं शशाक। तत्र निर्यातनात्मिका भावनोदियाय। यो हि सैण्डर्सो लाला लाजपतराये लगुडैः प्राहार्षीत्, तं ते पञ्चत्व मनैषुः। केन्द्रीयव्यवस्थापिका सभायां सरदार भगतसिंहो वटुकेश्वरदत्तश्च बमविस्फोटं चक्रतुः। तौ द्वावपि वन्दिनौ कृतौ। एतेन भारतीय जनता आयोगस्य पूर्णतया विरोध मकरोदिति स्पष्टं भवति।

साइमनायोगः स्वकीयं यत् प्रतिसंवेदनं प्रददौ, तस्य गम्भीरतया अध्ययनानन्तरं सूक्ष्मदृष्ट्या च तत्र विचारे कृते सति, मतिमन्तो ययु र्निष्कर्षमिमम्—'साइमनायोगेन भारतीयौ-पनिवेशिकस्वराज्यमन्तव्यता पूर्णतयोपेक्षितास्ति; सः केन्द्रे उत्तरदायिशासनस्थापनायाः पक्षे नास्ति। प्रदेशेषु यद्यपि स उत्तरदायिमन्त्रिमण्डलस्थापनाव्यवस्थायाः पक्षे वर्तते परं यै रभिरक्षणैः रक्षाकवचैश्च तेन राज्यपालः सज्जीकृत स्तेन स्पष्टीभवति यल्लोकप्रियोत्तरदायिमन्त्रिमण्डलं न किमपि मूल्यं, न च किमपि महत्त्वं निदधाति। अतः साइमनायोग-प्रतिसंवेदनं करण्डिकाक्षेपणार्हम्।

भारतक्रिप्सयोर्मध्ये या दीर्घा वार्ता प्रावर्तत सा संसारं ज्ञापयति यद् राष्ट्रियमहासभा नास्ति भारतस्य परमार्थतः प्रतिनिधिसंस्था। भारतीया सन्ति द्वैधीभावग्रस्ताः; अतः

नांग्लाः शक्तिं दास्यन्ति भारताय इति मौ० आजादो लिखति।

इदमपीहास्त्युल्लेखनीयं यद् भारतमन्त्री वर्कनहैण्डो भारतीयानां पारस्परिक भेदगतत्वं, नानाजातिभेदगत्वं, साम्प्रदायिकतापरत्वं च साइमनायोगेऽग्राह्यतायाः कारणभूतानि सन्ति 'इति निजगाद स इदमपि शशंस यद् भारतीयानां कर्त्तव्यमस्ति ते तादृशं विधानं प्रस्तुतीकुर्युः ब्रिटिश संसदः पुरस्ताद् यद् भवेत् सर्वसम्मतिसम्मतम्। भारतमन्त्रिणो विचारे भारतीयाः कदापि नैकमता भवितु मर्हन्ति अतः स तत्सर्वं व्यानक्। परं भारतीयास्तां प्रत्यर्थितां स्वीकृतवन्तः।

भारतीया नेतारः सर्वदलसम्मेलनमायूयुजन्। तत् सम्मेलनं १९२८ तमवर्षे देहल्यां बभूव। अत्र सम्मेलने सर्वाः संस्थाः राष्ट्रियमहासभा च भारतीयवैधानिक समस्यानां विचारः पूर्णोत्तरदायिशासन माधारं मत्वा करणीय इत्यत्रैकमता अभूवन्। भारतीयविधानसिद्धान्तरूपरेखां तत् (सम्मेलनम्) समित्याः कृते प्रस्तुतीचकार। समिते रध्यक्ष आसीत् पं० मोतीलाल नेहरू। समितिः सा सर्वदल सम्मेलनेनायोजितासीत्। तत्र समित्यां सदस्या आसन्निमे—सरतेजबहादुर सप्रू, सर अली इमाम, श्री एम० एस० अणे, सरदार मङ्गलसिंहः, श्रीशैवः, श्री जी० आर० प्रधानः, श्रीसुभाषचन्द्र वसुश्च।

नेहरू प्रसंवेदनं निम्नविधं संविधानं भारताय अकल्पत—

(१) भारतम्प्रति औपनिवेशिकं स्वराज्यं देयम्। तत्स्थानं च ब्रिटिशशासनान्तर्गतोपनिवेशान्तरमिव स्यात्।

(२) केन्द्रे पूर्णोत्तरदायि शासनं स्थापनीयम्। भारतस्य महाराज्यपालो लोकप्रियमन्त्रिणां परामर्शे वैधानिकप्रधानो भूत्वा कार्यं कुर्वीत।

(३) केन्द्रीयव्यवस्थापिकायाः सदने द्वे स्याताम्। मन्त्रिमण्डलं च भवेत् तदुत्तरदायि। अवरसदनस्य निर्माणं प्रत्यक्षनिर्वाचनपद्धत्यां वयस्कमताधिकारे च स्यात्। उच्च-

सदनार्थं परोक्ष निर्वाचन व्यस्था कार्या। समस्त केन्द्रीय विषयेषु व्यवस्थापिका सभायाः पूर्णं नियन्त्रण मिष्टम्।

(४) केन्द्र इव सर्वेषु प्रदेशेषु च पूर्ण मुत्तरदायि शासनं स्यात्। प्रदेशानां कार्यकारिणी प्रदेशीय विधान मण्डलानि प्रति पूर्णोत्तरदायिनी भवेत्।

(५) केन्द्रप्रदेशमध्ये शक्तिवितरणयोजनाभिरक्षणीया। स्याच्च केन्द्र मवशिष्ट(*Residuary*)स्वत्वसम्पन्नम्।

(६) साम्प्रदायिकनिर्वाचनं निरस्तं स्यात्। तत्स्थाने संयुक्तनिर्वाचनप्रथा प्रारब्धव्या; अल्पसंख्यकानां वर्गाणां कृते जनसंख्याधारे आरक्षणं दातव्यम्। सम्प्रदायः सम्प्रदायान्तरे निरङ्कुशं शासनं कर्तुं मर्हेत्। अल्पसंख्यकानां स्थानानि सुरक्षितानि स्यु स्तदर्थं ते निर्वाचनं कर्तुं प्रभवेयुः परं न तदर्थं गुरुभारप्रदानमपेक्ष्यते।

(७) ब्रिटिशभारतस्य प्रान्तान्तर मिबोत्तरपश्चिम वैधानिकं महत्त्व मश्नुवीत।

(८) बम्बई प्रान्तात् पृथक्कृत्य सिन्धुरपि प्रान्ताय कल्पेत।

(९) नागराणा मधिकारा विधित्वे परिणमनीयाः।

(१०) देशीयनरेशाणा मधिकारा विशेषा रक्षायै व्यवस्थापनीया। परं न ते भारतीये अलस्तरे (*ulstre)* परिवर्तनीयाः। संघातमके संविधाने (*Federal constitution)* ते तदैव समावेशनीया यदा तेषां राज्ये उत्तरदायिशासनं स्थापितं भवेत्; स्वेच्छाचारि च निरङ्कुशं शासन मवस्येत्।

नेहरूप्रतिसंवेदनात् का भारतीयेच्छा, कीदृशस्य च भारतस्य निर्माणं स्यादित्येतत् सर्वं स्फुटतया ज्ञातता मगमत्। शफ़ात अहमद खां तदतिमहत्वमय मिति वदन् रचनात्मको मनोज्ञः प्रयास इति ब्रूते स्म। डॉ० जकरिया च मुक्त कण्ठतया तत् प्राशंसत्।

दिसम्बर मासे १९२८ तमेशवीयाब्दे, राष्ट्रिय महासभा कलिकाताधिवेशने नेहरू प्रतिसंवेदनं स्वीचकार। सर्वदलसम्मेलनं तु प्रागेव तं श्रमं वर्धापनार्हं मेने।

युवसमुदायो हि सुभाषचन्द्रवसु-जवाहरलालनेहरूनेतृत्वे ततप्रतिसंवेदनंव्यरौत्सीत् परं म० गान्धिनः प्रयासेन राष्ट्रिय-महासभा प्रस्तावमिमं पारितवती।

सर्वदलसमितिद्वारेणप्रतिसंवेदने (नेहरूरिपोर्ट) शासन-विधानस्य या योजना प्रस्तुतीकृतासीत् तत्र विमर्शे कृते सति राष्ट्रियमहासभा तां प्रत्युद्गम्य, तां च भारतस्य राजनीतिक साम्प्रदायिकसमस्यानां समाधानाय निराकरणाय चातिसाहाय्य प्रदामवगच्छति; समस्तसंस्तुतिं च सर्वसम्मत्या पारितां नेतुं समितिञ्च प्रशंसति। इयं राष्ट्रियमहासभा मद्रासराष्ट्रियमहा-सभायाः पूर्णस्वाधीनतापरके निश्चयेऽस्ति सुस्थिरा, तथापि समितिप्रस्तुतीकृतविधानं राजनीतिकप्रगतिदिशाया मेकं महनीयं पदं मत्वा तां योजनां (संविधानम्) स्वीकुरुते। अस्ति यौजना नूनं देशस्य मुख्य मुख्य राजनीतिकेषु दलेषु यावानधिको मैत्रीसम्बन्धः स्थापितो भवितु मर्हति तावन्तं सर्वमपि सम्बन्धं सूचयति।

चेद् ब्रिटिशसंसद् विधानमिदं यथायथ ३१-१२-१९२९ दिनांङ्कं यावद् वा प्रोक्ताद् दिनाङ्कात् प्राक् स्वीकुरुते तदा राष्ट्रियमहासभा विधानमेतत् स्वीकरिष्यति। परं, यदि तं दिनाङ्क यावद् ब्रिटिशसंसत् स्वस्वीकृतिं न प्रयच्छति किं वा तामस्वीकरोति, तदा राष्ट्रियमहासभा करनिरोधपरकं परा-मर्शं प्रदायोपायान्तरेण, यस्य विषये पुनः कथितं स्यात्, अहिंसात्मकमान्दोलनमायोजयिष्यति।

अत्रेदमपि ज्ञातव्यमस्ति यन्नेहरूप्रतिसंवेदने केचन जनाः (लीगस्थाः) व्यवदन्त (तत्र लीगसंस्थायां वैमत्यं प्रास्फुटत् राष्ट्रियसहासभायाः युवकदल-पुरातनदलयोर्न राष्ट्रियमहा-सभाया असहमतिः प्राप्यत) परं तत्प्रभावो न निपतितु मार्हत्।

म० गान्धी कलिकाता राष्ट्रियमहासभाधिवेशने उपरि-निर्दिष्ठं प्रस्तावं निदधावभवच्च सः पारितस्तत्र। महासभा चांग्ल शासन मचेतयद् यद् यदि शासनं ३१।१२।२९ दिनांक-मिदं न स्वीकरोति तदा तदुद्देश्यं भवेत् पूर्णं स्वातन्त्र्यम्। शासन मुक्ता मवधिं यावन्न किमपि ध्यानं तत्राचकर्ष। अतः

राष्ट्रिय महासभा नियतेऽह्नि स्वोद्देश्यं पूर्णं स्वातन्त्र्यं घोषयामास ।

१९२९ तमेशवीयवर्षे जाते निर्वाचने श्रमिकसमुदाय इंगलैण्डे विजयी बभूव अतः राष्ट्रियमहासभा तत्राशां बबन्ध परं सा नियताह्नः परस्तात् न प्रतीक्षते स्म । निर्दिष्टमिदं वर्षं मशान्तिमादाय समागमत् । श्रमिका मध्यमवर्गश्च स्वसंगठनस्य दृढीकरणेऽलगन् । हिंसात्मिकायाः प्रवृत्ते विकासोऽनुदिन मवर्धत । वङ्गेषु श्रमिकाणां स्थिति रासीच्छोचनीया । जमशेदपुर-बम्बय्यादिनगरेषु श्रमिकाः स्वस्वकार्यं हित्वावातिष्ठन्त । ततः शासन मत्यत्रस्यत् । संघर्षो वस्तुत स्तदा बलीयान् भूत्वाजागः । शासनं कठोरतया दमनं कर्तु मारेभे । सा क्रान्ति 'मेरठ षड्यन्त्राभियोग' नाम्ना विचख्यौ । श्रमिकनेतारो मेरठवन्दिशालायां प्राक्षिप्यन्त । चिन्ताप्रदाकारः सन् समयो वस्तुतः समतिष्ठत ।

शासनं श्रमिकान्दोलनं निग्रहीतुं नाक्षमत । आंग्लकूटनीतिविद्भिः सह विचार्य्य इंगलेण्डान्निवृत्तस्य महाराज्यपालस्य इरविनस्य घोषणानातूतुषत । देशीयराज्यानां समस्या औपनिवेशिक स्वराज्यस्य च प्रश्नस्तत्रासमाहित एवावर्तत । तस्या घोषणाया नितान्तकूटत्व मवश्य मदृश्यत । राष्ट्रियमहासभा तदानीमपि नाजहान्मार्दवम् । युवनेतृसमुदायं सा घोषणा आंग्लेषु उद्वेग मजनयत् । इंगलेण्डे श्रमिकाणां शासनं भारतीयस्थित्यां चिन्तितमानसमलक्ष्यत । महाराज्यपालकृतघोषणा मधिकृत्य इंगलेण्डसंसदि विवादः प्रावर्तत । अनुदारवादिनः कट्वालोचनां चक्रुः । इंगलैण्डे जाता प्रतिक्रिया भारतीयाना स्वान्ते निराशामेवोदपीपदत् ।

## षष्ठः परिच्छेदः

अथ राष्ट्रियमहासभाया अधिवेशन भावि लाहौरे निश्चित मभूत्। म०गान्धी ततः प्रागेव महाराज्यपाले इरविने मिलित्वा स्थिति स्पष्टीकर्तुं मचकमत। तस्यां वार्तायां पं० मोतीलाल नेहरू, वल्लभ भाई पटेलो जिन्ना च सम्मिलिता अभूवन्। तस्मिन्नेवाहनि महाराज्यपालस्य रेलाख्यवाहनोपरि वमक्षेपोऽक्रियत परं सः प्रयासो मुधा बभूव। तद्दुर्घटनाचर्चानन्तरं म० गान्धी ज्ञातु मिदमैच्छत् यत् किं लन्दने गोलमेज-परिषद् भारतार्थं मौपनिवेशिक स्वराज्याधारे नवसंविधान-निर्माणाभिप्रायेणाकार्यते। परं महात्मानं गान्धिनं, पर्यनुयोगेऽस्मिन् महाराज्यपाल आश्वासयितुं न शेके। तन्मेलनं व्यर्थं मभवत्।

एकोनत्रिंशदधिकैकोनविंशतिशततमेशवीयाब्दे लाहौरे सञ्जातं राष्ट्रियमहासभाधिवेशन स्वकीय मेवोत्कृष्टत्व माव-हति। अधिवेशनस्य तस्य सभापति र्नवयुवकहृदयसम्राट् वाम-पक्षनेता पण्डितो जवाहरलाल नेहरू आसीत्। इदमधिवेशनं लवपुरे (लाहौरे) नदी (रावी) तटे गम्भीरे समीरणावरणे प्रचक्रमे। शासननीतिवशात् स्थितिः पर्याप्त गम्भीरतावती समजायत। औपनिवेशिकस्वराज्यावाप्त्यवधिश्च समाप्ति गतासीत्। सम्प्रति तल्लक्ष्य मौपनिवेशिकं स्वराज्यं मासीत्। आसीत् तत् पूर्णं स्वातन्त्र्यत्वम्।

प्रस्ताव आसीदीदृम्—

"औपनिवेशिकं स्वराज्यमधिकृत्य २१.१०. दिनाङ्के महाराज्यपालकृतायां घोषणायां राष्ट्रियमहासभाया दलान्त-रस्य च नेतार एकीभूय वक्तव्यं यत् प्रकाशितवन्त स्तत्सम्बन्धे च जातं कार्यकलाप मेषा राष्ट्रिय महासभा परिपुष्णन्ती स्वराज्यनिमित्तेनाङ्गीकृतराष्ट्रियान्दोलनस्य निर्वहणाय महा-

परिषत्सु (कौंसिलेषु) समितिषु च विद्यमानान् राष्ट्रियमहा-समासदस्यांत्त्यागपत्रार्थं मनुरुणद्धि। इयं राष्ट्रिय महासभा स्वरचात्मकं कार्यक्रमं पूरयितुं सोत्साहं राष्ट्रमनुरुन्धे महासभां च प्रत्यधिकारं ददाति यत् सा यत्राभिलषेत यदा च वाञ्छेत्, अपेक्षितैः प्रतिबन्धानुबन्धैः सह सविनयावज्ञां कररोध विषयकं च कार्यक्रममारभेत"।

२.१.१९३० दिनाङ्के जाता कार्यकारिणीसमितिः २६.१.१९३० दिनाङ्के पूर्णस्वराज्यदिवसः स्यान्मानित इत्येत-दुद्घोषयाञ्चकार। अत्रेदमपि स्मरणीयं यद् राष्ट्रियमहा-सभायाः स ऐतिहासिकः प्रस्तावोभूयोभि र्मतैः पारितोऽभूत्। विरुद्धमतदायिनस्तत्राभूवन् पञ्चदश एव। अधिवेशनान्तर मेव वामपक्षिणः "कांग्रेसजनतन्त्रवादिदलं स्थापयामासुः। तस्य नेतारा वास्तां सुभाषचन्द्र बसुः श्री निवास आयङ्गरश्च। तौ राज्यपालकृतयत्नानाद्रियेते। घटितानां चान्यासां घटनानां, महाराज्यपालेन च सह म० गान्धि-पण्डित मोतीलालप्रभृति-नेतृणां वार्तायां फलं यत् पुरः समागतं, तत्र कृते विचारे, राष्ट्रियमहासभात्मानं निश्चय मिमं नयात यत् सम्प्रति गोल-मेजपरिषत्सम्भावनं व्यर्थम् अतः गतेवर्षे कलिकाताधिवेशने कृतं निश्चयमनुमन्यमाना महासभेयं घोषयति यद् राष्ट्रियमहा-सभाया लेखन्याः प्रथमे कल्पे 'स्वराज्य' शब्दस्यार्थोऽस्ति पूर्ण-स्वाधीनतेति। राष्ट्रियमहासभेदमपि घोषयति यन् नेहरूप्रति-संवेदने वर्णिता सकला योजना समाप्ता मता भवेत्। राष्ट्रिय-महासभाऽऽशास्ते यद् राष्ट्रियमहासभायाः सकला जनाः स्व-चेतो भारतवर्षस्य पूर्णां स्वाधीनता मवाप्तुं योजयेयुः। स्वाधी-नतान्दोलनस्य संगटनं, राष्ट्रियमहासभाया नीत्या नवध्येयानु-कूलनञ्च साम्प्रत मपेक्ष्यते। अतः राष्ट्रियमहासभा निश्चिनोति यद राष्ट्रियमहासभावादिनोऽन्ये च राष्ट्रियान्दोलनभागग्रही-तारो भाविनि निर्वाचने प्रत्यक्षतया न भागं गृह्णीयुः; अथ च कांग्रेसादपृथगेव सन्तौ कांग्रेसकार्यक्रमे सहयोगप्रदावर्जायेताम्।

समग्रेऽपि देशे, नगरे नगरे, ग्रामे ग्रामे घोषणा पत्रं पठितं श्रावितञ्चाभूत्। हस्तमुद्यम्य च जनतायाः सम्मतिः

समासादिताभवत्। घोषणापत्रस्याशय इह निधीयते—

"वयं भारतीया जनाः सम्राजः प्रजाः राष्ट्रान्तरस्य जनाइव स्वजन्मसिद्धाधिकारं प्रार्थयामहे यद् वयं स्वतन्त्रा भूत्वा स्वपरिश्रमस्य फलं भजाम; वयं स्वजीवनं निर्वोढु मपेक्षितान्यानुकूल्यानि लभामहै; येन वयं विकासार्थं पूर्णं सदवसरं लब्धुं शक्नुयाम। वयमिद मपि मन्यामहे यद् यदि काचिच्छक्तिः (शासनम्) इममधिकार मपहरति प्रजाश्च सा व्यथयति तदा प्रजास्तां शक्ति शासनं वा परिवर्तयितुं वा निषूदयितु मपि स्वकीयं स्वत्वं निदधाति। आंग्लशासनेन भारतौकसां स्वतन्त्रतैव नापहृतास्ति अपि तु तत् निर्धनजनशोणितशोषणेऽपि संलग्नं वर्तते। तद् धार्मिक-राजनीतिक-सांस्कृतिकाध्यात्मिकदृष्टया च भारतं क्षिण्वदवतिष्टते। अतोऽस्माकमस्ति विश्वासो यद् भारतं मांग्लेभ्य आत्मानं पृथक्कृत्य—तस्मिन् सम्बन्धमुच्छिद्य—पूर्णस्वराज्यं वा पूर्णा स्वाधीनता मश्नुवीत। येन शासनेनास्माकं सर्वस्वमपि विनाशितं तदधीनतायां जीवितस्य धारणं मनुष्यं भगवन्तं च प्रति अपराधाचरणं विद्यते। परं वयमिदमपि मन्यामहे यद् वयं हिंसया स्वतन्त्रतां न प्राप्तुं शक्नुमः। अतो वयं ब्रिटिशशासनेन सह यथासम्भवं स्वेच्छापूर्वकञ्च सहयोगानाचरणाय सज्जां विधास्यामः। सविनयावज्ञायाः कररोधस्य च कृते प्रसाधनानि प्रगुणीकर्तुं यतिष्यामहे। अस्माकं मय मपि दृढीयान् विश्वासोऽस्ति यत् स्वेच्छया साहाय्यानुवर्तनं किञ्चोत्तेजना मन्तरेण, विना हिंसां कररोधं कर्तुं क्षमाश्चेत् सञ्जाता स्तदावश्यमेवास्यामानुषराज्यस्य नाशो निश्चितः। अस्मातकारणाद् वयं शपथपूर्वकं सङ्कल्पं कुर्मो यत् पूर्णस्वराज्यप्राप्तिहेतुना राष्ट्रियमहासभा समये समये यां यामाज्ञां प्रदास्यति तस्यास्तस्या आज्ञाया वयं पालनं करिष्यामः"।

लाहौराधिवेशननिश्चयानुसारं राष्ट्रियमहासभायाः सदस्याः परिषद्भ्य. (कौंसिलेभ्यः) त्यागत्रं प्रददुः। २६।१।१९३० दिनाङ्के, सर्वत्रापि देशे प्रमोदोत्कटोत्साहेन सहर्षोल्लासं स्वतन्त्रतादिवसमारोहो मानितोऽभूत्।

कार्यक्रमोऽयं जनतायां नवां चेतनां जागरयामास। श्री डॉ० पट्टाभिसीतारमैया आह—"स्वाधीनतादिवसो येन विधिनायोजितो मानितश्चाभूत् तेन प्रकटीभूतमिदं यदुपरिदृश्यमानायाः शिथिलताया निराशायाश्च तलेऽसीमसद्भावनाया उत्साहस्य स्वार्थाभावस्य त्यागस्य च महत्ता सज्जीभूता भूत्वा स्थितासीत्। स्वदेशभक्तिभावस्यात्मबलिदानस्य चाङ्गारा राजभक्ति विधिव्यवस्था-दासताभस्मनावृता एवासन्। भावनोत्साहाङ्गारेषु नियतितभस्मनः श्वासवेगेन निवारणमेवापेक्षित मासीत्[1]।

तदा महाराज्यपालस्य वक्तव्येन शासनं भारतीयवाञ्छितेष्वस्त्यरुचिमदिह स्पष्टतां गत मासीत्। तज्जनताया उत्साहं राष्ट्रियभावनां च चूर्णयितुं निरचिनोत्। किमपि न किमपि कारणं गृहीत्वा देशे राष्ट्रियमहासभाया जना बन्दिनोऽक्रियन्त। मेरटस्य ३२ अभियुक्तेष्वेकं विहाय सर्वे सात्रिकाधीनाः कृताः। कलिकातायामपि सुभाषचन्द्रवसुस्तस्यैकादशभिः सहचरैः सह वर्षैकव्यापिनादण्डेनादण्ड्यत्। राष्ट्रियमहासमाज्ञया १७२ सदस्याः कौंसिलानि तत्यजुः। फरवर्या १४, १५, १६ दिनाङ्केषु सावरमत्यां कार्यसमिति रूपाविशत्। सा सविनयावज्ञान्दोलनार्थं प्रस्ताव मङ्गीकृतवती। तत्र म० गान्धी तस्य विश्वासास्पदसहचराश्च सविनयावज्ञान्दोलनस्याधिकारमवाप। प्रस्तावोऽयम्—

"कार्यसमितिमत्यां सविनयावज्ञान्दोलनं तै रेव जनैः प्रारभ्येत सञ्चाल्येत च ये स्वराज्यप्राप्त्यर्थं महिंसायां धार्मिकं विश्वासं निदधति। राष्ट्रियमहासभायाः संगठने सर्वेषामपि स्त्री-पुरुषाणां धृताहिंसाश्रद्धत्वात् 'अहिंसा देशस्य वर्तमानस्थित्यां नीतिरिवेत्येतां धारणां ये पुष्णन्ति तेषा मपि जनाना मिह समाविष्टत्वात्, कार्यसमिति महात्मगान्धिनः प्रस्तावम्प्रति स्वागतं करोति किञ्च तमहिंसायां धृतविश्वासान् जनांश्च प्रति प्रददात्यधिकारं यदा येन प्रकारेण यावतौचित्येन युज्येत

१ डॉ० सीता पट्टाभिरमैया, कांग्रेस का इतिहास, पृ० २८९, २९०।

सविनयावज्ञान्दोलनं ते चालयेयुः। कार्यसमिते विश्वासोऽयं यद् यदान्दोलनं वस्तुतो गतिमद् भवेत् तदा सर्वे राष्ट्रियमहासभावादिनोऽन्ये च जनाः सर्वथैव सत्याग्रहिणां कृते पूर्णं सहयोगं प्रयच्छेयुः। महत्त्यां महत्तरायाञ्च संधुक्षणायाम् अहिंसां सर्वथैव ते रक्षेयुः। कार्यसमितिरिमामप्याशां परिपुष्णाति यद् आन्दोलने सति प्रतते सर्वसाधारणेषु विधिज्ञप्रभृतिविद्वांसो, ये शासने स्वेच्छया सहयोगिनः सन्ति, विद्यार्थिनश्च, ये शासनात् कथितं लाभमुपभुञ्जन्ति, तं सहयोगं तं च लाभं त्यजेयुः; किञ्च स्वतन्त्रताया एतस्मिन् अन्त्ये समरे ते सर्वे जुहुयुः'।

इतः कार्यसमितेः सविनयावज्ञान्दोलनार्थ मधिकारं म० गान्धी तत्सहचराश्चालप्सत; इतो महाराज्पालप्रदत्तं भाषणं देशे निराशां व्यातनोत्। म० गान्धी शासनस्यपुरः एकादशसमयकं प्रस्तावं निदधौ, परं न तस्य कोऽपि प्रभावः शासने पपात। म० गान्धी "*Young India*" पत्रे स्पष्टं शशंस चेच्छासन मेकादशसमयान् अभ्युपागमिष्यत् तदा सत्याग्रहान्दोलनं नापेक्षित मभविष्यत्। एकादशसमया एते—

(१) सम्पूर्णमदिराप्रतिषेधः।

(२) विनिमयस्य प्रमूल्यं न्यूनीकृत्य १ शिलिंगः ४ पेंशाः स्युः।

(३) भूराजस्वमर्धतां नीतं स्यात् तत्र च परिषन् (कौंसिल) नियन्त्रणं भवेत्।

(४) लवणस्य करोन्मुक्तता स्यात्।

(५) सैनिकव्यय आरम्भत एव न्यूनतरः कृतो भवेत् तत्र ५० प्रतिशत न्यूनता कृताभवेत्।

(६) भूराजस्वन्यूनतादृष्ट्योच्चोच्चतरसेवानां भृतिरर्धा तु कार्यैव।

(७) वैदेशिकवस्त्रायाते निषेधकर आरोपितो भवेत्।

(८) भारतीय समुद्रतटानि भारतीय जलपोतानामेव कृते सुरक्षितानि स्युस्तत्सुरक्षणप्रस्तावितविधिः पारिततां नीतो भवेत्।

(९) हत्यायां हत्याप्रयत्ने वा साधारणन्यायदिशा

(ट्रिव्यूनलेन) दण्डितान् विहाय सर्वे राजनीतिका वन्दिनो मुच्येरन्। सर्वे च राजनीतिकाभियोगाः परावर्तिता भवेयुः; १२४ अ, १८१८ तमाब्दीयो विधिस्तृतीयो नियमः (रेग्यूलेशनम्) दूरीकृतः स्यात्) सर्वे च निर्वासिता भारतीया देशागमनायानुमताः स्युः ।

(१०) गुप्तचरारक्षिणोऽपसारिता भवेयुः किं वा तेषामुपरि जनताया नियन्त्रणं स्यात् ।

(११) आत्मरक्षायै शस्त्रनिधानाधिकारपत्राणि प्रदीयेरन्; तत्र च जनताया नियन्त्रणं भवेत् ।

सविनयावज्ञान्दोलनारम्भात् प्राक् सः पुनः सकृत् संघर्षरोधाय प्रायतिष्ट; भूयश्च स राष्ट्रियमहासभया सह सन्धातुं शासनम्प्रति प्रायच्छदवसरम् । प्रयोजनमिष्ठस्य स्वीकरणमेवासीत् । पत्र मेंकं सः स्वकीयेन आंग्लमित्रेण रेजोनाल्ड रेनाल्डसेन लॉर्ड मिरविनम्प्रति प्रहित मकारयत् । पत्रस्यान्ते लिखित मासीत् "यदि ममवशे भवेत् तदानपेक्षितं तु दूर आस्ते किमपि काटिन्यं स्वल्पमपि न भवतः पुरः समुपस्थापयेयम्; यदि भवान् मम पत्रे कमपि सारमीक्षेत; मया च सह वार्तां कर्तुं मभिलषेत; हेतुनानेन प्रकाशनेऽयं रोधो भवत्प्रियोभवेत् तदा तारेण अनुगृह्णातु भवान्; अहं सहर्षं भवेयं निवारितः। परं यदि भवान् पत्रस्यास्य सार मपि नाङ्गीकुर्यात् तदा कृपया मां मत्सङ्कल्पान् न वर्जयतु। नास्य पत्रस्य हेतुस्त्रासनं वा भापनमिदन्तु सत्याग्रहिणः साधारणं पावनं कर्त्तव्यम्[1] ।

पत्रस्यास्योत्तरं महाराज्यपालोऽतिसंक्षिप्तं प्रददौ। स लिलेख "भवान् कुव्यवस्थोद्भावयत्कार्यं कर्त्तुं मुपक्रमते। भवत्कार्याच्छान्तं वातावरण मवस्येत्"। म० गान्धी तदुत्तरमित्थं प्राददात्—"मण्डक प्रार्थितः, पाषाणः प्राप्तः। आंग्लजातिः शक्त्यैव वशंगता भवितुं शक्नोति; अतः महाराज्यपालस्योत्तरं न मां विस्माययति स्म। अस्मद्देशस्य भाग्ये तु कारागृहशान्तिः। सकलमपि भारतं विशालः कारागारः। अहं मिमं विधिमांग्लीयं प्रतिषेधामि; एतस्या बलात्कारपूर्णायाः

१. डॉ० पट्टाभिसीतारमैया : कांग्रेस का इतिहास, पृ० ३००

अमानुषीयाया एकरसताया भञ्जनं स्वपवित्रं कर्त्तव्य मव गच्छामि। अनया शान्त्या राष्ट्रस्य गलोऽस्त्यवरुद्धः। इदानीं तद्गलस्य चीत्कारः प्रकटीभवेत्[1]।

महात्मा गान्धी महाराज्यपालम्प्रति समुचितं चेतनाप्रदं कर्त्तव्यं प्रदर्श्य एकोनाशीति सहचरैः सह १२.३.१९३० दिनाङ्के दाण्डी स्थानं प्रतस्थे। ते ७९ सहचरा आश्रमवासिनो विद्यापीटस्य च छात्रा अगृह्यन्त। म० गान्धिनः प्रस्थानात् प्रागेव श्रीवल्लभभाई पटेलो ग्रामाटनाय निर्गत आसीत्। स आगामिनि कष्टानि सोढुं ग्रामजनतां सन्नद्धीकर्तुं प्रययास। शासनं मार्चस्य प्रथमे सप्ताहे तं वन्दिनञ्चकार। तद्वन्दितायाः प्रदेशेऽपतदसत्प्रभावः। सौराष्ट्रप्रदेश आन्दोलने सक्रियं भागं परिग्रहीतुं निश्चयं विदधौ। पथि सर्वेऽपि जनाः दीप्यमानेनोत्साहमयेन विधिना सत्याग्रहिणः प्रत्युज्जग्मुः। तत्र 'बॉम्बे क्रॉमिकल' पत्रं लिलेख—"एतस्या महनीयाया राष्ट्रियाया घटनायाः प्राक् तया च सार्धमेव अर्वाग् यानि दृश्याणि दृग्गोचराण्यभूवंस्तानि दिव्यशोभा युतान्युत्साहपूर्णानि जीवन सञ्चारकाणि चासन्। तेषां वर्णनं न सम्भवम्। अस्मिन् महति सदवसरे मानवानां हृदयेषु देशप्रेम्णो यावती वलीयसी वीचिः प्रावहत् तावती न पुरा कदापि प्रावहत्। स महान्दोलनस्य महोपक्रम आसीत्। निश्चयतया भारतस्य राष्ट्रियस्वातन्त्र्येतिहासे तन्महत्त्वपूर्णं पदं भजते"।

म० गान्धी ५।४। तिथौ प्रभाते दाण्डी माजगाम। तत्र च लावणं विधिं विबभञ्ज। एवमेव भारतस्य सर्वेषु भागेषु जनाः स्वयं लवणं कृत्वा विधि मुलङ्घयामासुः। सर्वेषु च नगरेषु महत्यः सभाः अभूवन्। तत्र लक्षशो जना उपतिष्ठन्। शासनं स्वसमग्रशक्त्यान्दोलनं नाशयितुं प्रायतिष्ट। परं न तत् तत्र सफलता मियाय। ५।५। दिनाङ्के, रात्रौ १ वादन समये म० गान्धी वन्दितां नीत। स यरवदाकारागारं च प्रति निस्तब्धतया प्राहीयत।

म० गान्धिनो वन्दित्वाद् देशस्यैकस्या दिशो दिगन्तरं

१. डॉ० पट्टाभिसीतारमैया : कांग्रेस का इतिहास, पृ० ३००

यावद् देशभक्तितरङ्गाः सर्वत्रोद्दामवेगेन प्रावहन्। तद्वन्दितो-दन्ते प्राप्ते सत्येव, बम्बई-कालिकातादिनगरेषु स्वेच्छापूर्वकं सम्पूर्णं कार्यं विरततां नीत मभवत्। वन्दितादिनात् परस्ता-दपि दिने व्यापकः कार्यविरामोऽघटत्। बम्बय्यां विशाल-जन-प्रदर्शनमघटत्। सायं विशालविशालतरा सभाः समजायन्त। उद्योगागाराश्चाभूवन् विरतकार्याः। श्रमिकाश्च विरोध-प्रदर्शनाय कार्याण्यत्यजन्। जी० आई० पी० आर०, बी० बी० सी० आर० उद्योगागाराश्च प्रसुप्ता अजायन्त तत्रत्यानां सर्वेषा-मपि श्रमिकाणां त्यक्तस्वस्वकार्यत्वात्। म० गान्धिनो वन्दितायां रोषप्रदर्शनाय वसनव्यापारिणः षड्दिनानि स्वापणान् आवृत-कपाटांश्चक्रुः। सहस्रशोजना राजकीय पदान्युज्झाञ्चक्रुः। समग्रोऽपि देशो महात्मनो गान्धिन आदेशं पालयित्वा विश्वस्य समक्षे दिव्य माश्चर्यं वितेने। एकद्विस्थानयो रूपद्रवोऽपि जातः। शोलापुरे आरक्षिणां गुल्मस्थानानि भस्मीकृतानि। तत्रारक्षिणो गोलिकाः प्रयुयुजु स्तेन पञ्चविंषति जना मम्रुः, सहस्रशश्च जना आहता अभूवन्। कलिकाताया कार्यकलापनिरोधः शान्तिपूर्वकं प्राचलत्। हावड़ा पञ्चतल्ल्योः जनसम्मर्दमपसार-यितु मारक्षिणो गोलिकाः प्रायुञ्जत। म० गान्धिनो वन्दि-त्वात्, सवमेव जगद् बभूवविचलितम्। पनामायांभारतीया कार्यं विरमय्य रोषं प्रकटीचक्रुः। सुमात्रादेशस्य पूर्वीय समुद्र-तटवासिनो भारतीया अपि रोषमभि व्याञ्जिषुः। ते महाराज्य-पालं राष्ट्रियमहासभां च प्रति तारं सम्प्रेष्य गान्धिनो वन्दितायां खेदं प्रकाशयाञ्चक्रुः। फ्रान्सदेशस्य पत्राणि महात्मनो गान्धिनो वन्दितावृत्तैः परिपूरितान्यासन्। वहिष्का-रान्दोलनं जर्मन्यां च निपपात। तत्रत्यान् वस्त्रव्यापारिणः प्रति भारतीया व्यापारिणो वस्त्रप्रेषणाय प्रतिषिषिधुः। तदानीन्तनस्य रूटरस्याध्ययनेन ज्ञायते यत् तदोद्योगागाराः महतीं हानि मगुः।

शासनं जनतायां सत्याग्रहिषु च अतिकठोरं व्यवहारं विदधौ। आसीत् स व्यवहारोऽमानुषिकः। बम्बय्या न्यायागार-स्य खलीफाभिधानो भूतपूर्वो न्यायाधीशः श्री हुसैनः, श्री के०

नटराजन्, भारतसेवकसमितेश्चाधिकारी श्री देवधरो धरसाना-धावनं द्रष्टुं स्वयमीयुः। ते तदेव मवर्णयन्—

"वयं स्वयं स्वाक्षिविषयीकृतवन्तो यत् सत्याग्रहिणो नगरसोमातो दूरीकृत्यापि यूरोपियना अश्वारोहिणो लगुडपाणयो भूत्वा स्वकीयांस्तुरङ्गान् द्रुतं धावयन्तः स्त्रियः पुरुषान् बालांश्च कान्दिशोकान् कुर्वाणा सत्याग्रहिणोऽनु-गच्छन्तश्च ग्रामान् यावत् जनान् निजघ्नुः। ग्रामवासिनस्तदा पलाटय तेषां लगुडेभ्य आत्मानं रक्षितुं प्रयेतिरे परं सत्यपि तथा बहवो जना तल्लगुडप्रहृता एकाभूवन्।

न्युफ्रीमेनपत्रस्य सम्वाददाता वेलमिलरो धरसानायां घटितं घृणितं दृश्य मित्थ मकलयत्—

"द्वाविंशतिदेशेषु संवाददातृकर्मानुतिष्टतो मम अष्टा-विंशतिवर्षाण्यतीतानि। अस्मिन् महति कालेऽसख्योपप्लवान् विद्रोहान् हतिमाहतिं चाह मपश्यम्, परं धरसानायां घटितानि पीडाजनकानि दृश्याणि न कदापि दृष्टानि। कदापि तु तानि तथा दुःखदान्यजायन्त यदहं द्रष्टुं नाशक्नुवं, स्वनेत्रे मया निमी-लितेतराम्। हन्त, स्वयंसेवकानामनुशासनमद्भुतमेव किमपि वस्त्वासीत्। ते म० गान्धिनोऽहिंसाधर्मं, मन्ये, सम्पेय पिबन्ति स्म"।

लवण-विधिभञ्जनं व्यतिरिच्य तदा वैदेशिकवस्त्र-मादकद्रव्यबहिष्कारश्च कृतोऽभूत्। तत्रापि सहस्रशो जना न्यपीडयन्त। तत्तद् विपणिपुरःस्थिताः 'न तद् वस्तु गृह्णन्तु, न वैदेशिकं वासः क्रीणन्तु, न मद्यञ्च क्रीणन्तु' इत्येतद्विध-प्रतिषेधकर्तारः स्वयंसेवकाः अद्भुतमेवानुशासनं पालयन्तः कष्टानि चासह्यानि सहमानाः अवालोक्यन्त।

एकतस्तदा शासनस्य दमनचक्रं प्रबलगत्या चलद् दृष्ट मभूत्। एकतश्चान्दोलनं तीव्रेण रयेण प्राद्रवत्। शासनस्या-मानुषिको व्यवहारोऽत्याचारश्च रोमाञ्चकृद् यद्यपि प्रवर्तमान आसीत् परं सत्याग्रहिणा मनुशासनपरतापि तदा नितरामेव श्लाघनीयैव दृष्टा समजायत। शासनस्य आरक्षिणः सैनिकाश्च यान्यपि कठोरकठोरतराणि कष्टानि दातुं क्षमा अभूवंस्तानि,

कष्टानि ते कठोरहृदया भूत्वा अपातयन्। आरक्षिणस्तु विद्यालयेषु प्रविश्य प्रविश्य छात्रानध्यापकांश्च प्रताडयाञ्चक्रुः। तदा सहस्रशो जना वन्दिनः कृत्वा कारागारेषु प्राक्षिप्यन्त। अस्मिन् समये महाराज्यपालः सामान्यव्यवस्थां परित्यज्य त्रयोदशाध्यादेशान् प्रायुङ्क्त। तद्द्वारेण जनता भृशं प्रापीड्यत। षष्टिसहस्रजनाः कारागारेक्षिप्ताः। शतशो जना गोलिकाभि रहन्यन्त; सहस्रशश्चाहता अभूवन्। एतावतापि नान्दोलनं शैथिल्य मगात्।

तदानीं सोलौकोम्बनामा कश्चिदांग्लपत्रकारो यर्वदा-कारावासे प्रयाय महात्मनिगान्धिनि मिमेल। कैः कैः समयै-रान्दोलनं स्थगितं भवितुं शक्यं; कांश्च समयानाधारीकृत्य राष्ट्रियमहासभा गोलमेज' परिषदि भागं ग्रहीतुं शक्नोनीत्ये-तदाशक्षं रायकं तन्मिलनोद्देश्यमासीत्। म० गान्धी तदावादीत् तं, स तं समयं यावदान्दोलनं न निवर्तयितु मीष्ठेयावत् स तद् आश्वासनं न लभते यत्र भारतम्प्रति स्वतन्त्रताप्रदानवचनं दत्तं भवेत्। सः सत्याग्रह-संवरणार्थं चतुरः समयान् निदधौ। सोलौकम्बस्तदुद्देश्येनैव पं० मोतीलाल नेहरौ, पं० जवाहरलाल नेहरौ चामिलत् नैनीकारागारे। ततश्च तत्परामर्शेण वक्तव्य मेकंप्रस्तुतीचकार; तदवलम्ब्य शासन-राष्ट्रियमहासमयोर्मध्ये सन्धानवार्ता भवितुं शक्यासीत्। अस्मिन् कार्ये डॉ० जयकरः सरतेजबहादुर सप्रूच प्रददतुः स्वयोगमपि परं तत्प्रभावोऽभूद् व्यर्थः। आन्दोलनं क्षिप्रं स्यात् स्थगितमितीयेष शासनं, परं राष्ट्रियमहासभा न तदुचितं मेने। महाराज्यपालस्योचिताश्वा-सनाप्रदानत्वात् सा नाश्वस्तासीत्। सन्धानप्रयासोविफलोजातः, आन्दोलनमपि यथापूर्वंप्राचलत्।

सन्धानप्रयासस्य निष्फलत्वाच्छासनं लन्दने गोलमेज परिषद मायूयुजत्। तदधिवेशनं १२।११।१९३० दिनाङ्के लन्दने सञ्जातम्। तत्र षडशीतिप्रतिनिधयो भाग मगृह्णन्। तेषु त्रयो दश (ग्रेट) ब्रिटेनस्य, षोडश देशीयराज्याना मवशिष्टाश्च सप्तपञ्चाशत् ब्रिटिश-भारतस्यासन्। ब्रिटिशभारतस्य प्रति-निधीन् महाराज्यपालो निरचैषीत्। न राष्ट्रियमहासभा

स्वप्रतिनिधि मेकमपि प्राहिणोत् । राष्ट्रियमुसलमाना अपि न तत्र स्थान मलप्सत । प्रथमगोलमेज परिषदि सम्मिलितान् प्रतिनिधीन् लक्ष्यीकृत्य वेल्स फोर्डष्टिप्पणीं कृतवान्—

"सेण्टजेम्सप्रासादे भारतीया नरेशाः' हरिजनाः, सिक्खा, मुसलमानाः, हिन्दवः, ईसाइनो, भूमिधराः, श्रमिकाः, वणिजश्च प्रतिनिधयः सम्मिलिता अभूवन्, परं न तत्र भारतमातोपस्थितासीत् । ब्रिटिशभारतस्य प्रतिनिधिषु सरतेजबहादुर सप्रू । श्री श्रीनिवास शास्त्री, डॉ० जयकरः, सी वाई चिन्तामणिः, डॉ मुञ्जे, श्री अम्बेडकर इव जना स्तूपातिष्ठन्, भारतदेशीयराज्यानां प्रतिनिधिषु अलवर-बीकानेर-काश्मीर-बडौदा-भूपाल-पटियालाराज्यानां राजानो ग्वालियरस्य मैसूरस्य च प्रधानमन्त्रिणौ चासन् । तत्सम्बन्धे कूपलेण्डोलिलेख—"सम्मेलनं महत्त्वमयी ऐतिहासिकी घटनासीत् । ततः प्राक् चत्वारिंशत्–कोटिसंख्याकाया जनतायाः प्रतिनिधित्वं बिभ्राणाः सम्राजिश्रद्धां दधानाः प्रनिनिधयः समानमहत्त्ववद्विषये विचारप्रयोजनेन कदाप्येकस्मिन् स्थाने न समवेता अजायन्त । परं न तत्र भारतस्यात्मा विद्यते इति स्वीकरणीय मेवास्ति । राष्ट्रियमहासभाद्वारेण तस्य सम्मेलनस्य वहिष्करणं निदधात्यर्थं विशेषम् । अधिवेशने तस्याः (राष्ट्रियमहासभायाः) भागाग्रहण मनायासेनैव सुस्पष्टीचकारेत्येद् यत् तामन्तरेण कापि वार्ता नोचिता न च लाभकरी यावद् राष्ट्रियमहासभायाः प्रतिनिधयः सन्त्यपस्थिताः । ब्रिटिशशासनं, ब्रिटिशलोकमतं च सम्यगजानाद् यद् राष्ट्रिय महासभायाः पृष्ठेऽस्ति पर्याप्तसमर्थशक्तिः । न शासनं कदापि ता मुपेक्षितुं समर्थं न चदुपेक्षणमेवास्ति सरलम् ।

गोलमेज परिषदः सभापतित्वं स्वयं सम्राट् चक्रे । आसीत् तत् प्रथममधिवेशन माकर्षकदृश्यम् । ग्रेट ब्रिटेनस्य प्रधान-मन्त्री श्री रेमजे मैकडॉनल्डः समभाषत तदा—"केन्द्रीयायाः व्यवस्थापिकासभाया निर्माणं संघशासनाधारकं भवेद्, ब्रिटिशभारतस्य प्रदेशा भारतीयदेशीयराज्यानि च संघशासनस्यैकैकतां करिष्यति । केन्द्रीयकार्यकारिणो केन्द्रीयव्यवस्था-

पिका सभाम्प्रति स्यादुत्तरदायिनी परं सुरक्षा वैदेशिक विभागश्च भारतमहाराज्यपालस्याधीनतायां भविष्यतः। मध्यमानेहसि कानिचन रचनात्मकविधानान्यवश्यं घटिष्यन्त इति।"

प्रधानमन्त्रिण स्तद्भाषणौ श्रीजयकरः सरतेजबहादुर सप्रू च औपनिवेशिक स्वराज्य मधिकृत्य पर्यनुयोग मुत्थापयामासतुः। चेद् भारताय औपनिवेशिकं स्वराज्यं प्रदीयेत तदा भारतेऽवश्यं शान्तं वातावरणं स्थापितं भवितु मर्हेत्। सरतेजबहादुर सप्रू चाब्रवीत् भारतं यदिच्छति तत्रास्ति तद् दृढम्। आंग्लराष्ट्रमण्डलस्येतर सदस्या इव तदपि (भारतं) समानात्मिकां धरामाप्नुयात" संघस्थापनास्वीकृत्यनन्तरं साम्प्रदायिकपरकः प्रश्न उदतिस्ठत्। तेन सा परिषदसफलाभवत्। साम्प्रदायिकसमस्याया निर्णयनाय समितिरेका निर्मिताभूत्। तदध्यक्षः स्वयं प्रधानमन्त्री बभूव। तत्र विवादश्चोदियाय। मुसलमाना हिद्वाधिपत्यान्नैजाधिकारान् रक्षितु मगादिषु। ते तेषु प्रदेशेषु, यत्रतेषामल्पमत मासीत् विशेष मधिकं च प्रतिनिधित्व मैच्छन् अतः न किमपि निश्चितं दर्शनं प्रस्तुतं भवितु मशकत्। तत्रेदमेवोक्तमभूत् :—

(१) नवीने विधाने विभिन्नानां जातीनां सुरक्षाया ध्यानेन विचारणं भवेत्।

(२) केन्द्रीयासु प्रान्तीयराजकीयसेवासु च विभिन्नजातीनामधिकाराणां निश्चयं जनसेवासमितिः करिष्यति

(३) जातीयप्रतिनिधित्वलाभाय न कोऽपि जनो मनोनीतः स्यात्।

(४) अल्पमताना मस्पृश्याणां च कृते पृथङ्ग निर्वाचनपद्धति रङ्गीक्रियते।

उक्ते निर्णये जाते सति १९।२।१९३१ दिनाङ्के प्रथम—गोलमेज परिषद् अभूत् समाप्ता। ग्रेटब्रिटेनस्य प्रधानमन्त्री (रेमजेमैकडानल्डः) शासनस्य नीतिं निम्नशब्देष्वभिव्यानक् सम्राजः शास्तृमण्डलस्यास्ति मतं यद् भारतशास्तृमण्डलस्योत्तरदायित्वं केन्द्रीयासु प्रान्तीयधारासभासु च स्थितं स्यात्। परं युगपदेव परिवर्तनानेहसि आयोजनमेतदपेक्षते यच्छासनं

स्वविशिष्ट कर्तव्यानि पालयित्वा अल्पमताना मधिकारान स्व-तन्त्रतां च तदीयां रक्षितुं शक्नुयात्" ।

परिवर्तनकालेऽपेक्षणीयतानां पूर्त्यै कृतान्यभिरक्षणान्य-धिकृत्य सम्राजः शास्तृ मण्डल मिद मीक्षेत यत् संरक्षिताः शक्तयस्तथा प्रयुक्ताः स्युर्यथोत्तरदायिशासन दिशायां विधानो-पस्थापना भारतोन्नतिं न प्रबाधेत"। तदेवं प्रस्तुतीकृतानि परामर्शणानि राष्ट्रीयमहासभायाः कानिचन मन्तव्यानि आंशिकत्वेनावश्यं स्वकुर्वन्निस्म परं परिषदि औपनिवेशिक स्वराज्यस्य चर्चापि न सञ्जाता ब्रिटिशशासनसत्तासकाशात् । राष्ट्रियमहासभया तु तदा पूर्णस्वतन्त्रतापि घोषितासीत् । साम्प्रदायिकसमस्यानां समापनाय प्रदत्ताः परामर्शा राष्ट्रीय-: महासभादृष्टया नोचिता आसन् प्रधानमन्त्री तेषु परामर्शेषु गम्भीरतापूर्वकं विचारयितुं राष्ट्रीय महासभां प्रार्थयामास; स सरतेज बहादुर सप्रू माश्वासयामास च भारतस्य वातावरणे शान्ते सति, राजनीतिकवन्दिनां मुक्त्यर्थं प्रदत्तो विचारोऽवश्य-मेव ध्यातो भवेत् ।

२५।१ दिनाङ्के, महाराज्यपालाज्ञया शासनं महात्मानं गान्धिनं राष्ट्रियमहासभाया एकोनविंशति सदस्यांश्च सम्प्रति-पत्तिपरककार्यप्रमार्जननिमित्तेनामुञ्चत् । पं० मोतीलाल नेहरो रस्वस्थत्वाद् राष्ट्रियमहासभाया नेतारः स्वराज्यभवनम् (इलाहाबादम्) प्रपेदिरे। परामर्शं विधाय नास्ति ब्रिटिश प्रधानमन्त्रिणो घोषणाश्वासनकारिणीयनि; अतस्तामाश्रित्य राष्ट्रिय महासभा आगामि गोलमेजसम्मेलनं सम्भावयितुं नोचित मवगच्छति 'इति निरणैषुस्ते । अस्मिन्नेव काले दुर्नि-यतिवशात् ६।२।१९३१ दिनाङ्के पं० मोतीलाल नेहरू लखनऊ नगरे दिवमयासीत् । तदांतत्सत्ता नितरामपेक्ष्यते स्म ।

डॉ० जयकर-सरतेजबहादुर सप्रू प्रयत्नै र्महात्मगान्धि-महाराज्यपाल यो र्मध्ये १७।२ दिनाङ्के सम्मेलन मभवत् । अन्ततः १-३-१९३१ दिनाङ्के जाता हि तद्वार्ता इतिहासे 'गान्धीरविनसम्वेष्टन (पेक्ट) नाम्ना प्रथते तदनुसारं शासनमिदमाश्वावसयामास—

(१) हिंसात्मकापराध दोषरुद्धान् वन्दिनो विहाय अन्ये सर्वे राजनीतिकवन्दिनो मुच्येरन् ।

(२) आन्दोलनानेहसि शासन स्वायत्तीकृतसम्पन् निवर्तितास्यात् ।

(३) समुद्रतटवासिनो लवणं निःशुल्कतया कर्तुं प्रभवन्ति तत्संहृतौ च ते क्षमन्ते इति शासनं स्वीकुरुते ।

(४) माद्यहिफेनादिमादकद्रव्य वैदेशिकपटापणानामग्रे शान्तिपूर्णं धरणं कर्तुं शक्यम् ।

राष्ट्रियमहासभाधिकृतवतीइमा वार्ताः—

(१) सविनयावज्ञान्दोलनस्य स्थगनम् ।

(२)आरक्षिकृतात्याचरणं निष्पक्षपरीक्षणान्वीक्षणपरकतया विचारणीयम् ।

(३) भारतहितदृष्टया संरक्षणैः रक्षाकवचैश्च सहोत्तरदायित्वमाश्रित्य द्वितीयगोलमेजपरिषदः सम्भावनम् ।

तस्यामिसन्धानस्य स्वागतं यदाभूत् तदा अस्वागत मपि । राष्ट्रियमहासभा शासनस्य पुरः प्रणमित मस्तकाभूदिति परपक्षो निन्दन् कटाक्षञ्चकार । महासभायाः वामपक्षो भृशनिराशोऽभवत् । तत्सम्बन्धे श्री के० एम० मुन्शी निजगाद—'इयं भारतीयस्येतिहासस्य महत्त्वपूर्णा घटना । श्री जवाहरलालनेहरू सुभाष चन्द्रवसुश्चोभौ तदभिसन्धानं कटुतयालोचयाञ्चक्रतुः । हिंसात्मकेष्वपराधेषु दण्डितानां राजनीतिकवन्दिना ममुक्तत्वाद् वङ्गवासिनो नोत्साहं दर्शयामासुः ।

म० गान्धी सरदार भगतसिंह् वन्दिगृहान्नो मुक्तं कारयितुं प्रबभूव । न च स तस्य प्राणदण्ड माजन्मकारावासदण्डे परिवर्तयितुं प्राभवत् अतो भारतीया युवानोऽसन्तुष्टा आसन् । तदानीं राष्ट्रियमहासभा असम्प्रतिपत्त्यवस्थाजनितकष्टेभ्यः कठिनतया आत्मानं रक्षितुं शशाक । राष्ट्रिय महासभा सम्मतस्यसिद्धान्तस्याहतत्वान् म० गान्धो उभयोरपि पक्षयो र्विजयत्वेन ताम्प्रतिपत्ति मेने। टाइम्स पत्रं तु तत्र स्वमति मित्थमाविर्भावयामास 'एतादृशीं विजयश्रियन्तु विरल एव कोऽपि महाराज्यपालः प्राप्तवान् । कूटनीत्यां विजय आसीद् ब्रिटिश-

कूटनीतिज्ञानां तेन हि राष्ट्रियमहासभा सविनयावज्ञान्दोलन स्थगनाय समुद्यताजायत। अस्मिन् विषये श्रीरजनीपामदत्तेनाभिहितम्—"गान्धीर्विनसम्प्रतिपत्तौ राष्ट्रियमहासभाया याचितं न पूर्ति मगच्छत्; लवणविधिरपि नोपसारितो जातो, राष्ट्रियमहासभा सविनयावज्ञान्दोलनं निवारितवती, सा गोलमेज परिषदि च भागं ग्रहीतुं स्वीचकार। न च स्वराज्यदिशायां निश्चितपदक्रमोऽपि उपादीयत। वस्तुतस्तत्कथने सत्यस्य पर्याप्तोंऽशो विद्यते। राष्ट्रियमहासभा तु कमपि प्रतिबन्धं विना द्वितीयगोलमेजसभां सम्भावयितुं क्षमासीत्। शासनेन तु सा स्वयमेवाऽऽमन्त्रितासीत्। एतया सम्प्रतिपत्त्यैषलाभस्तु सञ्जातो यद्बहवो जनास्तद्दिशाया मार्वजिता अभूवन्, ये राष्ट्रिय महासभाकार्यक्रमाद् दूरे पलायिता आसन्। राष्ट्रियमहासभायाः प्रतिष्ठा ववृधे मर्यादा च तदीया वितस्तार। पं० जवाहरलाल नेहरू तत्र लिखत्येवम्—

"येषु दिनेषु इर्विनगान्धिनोर्मध्ये सम्प्रतिपत्तिः सञ्चलितासीत् तेषुदिनेषु जनमात्रस्य ध्यानं दिल्लीम्प्रति आकृष्टमासीत्। सम्प्रतिपत्त्यां जातायां सत्यां बहवो जनाः, ये प्रलयिषु (आपन्मयेषु) दिनेषु कष्टेभ्य आपद्भ्यश्चोद्विग्ना भूत्वा राष्ट्रियमहासभात आत्मानं न्यगूहन् तेऽपि ताम्प्रति सञ्जाता आवर्जिताः। ते स्वकीयगतव्यवहारान् मार्ष्टुमयतन्त; एतावदेव न, साम्प्रदायिकतापि तत्सविधे आयातु मयतिषत। कष्टेषु दुःखेषु च धृतधृतित्वात् तत्प्रतिष्ठा मानं च ववृधे; जाते नैतिकं धरातलमुदग्रता मगमत्।

गान्धीर्विनसम्प्रतिपत्तिः कराच्यां, राष्ट्रिय महासभाधिवेशने विचारिताऽभूत्। तत्प्रागेव शासनं भगतसिंहं तदीयाभ्यां द्वाभ्यां सहचराभ्यां सह प्राणदण्डेन व्यापादयामास। शासनस्य कार्यमेतन् नवान् यूनोऽतौत्सीत्, तेष्वेवाहःसु कानपुरे हिन्दूमुसलमानयोरूपद्रव उदतिष्ठत्। तत्र संयुक्तप्रान्तस्य प्रान्तीयकांग्रेसाध्यक्षः श्रीगणेशशङ्करो विद्यार्थी तस्मिन् महोपप्लवे आत्मान महौषीत्। स उपद्रवः शासन जनित आसीत्-इत्येतन्मतं बहूनामभूत्। नवा युवानः सम्प्रति—

पत्ति तां कठोरतया व्यरौत्सुः। महात्मानं गान्धिनम्प्रति प्रादर्शयन्तासितपताकाः। सम्मेलने केनापित्विदमपि प्रोक्तं चेत् सम्प्रतिपत्तौ म० गान्धी नोत्तरदायी अभविष्यत् तदा सः समुद्रे क्षिप्तो ऽभविष्यत्। म० गान्ध्यापि स्पष्टतया तदाचकथद् हिंसया स्वराज्यस्यावाप्ति रसम्भवा। तद्भाषणस्य प्रभावोऽतितरामपतदत एव सम्प्रतिपत्तिसम्बन्धी प्रस्तावः स्वीकृतोऽभवत्। तस्मिन् प्रस्तावे कथितमभूत्—"भारतशासनराष्ट्रियमहासभाकार्यकारिण्यो र्मध्ये सञ्जातेऽस्थायिनि सन्धौ विचारिते सति, राष्ट्रियमहासभा तत्परिपोषणपूर्वक मिदं स्पष्टं कर्तुं काङ्क्षति यत् पूर्णस्वराज्यप्राप्तेः राष्ट्रियमहासभाया उद्देश्यं यथावत् सन्तिष्ठते; यदि ब्रिटिशशासनस्य प्रतिनिधिभिः सह कस्मिंश्चित् सम्मेलने सम्मिलिताः स्युस्तदा तेऽस्यैवोद्देश्यस्य पूर्त्यर्थं यतिष्यन्ते"। राष्ट्रियमहासभा महात्मानं गान्धिनं द्वितीयस्यां गोलमेजपरिषदि भागं ग्रहीतुं स्वप्रतिनिधित्वेन प्राहिणोत्।

अथ लॉर्डस्य इर्विनस्य स्थाने लॉर्डविलिंगडनो महाराज्यपालो न्ययुज्यत। इंगलेण्डेऽर्थसङ्कटस्योत्पन्नत्वात् श्रमिकशासनस्य स्थाने राष्ट्रियशासनस्य स्थितिः समजायत। तत्रानुदाराणां संख्यासीत् पर्याप्ता। तस्य प्रधानमन्त्री रेमजे मैकडानल्डः सञ्जातः। परं भारतमन्त्रिणः श्री वैजवुडवैनस्य स्थाने सर सैम्युअलहौरो न्ययुज्यत। अस्याः परिवर्तितायाः परिस्थिते रुद्भूतत्वाद् गान्धीर्विनसन्धानभङ्गः स्वाभाविकोऽजायत। राष्ट्रियमहासभा शासनम्प्रति विषयेऽस्मिन्नमिहितवतो। चिरं महात्मगान्धिशासनयोर्मध्ये पत्रव्यवहारः प्रावर्तत। अन्ततो गत्वा म० गान्धी विवशो भूत्वाघोषयद् यदसौ गोलमेजाख्यपरिषदि भागं नैव ग्रहीष्यति। शासनमपि राष्ट्रियमहासभायां नैजं पैशुन्यं निदधौ। म० गान्धी लॉर्ड विलिंगडनेमिमेल। द्वयो र्मध्ये सन्धि रजनिष्ट। म० गान्धी परिषदं (गोलमेजम्) सम्भावयितुं सन्नद्धो बभूव। आसीत् स राष्ट्रिय महासभाया एकमात्रः प्रतिनिधिः। शासनं श्रीपण्डितंमदनमोहनं मालवीयं, नायडूपाह्वां श्रीमतीं सरोजनीं च स्वयं तां सम्भावयितुं प्रार्थयत

स्म। तौ द्वावपि तेन मनोनीतौ कृतौ।

गोलमेजपरिषदि भागं ग्रहीतुं महात्मा गान्धी २९।८ दिनाङ्के लन्दन प्रतस्थे। तेष्वेव दिनेषु तत्र लोकसभाया निर्वाचनमपि समजनि। तत्रानुदारवादिनो विजयिनोऽभूवंस्तेषामेव संख्या भूयस्कतायां समुद्दिदीपे। एतस्मात् कारणात् तस्या गोलमेजाख्यायाः परिषदो विगलितामगमन्महत्त्वम्। सा भारतहिताय न किमपि कर्तुं मार्हत्। सा तु प्रदर्शनायैवाकल्पत। श्री डॉ० जकरिया तत्रालिखत्—"यदि म० गान्धी प्रथमगोलमेजपरिषदं सम्भावयितु मगमिष्यत्, तदा भारतस्य कृते तल्लाभप्रदं सिद्धं भवितु माशास्यत तस्मिन्ननेहसि श्रमिकशासनस्योपस्थितत्वात्"।[1] तस्मिन् द्वितीये गोलमेज सम्मेलने आंग्लजनतायाः पुरः समुपस्थिताभवदेका दयनीया विचित्रैव स्थितिः। एकतस्तत्पुर उच्चादर्शचरित्रो मानवताया महान् साधु विद्युते; एकतश्च सम्प्रदायवादिनां नितान्तानुदारविचाराणां महान् समुदायः समतिष्ठत। अनुदारा भवन्त्यज्ञानवन्तः। नाज्ञानवन्तो लोकहिताय कल्पन्ते। अतएव तु महर्षयो भगवन्तं प्रार्थयन्ते यदस्माकं जीवनं ज्ञानवतां सन्निधि मधिगच्छेत्—

**"अग्ने विवस्वदाभर अस्मभ्यम् ऊतये महे।**

देवो ह्यसि नो दृशे॥ (साम्नि, १०)

साम्प्रदायिक समस्याना मनिर्णीतत्वात् सा परिषन्नो सफला भवितु मशकत्। म० गान्धी साम्प्रदायिकतापरकसमस्याः समाधातुं नेहरुप्रतिवेदनमवललम्बे परं तदा अल्पीयोऽभि रस्पृश्यैश्च पृथङ् निर्वाचनस्य पृथक् प्रतिनिधित्वस्य च कृतेऽनुरोधः कृतस्तस्मान्न सफलमा लब्धाभवत्। महात्मा गान्धी तत्र परिषदि आमम्नौ—

"चेन्मम प्रयत्नेन कीदृशमपि सन्धानं सम्भव मभविष्यत् तदाहं तदर्थं कमपि त्यागं कर्तुं मुद्यतोऽभविष्यम्"।

स द्वैधशासनं तीक्ष्णतयालोचयामास। सः सुरक्षायां, सेवायां, वैदेशिके च विभागे पूर्णं नियन्त्रण मपेक्षित ममन्यत। सः स्ववक्तव्ये 'राष्ट्रमण्डलाद् भारतं सम्बन्धविच्छेदाधिकारं

1. *Renascent India*, P. 281.

निदधाति' इत्येतदप्यचकथत्।

१।१२।१९३१ दिनाङ्के तत् सम्मेलनं समाप्ति मियाय। भारत हितदृष्टया तत् पूर्णतया व्यर्थमेवासिद्ध्यत। तत्रत्यं सर्वमपि कार्यं माश्चर्यमयं घृणाजनकञ्चासीत्। तत्र दीना निर्बलाश्च प्रयत्नाः कृताअभूवन्। महत्त्वपूर्णाः प्रश्नास्तत्राव-ज्ञाता अक्रियन्त। स्वार्थानां पारस्परिकाणां कलहानां च दृश्य-मेव दृष्ट मभूत्। वस्तुतः सर्वोऽपि व्यवसायो भृतिमूलक आसीत्। भृत्यर्थमेव कोलाहलोऽश्रूयत। अवसरवादः प्रचण्डो भूत्वा प्रावर्तत। क्षुधितवृकाइव जनाः स्वप्राप्तव्यस्य प्राप्त्यै प्रतीक्षमाणाः प्राप्यन्त। स्वतन्त्रताया अर्थो भृतिलब्धि रेव प्राधान्येन मतोऽभवत्। एतेषां प्रबलतराणां दोषाणां सद्भावात् तस्यां सभायां महात्मनो गान्धिनः प्रयासा निष्फला अजायन्त। हन्त, एकत आंग्लानां कूटनीति रेकतश्च तत्तत्सम्प्रदायिनां स्वार्थबलीयस्कता अद्भुतैव घृणाकारिणी भूत्वा तत्र व्यजृम्भत।

**स्वार्थाः क्षुद्रतमा नितान्तमलिनः हा सम्प्रदायश्रिताः**
**भृत्यर्थं गगनस्पृशः स्वरचयास्तत्र प्रचण्डाः स्थिताः।**
**भेदा एव विभिन्नरूपघृणिता व्याप्ता° अभूवंस्तदा**
**तस्माद् गान्धिमहात्म-पावनशुभोद्योगोऽभवन्निष्फलः॥**

परिषदधिवेशननिन्दितवातावरणाद् भूत्वा क्षुब्धो भारतीयानुरोधवशात् म० गान्धी भारतमातुः स्वातन्त्र्याय निश्चिकाय। शासनमप्यथाङ्ग्लीयं विभिन्नेषु भागेष्वान्दोलनं निग्रहीतु मारेभे। वङ्गेषु शासनकठोरदमननीतिहेतो रातङ्क-वाद्यान्दोलनं प्रारब्धमभूत्। उत्तरपश्चिम-सीमाप्रदेशे शासन रक्तनिचोलि (लालकुर्ती) स्वयं सेवक समुदायमवैधं घोषया-मास। तन्नेतारम् अब्दुल गफ्फारखां महोदयं तद्बन्धुं डाक्टर-खानञ्च वन्दिनञ्चकार। श्रीजवाहरलालनेहरु श्री टी० ए० शेरवानी च महात्मानं गान्धिनं निकषा गच्छन्तौ मार्ग एवा-वरुद्धौ कृतौ। संयुक्तप्रान्ते कररोधान्दोलनदमनाय महाराज्य-पालोऽध्यादेशं प्राचालयत्। एतद्विधाना मनेकभीषणपरि-स्थितीना मुद्भूतत्वाद् राष्ट्रियमहासभायाः नेतारः सम्मति

मादातुं महात्मनो गान्धिन: सेवाया मुपस्थिता भवितुं निश्चिक्युः। म० गान्धी च महाराज्यपाल म्प्रति पत्र मलेखीत् परं स: पत्रस्य न सन्तोषप्रद मुत्तरं प्राहिणोत्। महाराज्यपालस्योत्तरे विचारिते सति, राष्ट्रियमहासभाया: कार्यसमिति: प्रस्तावं कृतवती यदसौ शासनेन सह सहयोगं चिकीर्षति, यदि शासनं प्रददीत सन्तोषदमुत्तरम्; अस्वीकृतिस्थित्यां सविनयावज्ञान्दोलनं पुन: प्रचलेत्।

शासनं राष्ट्रियमहासभाया नेतॄन् वन्दिनश्चकार। महात्मनागान्धिना सह कार्यसमिते: सदस्या अन्ये च प्रमुखा नेतारो वन्दितामनीयन्त। दीर्घकालव्यापी कारावासदण्ड: प्रादीयित। राष्ट्रियमहासभा अवैधाऽभूद्घोषिता। तदीयानि पत्रप्रपत्रादीनि आरक्षिण: कार्यालयादाजह्रु:। सम्पच्च तदीया शासनेन स्वाधिकारे कृता। देशस्य सर्वेष्वपि भागेषु भीषण आतङ्को विजहार। जनतायां कटोरं शासनं निर्दयञ्च व्यवहारं कर्तु मात्मानं रमयामास। मुस्लिमलीगस्य नेतारो राष्ट्रियमहासभाया बिरोधं कुर्वाणा शासनपक्षे भूत्वा भयङ्करान् साम्प्रदायिकानुपप्लवान् कारयामासुश्चक्रुश्च। बम्बय्यान्तु साम्प्रदायिकदुराचारिणा माधिपत्यमिव स्थापित मभूत्। अस्पृश्या हिन्दून् विरुन्धाना: स्वान्दोलनं चालयामासुरित्येतदविधा: शोचनीया प्रयत्ना: दु:शासनरतैराङ्ग्लै रक्रियन्त। अस्पृश्यान् हिन्दूभ्य: पृथक् कर्तुं ते भृशं निन्द्यानुपायानशिश्रियन्। सत्यप्येतादृशे कठोरान्यायपूर्णकुशासने, जनता प्रभूतोत्साहेन ससाहसं भागमग्रहीत्। सप्ताहै: षड्भिरान्दोलनं निषूदित मुत्सादितञ्च स्यादित्येतत् लॉर्ड विलिंग्डनस्य कथनं तया कृत मसिद्धम्। सहस्रशो जना वन्दिन: सञ्जाता: अत: कारागारे स्थान स्यापि न्यूनता जाता। बहव: साधारणा: जना: व्यमुच्यन्त। आन्दोलने महिलाश्च प्रशंसनीयं योगं प्रददुस्ता अपि वन्दितायां पुरुषाननुजग्मु:।

राष्ट्रियमहासभाया अधिवेशनं न स्यादित्येतदर्थमपि शासनऽमयतिष्ट परं मूर्धन्येषु नेतृषु कारागृहस्थितेष्वपि अधिवेशनस्यायोजनं सम्भवमिति जनता दर्शितवती। तदधिवेशनं

देहल्यामभवत्। तत्सभापतित्वम् अहमदाबादस्य श्रीश्रेष्ठिरणछो दासश्चकार। तदा शासनेन बहवो जना वन्दिनः कृताः। आगाम्यधिवेशनं कलिकातायां श्रीमत्याः जे० एम० सेन गुप्तायाः सभापतित्वे बभूव तत्र देशस्य विभिन्नेभ्यः प्रदेशेभ्यः २५०० प्रतिनिधयो भाग मगृह्णन्। आन्दोलन मित्थं प्राचलत्। जनता वैदेशिकानिवस्तूनि हित्वा स्वदेशीयानि वस्तूनिप्रायुङ्क्त। शासनं भारतस्य जनान् स्वदेशहिताय नानाविधानि कष्टानि सहमानान् त्यागांश्चाद्भुतान् अनुतिष्ठतः सम्प्रेक्ष्य विस्मित मभूत्। तज्जनान् सहस्रशो वन्दिनः कृत्वापि नान्दोलनंश्लथयितु मशकत्। तत् ततः पराजितमेवात्मान मनुबभूव।

मैकडानल्डोऽस्पृश्यान् हिन्दुभ्यः पृथक् कर्तु स्वकीयां कूटनीतिं भृशं प्रायुङ्क्त; परं स न तत्र सफलो बभूव। महात्मा गान्धी मैकडानल्डस्य कुप्रयत्नं विरोद्धु मसूनपि हातु मुद्यतो बभूव। अस्पृश्यान् हिन्दुष्वेव निधातुं सः प्राणपणेन यतिष्यत इति स घोषयाञ्चकार। मैकडानल्डोऽपि 'यदि किमपिसर्वसम्मतं समाधानं न प्रस्तुतं जातं तदा ब्रिटिशशासनं कार्य निर्वहण योजनां कार्यान्वितां करिष्यति, यदि च तद् भारतस्य विभिन्नेषु सम्प्रदायेषु वैकल्पिकीं योजनां स्वीकृतां निभालयेत् तदा स ब्रिटिशशासन मनुरोत्स्यति यत् साम्प्रदायिकनिर्णये निहिताया योजनायाः स्थाने नवयोजना स्वीकृता भवेत्"। ब्रिटेनप्रधानमन्त्री तस्यां समस्यायां यं निर्णयं प्रददौ सः 'मैकडानल्डनिर्णय' इति नाम्ना प्रथते। निर्णयः स १७।८।१९३२ दिनाङ्के घोषितोऽभूत्। मैकडानल्डकृतानि कार्याणि सन्तीमानि—

१. प्रदेशीयव्यवस्थापिकासभानां संख्या द्विगुणिता जाता।

२. अल्पसंख्यकानां जनानां हिताय पृथङ् निर्वाचनव्यवस्था कृता।

३. अस्पृश्यनांकृते निर्वाचनस्य प्रतिनिधित्वस्यचाधिकारः पृथग् दत्तोऽभवत् तान् हिन्दुभ्यो भिन्नान् विचार्य।

४. अल्पसंख्यकेषु मुसलमानाः सिक्खाः भारतीया

खैस्ता मता अभूवन् ।

५. सीमाप्रान्तं व्यतिरिच्य अन्येषु प्रान्तेषु व्यवस्थापिका सभायां स्त्रीणां कृते प्रतिशतं त्रीणिस्थानानि सुरक्षितानि कृतानि ।

६. गुरुभारव्यवस्था अक्रियत । तत्रातितरां विषमरीति र्व्यवाह्रियत। प्रान्तान्तरेषु मुसलमानाना मल्पमततां वीक्ष्य सानुसृता । पञ्जाबप्रदेशे हिन्दूनां सिक्खानां च कृते सा गुरुभारव्यवस्था न्वपाल्यत ।

शासनं तथाप्रायतत यथा साम्प्रदायिकवर्गभेद उद्दीपितः संधुक्षितश्च भवेत् । म० गान्धी अस्पृश्यान् हिन्दुष्वेव निधातु मामरण मनशनं यदन्वतिष्टत् तस्मिन् स सफलतां प्राप । तत्र श्री पण्डितो मदनमोहनो मालवीयः श्लाघनीयं प्रयत्नं कृतवान् । अस्पृश्यानां कृते मन्दिरद्वाराणि विवृतानि जातानि ।

तदा तृतीय गोलमेजपरिषत् पुनः समायोजिताभूत् । राजभक्ता जना एव तां सम्भावयितु गताः । सा पूर्णतया निष्फलैव सञ्जाता । राष्ट्रिय महासभा कृत्स्नतया तां वहिष्चकार । तदा ब्रिटिशशासनं श्वेतपत्रं प्रकाशयामास तत्रत्यानां प्रस्तावनां प्रतिगामित्वात् लोकमतेनाहृतम् । नेतृणां म० गान्धिनश्च तदा कारागारस्थितत्वाद् आन्दोलनं कृशतरता प्रत्यपद्यत । म० गान्धी कारागारान्निर्गत्यान्दोलनमुपसमहरत् । व्यक्तिगत मान्दोलनं मत मभूत् परं तदपि न चलितु शशाक । म० गान्धी अस्पृश्यतायाः निवारणे पूर्णतया समलगत् । आन्दोलनस्य श्लथत्वादभावाद् वा जना व्यवस्थापिका सभासु प्रवेष्टु मैच्छन् । म० गान्धी च तैस्तत्र सहमतीकृतः । चतुस्त्रिंशदधिकैकोनविंशतिशततमेशवीय सम्बत्सरे केन्द्रीयव्यवस्थापिका सभाया निर्वाचने राष्ट्रियमहासभा भाग मगृह्णात् । तत्र साशातीतां सफलता मविन्दत । पञ्चालप्रदेशं विहाय समस्त प्रदेशेषु सा विजयिनी बभूव । तदापुना राष्ट्रियमहासभा स्वशक्तिमत्व मप्रथत; शासनं यद्यपि कठोरदमनं विदधन्महत् प्रत्यूह मजनयत् । दक्षितभारते यन्निर्वाचनं जातं तदघटन्मनोरञ्जनकारकम् । तस्मिन् निर्वाचने राष्ट्रियमहासभाया अभ्यर्थी

भूयोभिर्मतैः श्रीवेङ्कटाचलं चेट्टींसर षरामुखं चेट्टीं, यो भारत-शासनस्य प्रिय आसीत्, पराजितं चकार। राष्ट्रियमहासभा योग्यतया तत्परतया च कार्यमकरोत्, सा तत्रासकृच्छासनं पराजयते स्म।

१९३५ तमाब्दस्याधिनियमो (*Act*) न जनता मतूतुषत्। एकैको राजनीतिवित् तमालोचयाम्बभूव। देशीयानि च राज्यानि संघे स्वकीय मन्तर्भावं प्रतिषिषिधुः। देशरत्न श्री डॉ० राजेन्द्रप्रसादो राष्ट्रियमहासभाया अधिवेशने सभापति-पदादधिनियमं कटुतयालोचयामास। सोऽब्रवीत्—"अस्ति संघोऽयमीदृग्, यत्र भारतस्य $\frac{1}{3}$ राज्ये निर्लज्जं स्वेच्छाचारि राज्यं सुरक्षितं सत् सन्तिष्ठेत, समये समये च तत् स्वदर्शनं दास्यति, अवशिष्टे च $\frac{2}{3}$ भागे जनमत ग्रीवा उपमर्दिता स्यात्। मुस्लिमलीक् चाधिनियमं तमालोचयत्। परं सा तदधिनियम-सम्बद्धप्रादेशिक योजना मन्वमूमुदत्। जिन्ना च तमनिन्दत्। श्री पं० मदनमोहनमालवीय तमापाततो लोकतन्त्रीयं परं याथार्थ्यतो निस्सारममंस्त। राष्ट्रियमहासभा फैजपुराधिवेशने तमधिनियम मालोचयति स्म। 'अधिनियमं विध्वंसयितुं सा निर्वाचने भागं ग्रहीष्यति' इति सोदजूघुषत्। आसीदधिनियमः संरक्षणाभिरक्षणपरः। शाब्दिकरूपेण तत्कार्यान्वियनस्यार्थ आसीदुत्तरदायिशासनात्मनो हननम्; महाराज्यपालः प्रान्तीय-राज्यपालान् शासनस्य प्रतिक्षेत्रे बाधितुं क्षम आसीत्; स व्यवस्थापिका सभया पारितानधिनियमान् न केवलं समाप्तान् कर्तु मक्षमत अपितु स्वमप्यधिनियमं सृष्ट्वा लोकप्रियमन्त्रि-काङ्क्षाविरोधे तत्सर्वमपि विधातुं शक्ति न्यदधाद् यत् सोऽभि-लषेत। उच्च राजकीय कर्मचारिण आरक्षिणश्च प्राप्त-संरक्षणा कृता आसन्। मन्त्रिणस्तत्स्थानस्यापि स्वतन्त्रं न प्रापुः। राज्यपालमारभ्य लघुराजकीयकर्मचारिणं यावच्छा-सनस्य प्रवृत्तिः किञ्च रचना यथापूर्व मेवावर्तत। तदन्तराले लोकप्रिया मन्त्रिणः केवल मधिष्ठापिताः इत्येतदादिहेतुवशात् तस्याधिनियमस्य निन्दा कृताभूत्।

श्री प्रो० के० टी० शाहोऽत्राचकथत्—"१९३५ तमाब्द-

स्यविधानानुसारं प्रान्तीयस्वायत्तता भूतच्छायास्ति; सांग्ल-साम्राज्यवादिनां छलमात्राद् व्यतिरिच्य नान्यत् किमपि। परमार्थतो न साम्राज्यवादिनो भारतीयेभ्यः न किमपि दातु-मनसः"। प्रो० कूपलेण्डस्तस्याधिनियमस्य रचनात्मकराजनीति विचारं महासफल त्वेन प्रत्यपादयत्। तन्मतेन भारतस्य भाग्यं हि सिताङ्गहस्तेभ्यः स्थानान्तरित भूत्वा भारतीयहस्ताधीनतां गतम्। परं तदीयं तं विचारं भारतीया एव न, निष्पक्षब्रिटिश-विद्वांसोऽपि नान्वमोदयन्। पं० जवाहरलाल नेहरु मतमेतत् प्रकाशयामास—"अधिनियमोऽयं ब्रिटिशशासनस्य सौहृदं राजसु, भूमिधरेषु, भारतीयान्यप्रतिक्रियावादिसंस्थासु दृढ़तर मकार्षीत्। एतेन पृथङ् निर्वाचनपद्धति र्बलमाप्नुते। अधि-नियमोऽयं ब्रिटिशव्यापारम्, उद्योगं, जलयानव्यापारम्, अधि-कोषञ्च, येषामाधिपत्यं प्रथमत एवावर्तत, सम्प्रति बलवत्तरं कुरुते। अधिनियमेऽस्मिन् निहितधाराः सन्ति सर्वथा स्वच्छन्दा न तत्र कोऽपि प्रतिबन्धः संरोधश्चारोपितो भवितु मर्हतिक-दापि···। तदनुसारेण भारतीयराजस्व-सैनिकता-वैदेशिकनीति-परकबिषयेषु पूर्णतया नियन्त्रणं ब्रिटिशहस्तेषु यथापूर्वं प्रदत्तं वर्तते। एष भारतस्य महाराज्यपालं प्रथमतोऽप्यधिकशक्तिमन्तं विदधाति"। पण्डित नेहरु तं 'दासत्वस्य नवपदोपन्यास' इत्येतेन नाम्ना सम्बोधयामास। सोऽधिनियमो नूनं भारतीयजनतां परि-तोषयितु मक्षम आसीत्।

भारतशासनं १९३५ तमाब्दीयाधिनियमस्य तं भागं सक्रियं कर्तुं निश्चिकाय यस्य सम्बन्धः प्रदेशेषु उत्तरदायिशासन-स्थापनया सहासीत्। शासनं प्रदेशानां कृते विधानसभामुद्दिश्य २।१९३७ तमतिथौ निर्वाचनं भवितेत्युद्घोषयामास। सर्वेऽपि राजनीतिकसमवाया स्तत्र भागं ग्रहीतुं कृतसङ्कल्पा अभूवन्। राष्ट्रियमहासभायाः सभापतिः पण्डितो जवाहरलाल नेहरुः समस्तेऽपि भारते महायुगान्तरकारिभ्रमणं चकार। तत्र स सकलमपि भारतं राष्ट्रिय महासभाया अभ्यर्थिनां कृते मतं प्रदातुं सादर मनुनुदत्। जनता सहर्षोत्साहं तम्प्रत्युदगच्छन्ती महासभाया अभ्यर्थिनां कृते नैजं मतं प्रदातुं प्रत्याशुश्राव।

निर्वाचने राष्ट्रिय महासभा आशातीतां सफलतां लब्धवती। राष्ट्रियमहासभा षट्सु प्रदेशेषु—बिहार बम्बई मद्रासोडीसोत्तरप्रदेशमध्यप्रदेशेषु—बहुमत मवाप। आसाम बंगाल-उत्तर पश्चिमीयसीमाप्रान्तेष्वपि सा पर्याप्तां सफलतामधिजगाम। अत्र बहुमतं तु नासीत् सदस्यसंख्या तदीयान्यवर्गानतिशयाना विबभौ।

अखिल मपि राष्ट्रं भास्वरे सर्वातिशायिनि विजये राष्ट्रिय महासभां सहर्षं वर्धापयामास। तद् (राष्ट्रम्) राष्ट्रियमहासभाया विजयिनः सदस्यान् "ते स्वराज्यसैनिका इव स्वतन्त्रतयाः कृतेऽश्रान्तं सततं परिश्राम्यन्तो देशस्य कोटिशो नरनारीणां कष्टान्यहर्तुं यतेरन्" इत्यन्वरौत्सीत्। पञ्जाब सिन्धुप्रदेशयो र्मुस्लिममतप्रधानत्वाद् राष्ट्रियमहासभा साफल्य विशेषं नाश्नुत।

अत्रेदमुल्लेखनीयं वर्तते यन्मुस्लिमलीक् ४८२ स्थानेषु ५१ स्थानानि एवाधिचकार। अधिनियमानुसारेण तानि ब्रिटिशभारतस्य मुसलमानान् प्रति प्रदत्तान्यभूवन्। पञ्जाबप्रदेशे यूनियनिस्ट पार्टी १७५ स्थानेषु १०६ स्थानान्यलब्ध। पार्टीयं हिन्दु-मुसलमानसिक्खभूमि पतीनां प्रयत्नेन समस्थाप्यत। न तत्र मुस्लिम लीकः स्वल्पमपि नियन्त्रणमासीत्। आसीद् यद्यपि तत्र मुस्लिमानां बहुमतम्। निर्वाचनं मुस्लिमलीकोऽप्रियतां साधयति स्म।

१९३६ तमाब्दे राष्ट्रियमहासभायाः पञ्चाशत्तमाधिवेशनं फैजपुर ग्रामे बभूव। तत्र सभापति रासीत् पं० जवाहरलाल नेहरू। अधिवेशने निश्चयोऽयं जातो यत् १.४.१९३७ दिनाङ्के, समस्तेऽपि देशे सर्वेऽपि स्वस्वकार्याद् दूरे तिष्ठेयु र्यदा ब्रिटिशशासनं १९३५ तमाब्दस्य विधानं योजयेद् येन शासनं जनमतं नवविधान मधिकृत्य जानीयात्। पदग्रहणे राष्ट्रियमहासभायां मतभेद उदतिष्ठत्। पं० नेहरू सुभाष चन्द्रो वसुश्च पदग्रहणाभिलाषिणौ नास्ताम्। तौ शासनेन सह संघर्षमाचकाङ्क्षतुः। परं वर्गान्तरस्य नेतारः पदग्रहणपक्षे समतिष्ठन्त। तत्र श्री राजगोपालाचार्यः, सरदार वल्लभ भाई पटेलः, डॉ० राजेन्द्र

प्रसादश्चासन्। एषामेव बहुमत मवर्तत। महात्मनो गान्धिन एते मौनं समर्थन मपि लेभिरे। अस्मिन् विषये ३।१९३७ तम-दिनाङ्के राष्ट्रिय महासभाया महासमिते रधिवेशनं दिल्ल्या मभूत्। दक्षिणपथगामिनो वामपक्षगामिनो विजयन्ते स्म। महासमितौ राष्ट्रिय महासभा तत्र पदं ग्रहीष्यति यत्र तस्या बहुमत मिति निश्चिकाय, परं तदैव, यदा राज्यपालो मन्त्रिणां वैधानिकेषु कार्येषु कीदृश मपि हस्तक्षेपं न विधास्यतीत्येतदा-श्वासनं प्रददीत। मध्यमकालवर्तिमन्त्रिमण्डले राज्यपाला अल्पसंख्यकान् नेतृन् गृह्णीयुः (तन्निर्माणाय)। राष्ट्रियमहा-सभायाः सदस्यास्तत्र घोरं विरोधं चक्रुः तेन कार्याचरण मसम्भवमभवत्। गतिरोधात् कार्यकलाप :प्रतिहतगतिकः सञ्जातः। अन्ततोगत्वा बाधितं भूत्वा शासनं प्रणमितमभूत्। आकाशवाण्या प्रसारिते महाराज्यपालस्याभिभाषणे प्रान्तीय-राज्यपालान् प्रान्तीयं मन्त्रिमण्डल ञ्चाधि कृत्य प्रकाशः क्षिप्तोऽभवत् २१।६।१९३७ दिनाङ्के। तत्रोक्तमिदम्—"एतस्या आशङ्काया नास्ति कोऽप्याधारो यद् राज्यपाला मन्त्रिमण्डलस्य नीत्यां हस्तक्षेपं करिष्यन्ति; मन्त्रिकृतप्रान्तीदैनिकशासने, विना तत्परामर्शं प्रसभं स्वसम्मति मारोपयिष्यन्ति, कार्येषु च प्रत्य-वायं जनयिष्यन्ति; अनिवार्यतया च स्वाधिकारविशेषानुपयो-क्ष्यन्ति। अधिनियमस्य तूद्देश्यमिदं यत् ते (सदस्याः) प्रान्तीय-हितकृत्कार्येषु राज्यपाले राजकीय कर्मचारिषु च विश्वसन्तः स्वकार्यक्रमं स्वयं रचयित्वाग्रेसरा भवितु मर्हन्तीति। ईदृशस्य विश्वासस्योत्पादन—मेवास्त्यधिनियमस्येष्टम्। प्रान्तीयस्व-शासने यानि कार्याणि मन्त्रिणां कार्यक्षेत्रेऽन्तर्भूतानि भवन्ति; तेषु राज्यपालाः साधारण्येन, मन्त्रिपरामर्शेणैव कार्यं मनुष्ठा-स्यन्ति; तेषु च व्यतिकरेषु ते संसदम्प्रति न, अपि तु विधान-सभाः प्रति भविष्यन्त्युत्तरदातारः"।

राष्ट्रियमहासभा महाराज्यपालस्यानेनोपरिनिहितेनाश्वा-सनेन समतुष्यत्। ७।७।१९३७ दिनाङ्के राष्ट्रियमहासभायाः कार्यकारिणी महाराज्यपालस्याकाशवाणीभाषणे विचारयितुं वर्धानगरेऽभवत्। तत्र प्रस्तावोऽयं पारितोऽभूत्—"यत्र मन्त्रि-

मण्डलं रचयितुं राष्ट्रियमहासभायाः सदस्याः आमन्त्रिताः स्युस्तत्र ते मन्त्रिमण्डलं रचयेयुः; परमिदमपि स्पष्टीक्रियते यत् पदग्रहणं विधाय राष्ट्रियमहासभायामन्त्रिणो निर्वाचनघोषणापत्रानुसारं कार्यं कर्तुं किञ्च कार्यक्रमं सम्पादयितुं यतेरन्''।

इत्थं राष्ट्रियमहासभायाः कार्यकारिणी एकतो नवेऽधिनियमे योद्धुमेकतश्च सामाजिकसुधारणपरकरचनात्मककार्यक्रमं चालयितुं राष्ट्रियमहासभासदस्यान् मन्त्रिमण्डलमारचयितुमाज्ञापयामास।

राष्ट्रियमहासभा १९३५ तमाब्दस्याधिनियमस्य पक्षे नासीत् परं सा संविधानमाभ्यन्तरतो विकृती कर्तुं विधानमण्डलनिमित्तेन निर्वाचने भागं ग्रहीतुं निरवैषीत्। अथाधुना मध्यमकालवर्ति नः शासनस्य मन्त्रिभिस्त्यागपत्रं प्रदत्तम्। राज्यपालामन्त्रणे सप्तसु प्रान्तेषु राष्ट्रिय महासभायाः सदस्याः अन्येषां सदस्यानां सहयोगमवाप्य मन्त्रिमण्डलं चक्रुः। आसामे च गच्छतानेहसा संयुक्तमन्त्रिमण्डलं घटितमभूत्। मुख्यमन्त्रिपदं राष्ट्रिय महासभा-सदस्यो ऽध्यासाञ्चक्रे। अवशिष्टेषु प्रान्तेषु बहुमताभावाद् राष्ट्रियमहासभाया मन्त्रिमण्डलं न भवितुं शशाक।

जुलाई १९३७ तः अक्टूबर १९३९ समयं यावद् राष्ट्रिय महासभाया मन्त्रिमण्डलं कार्यञ्चकार। परं द्वितीय महाहवानलस्फोटे सति, तत् त्यागपत्रं प्रददौ। ततश्च तद्राष्ट्रियमहामण्डलं देशस्थितिमुत्थापयितुं यथाबलं प्रायतिष्ट। परं न तज्जनताया आशां दोग्धुं शेके। त च तत्र तद् दोषि। राजकीयकर्मचारिषु कार्यं कर्तुं तद् बाधितमासीत्, ते राजकर्मधारिण आसन् ब्रिटिशशासनस्य परमभक्ताः, काष्ठमूर्तय इवते तदनुज्ञापालनं स्वधर्मं मेनिरे। तन्नीतिहेतो र्देशेऽसन्तोषो ऽवर्धत; नृणामार्थिकी स्थितिर्नोन्नता भवितुमशक्नुत। श्रमिकाः, अतः समये समये स्वस्वकार्यं हित्वा रोषं स्वकीय मदीदृशन्। शासनमपि कठोरं भवत् नैजभ्रुवं वक्रीकुर्वत् प्रायेणावालोक्यत। एतादृशे महति प्रत्यूहे सत्यपि राष्ट्रिय मन्त्रिमण्डलं देशावस्थामुन्नमयितुं नानामहत्त्वपूर्णानि कार्याण्य

कार्षीत्। राष्ट्रिया मन्त्रिणः सत्याग्रहकाले शासनापहृताः सम्पद स्तत्स्वामिभ्यः परावर्तयामासुः। मुद्रणालयाः, समाचारपत्राणि च तत्प्रयत्नेन पर्याप्तस्वतन्त्रतां प्राप्तु मवसर मलभन्त तेष्वारोपिताः प्रतिबन्धाः समाप्ति नीताः। तत्प्रयासेन राजनीतिकवन्दिनः कारागारादुन्मुक्ति मवाप्नु मशक्नन्। कर्षकाणा मृणगृहीतॄणां किञ्चोद्योगव्यवसायानां दशा मुन्नतां विधातुं तेऽनेकान् विधीन् विधेयकानि च पारितानि कारितवन्तः। अस्मिनन् विषये कूपलैण्डस्याभिधानमिदं—"इदं सबलं वक्तुं सुशकं यद् राष्ट्रियमन्त्रिमण्डलं कार्ये राष्ट्रियमहासभागर्वेण स्वमूर्धान मुन्नमयितुं शक्नोति। तदीया नेतारः प्रादीदृशन् यत् ते वक्तृतायामेव न पटवः कार्योचिताचरणे च सन्ति पटीयांसः। ते आन्दोलन चालनं विदन्ति यदिः तदा शासितु मपि समीचीनां क्षमतां निदर्शति। सामाजिक्याः स्थित्याः परिमार्जनं केनविधिनोचिततया भवेतुं शक्यमित्यत्रापि तेऽद्भुतं कौशलं श्रयन्तीति तै स्तेऽन्येष्वेवाहःसु प्रमाणीकृतम्। राजनीतिक वन्दिवृन्दोन्मोचनप्रश्ने यद्यपि संघर्ष उदतिष्ठत् परं राज्यपालाः राष्ट्रियमन्त्रिणश्च मतिमत्तया दूरदर्शितया च कार्यं चक्रु स्तस्माच्छान्त्या समाधान मभवत्। विवादाः सर्वे शान्त्या समाहिताः समजायन्त। स्वल्पकालवर्तिनि शासने वस्तुतो राष्ट्रियमन्त्रिमण्डलं पर्याप्तां सफलता मधिजगाम।

३।९।१९३९ दिनाङ्के द्वितीय विश्वयुद्धं जर्मनीटल्यौ मध्ये प्रारब्धं बभूव। इंगलेण्डो जर्मनीं विरुन्धानो लोकतन्त्रवाद-स्वातन्त्र्यस्य रक्षणमुद्दिश्य युद्ध मघोषयत्। भारतस्य महाराज्यपालो भारतपक्षेण जर्मनीं विरोद्धुं युद्ध मजूघुषत्। अस्यां घोषणायां महाराज्यपालो न भारतनेतृषु, राष्ट्रिय मन्त्रिमण्डले न च केन्द्रीय विधान सभायामेव परामर्श। महाराज्यपालस्येयं छन्दता राष्ट्रियमहासभामव्यथयत्। अतः सद्यः सा तीव्रं विरोधं प्रकटीचकार। अत्र डॉ० पट्टाभि सीतारमैया लिखति—"एतादृशस्योद्देश्यस्य कृते यत् तदीयं नास्ति; एतादृशस्य ध्वजस्याधस्तद् यो हि परिपन्थिना निपातितः; एतादृशानां च नेतृणा मधीनतायां ये तदीय नैजनेतृभ्यः

सम्मतिं ग्रहीतुं नैच्छन्—भारतस्य न तत्र नैतिक उत्साहो भवितुं शक्यः पुनस्तत् सहायतां प्रदातुं कदापि समुद्यतं भवितुं शक्नुयात्" ? भारतीयानीकिनी-प्रेषणकाले राष्ट्रियमहासभा शासन मचेतयत्; सा प्रस्तावद्वारेण शासनं समरोद्देश्यमजिज्ञासत्; सा भारतस्य स्वतन्त्रतार्थं प्रस्तावं प्रास्तावीत्। विधिना सा सिताङ्ग शासनं भारतस्वातन्त्र्यतार्थं प्रस्तावं प्रास्तावीत्। विधिना सा सिताङ्गशासनं भारतस्वातन्त्र्य मयाचत। राष्ट्रिय महासभा तत्क्षण एव भारते लोकतन्त्रशासनं स्थापितं स्यादिति वाञ्छति स्म। आयोधने च सति उपसंहृते स्वसंविधान-निर्माणाय भारतम्प्रति स्वतन्त्रता प्रदत्ता भवेदिति च साचकमत। न तत्र किमप्यादानं प्रदानं च साचकाङ्क्ष। सा तु समधिकारा भवन्ती इंगलेण्डं प्रति साहाय्य कृद् अबुभूषत्। चेच्छासनं भारतं नात्राश्वासयति तदा शासनं युद्धं साम्राज्यवादार्थं चिकीर्षति, न च लोकतन्त्रस्य न स्वतन्त्रतायाः कृते इति सा स्वविचारं दृढतयाभिव्यानक।

राष्ट्रियमहासभायाः प्रस्तावे सम्राट्, भारतमन्त्री, भारतस्य च महाराज्यपालः स्वस्ववक्तव्यं प्रकाशयाम्बभूवुः; परं न तानि वक्तव्यानि राष्ट्रिय महासभां तोषयितुं प्रबभूवुः। यतो हि तत्र पुरातनवार्तानां मावृत्ति रेव कृतासीत् नान्यत् किमपि व्यक्तीकृत मासीत्। शासनकृतप्रत्याश्रवणेभ्यो राष्ट्रिय-महासभाया नेतारो भारतीया जनाश्चातितरा मुद्विग्नतां गमिता आसन् नातस्तत्र तेषां मनागप्यभिरुचिरवाशिष्यत। महाराज्यपालः समस्यामिमां समाधातुं येषु मिमेल तेषु प्रमुखा इमे सन्ति महात्मा गान्धी, श्रीराजेन्द्रप्रसादः, पं० जवाहरलाल नेहरू, श्री वल्लभभाई पटेलः, श्रीसुभाष चन्द्र वसुः, श्री म० अ० जिन्ना, श्री नरेन्द्रमण्डलस्याध्यक्षश्च।

९, १०।११।१९३९ दिनाङ्के, भारतीयराष्ट्रियमहासभाया अधिवेशनं बभूव। तत्र सा महाराज्यपालस्य तच्छ्वेतपत्रं व्यचारयद् यदसौ प्राक्तने मासे प्रकाशयाञ्चकार। कार्यसमिदृष्ट्यां न तदासीत् सन्तोषदम्। साम्राज्यवादनीति रेव तत्रादृतासीत्। ब्रिटेनवचोभङ्गानां निगूहनाय विभिन्न राजनीति-

कवर्गाणां मतभेदाश्च तत्र प्रगृहीता आसन्। महासभया तु अल्पसंख्यकाना मधिकारान् पातुं पूर्वमेवाश्वासनं प्रदत्तमासीत्। अतः महासभा महाराज्यपालस्य वक्तव्यं नोचित ममंस्त। सा तस्यां स्थित्यां ब्रिटेनं समर्थयितु मात्मानं न सन्नद्धामवाप्नुत। तद्विचारेण तथाचरणस्य प्रयोजनं साम्राज्यवादिन्या नीतेः परिपोषणं स्यात्।

राष्ट्रियमहासभायाः सांसदोपसमितिः प्रान्तीयमन्त्रि-मण्डलानि ३१। १०।१९३९ दिनाङ्कपर्यन्तं त्यागपत्रं प्रदातु मन्वरुणत्। त्यागपत्रप्रदानात् प्राक् प्रस्तावोऽयं पारिततामियाय यत्र यत्र राष्ट्रियमहासभायाः सदस्या बहुसंख्यायामासन्। प्रस्तावस्यायं सारः "इयं विधानसभा वार्तायामस्यां खिद्यते यद् ब्रिटेन जर्मन्यो र्मध्ये प्रवर्तमाने मृधे ब्रिटिशशासनं भारतस्य जनताया इच्छा मनवगत्यैव भारतं युद्धे सम्मिलितं चक्रे। तदीयादेतस्मात् कार्यात् तत्तद्विधेश्च पारितत्वात् प्रान्तीय-शासनाधिकारा अपकर्षवन्तो भवन्ति। वर्तमानस्य युद्धस्योद्देश्यं सम्यग् ध्यात्वा शासनं भारतीयजनतायाः सहयोगं विन्दमानं, मसलमनाना मन्येषाञ्चाल्पसंख्यकानां वर्गाणां कृते प्रभावपूर्णैः संरक्षणैः सह लोकतन्त्रवादपरकान् सिद्धान्तान् भारते उपयुञ्जीत। भारतस्य नीति स्तस्य जनतयैव निर्धारिता स्यात्। भारतञ्चेदृशं स्वाधीनं राज्य मवगम्येत यत् स्वसंविधानं स्वयं निर्मातुं स्वत्वं निदधीत। यावानयं सिद्धान्तो भाविनि प्रयुज्येत तावानेव सम्प्रत्यपि शासनेन भारते तस्योपयोगो विधीयेत।

भारतमधिकृत्य प्रचालितादादेशाच्छासनस्य भारत परिस्थित्यनवगतित्वं सिद्धयति। नूनं तथाविधाय ब्रिटिशशासनं भारताभिमतं पूरयितु मसफलं सञ्जात मस्ति। तस्मात् कारणाद् विधानसभामतेन शासनं ब्रिटिशशासनस्य नीत्यां न न सहमतं भवितु मर्हतीति सा (विधानसभा) सखेद मभिव्यनक्ति।

मुस्लिमलीगसदस्याः महासभाया उक्ते विचारे न सहमता जाताः। येषु प्रदेशेषु राष्ट्रियमहासभाया बहुमत मासीत्,

तत्र तु निर्दिष्ट विचारपरक प्रस्तावः पारितो जातः। राष्ट्रिय-महासभाया मन्त्रिमण्डलं, तस्मिन् पारिते प्रस्तावे, त्यागपत्रं प्राददात्। राष्ट्रियमहासभाशासनोन्मुक्तिर्यस्मिन् अहन्यघटत तदहो मुस्लिमलीक् स्वतन्त्र दिनत्वेन मेने। अतोहृष्यत्। तदीयेन कार्येणैतेन साम्प्रदायिककटुता ववृधे। प्रान्तीयराज्यपालाः परामर्शदातृशासनारम्भे रुचि निदधुः। बंगाल-पञ्जाब-सिन्धुषु पूर्ववन्मन्त्रिमण्डलं स्वकार्यं चकार। तदवसानं १९४५ तमेशवीयाब्दे सञ्जातम्।

भारतस्य महाराज्यपालो लिनलिथगो यद् वक्तव्य मकरोत् तद् भारतस्य राजनीतिकं जीवन मक्षोभयत्। राष्ट्रिय-महासभा भृशमसन्तोष मवाप। तया क्रान्तिप्रदया स्थित्या ब्रिटिशशासनं महाराज्यपालश्च नितरामक्लाम्येताम्। महा-राज्यपालस्तदा तथा प्रायतत यथा शासनं राजनीति कनेतृणां सहयोगं प्राप्नुयाद् युद्धे च भारतीयानां साहाय्यं तत्प्राप्तुं शक्नुवीत। राष्ट्रियमहासभा तां सर्वामपि स्थिति मधीत्य न तस्याः शासनेन सार्धं कीदृशमपि सन्धानं भवितुं शक्यमिति निरचिनोत्।

राष्ट्रियमहासभाया रामगढाधिवेशनं भारतीयराष्ट्रिया-न्दोलने स्वकीयं विशिष्टं स्थानं निदधाति। तदधिवेशनानेह-स्येव मुस्लिमलीक् स्वद्विराष्ट्रसिद्धान्त मघोषयत्; सा संस्था पाकिस्तानस्यापेक्षणीयतां प्रास्तावीत्। युद्धञ्च तदानीन्तन मुग्रतां गच्छत् तदा दृश्यत। तत्र मित्रराष्ट्राणि शोचनीयगति-कान्यवाप्यन्त। अधिवेशनाध्यक्षो मौ० अब्दुल कलाम आजा-दोऽध्यक्षपदाद् रामगढाधिवेशने यदभाषत तदतितरां महत्त्व-पूर्ण मासीत् उच्चकोटिकञ्च तदवर्तत। तत्र पुनः इदं घोषित मभूत्—भारतस्य जना हृदयेन तैः सह सन्ति ये प्रजातन्त्रतां स्वतन्त्रताञ्च पातुं युध्यन्ते। मौ० आजादेनाभिहितम्—"भारतं प्रजातन्त्रवादं विहाय नान्यं कमपि वादं सोढुं शक्नुते, तद् ब्रिटिशसाम्राज्यवादेऽपि अतो जुगुप्सते। चेद् भारतं स्वतन्त्र-तायाः स्वकीयान्नैसर्गिकादधिकाराच्च्युतं कर्तुं यत्नोऽभविष्यत् तदा तद् (भारतम्) ब्रिटिशसाम्राज्यवादम्प्रति नैजं योगं

प्रादास्यत्। भारतार्थं प्रत्यासन्नेहंसि औपनिवेशिकं स्वराज्यं बहुमूल्योपहारत्वेन प्रदत्त भवेदिति भारतेन श्रुत मस्ति; तदिद-मपि पश्यति यद् विना तदनुमतिं युद्धे तत् क्षेपित मस्ति। इदं सर्वं स्पष्टतया वातः कस्यां ककुभि वातीति ज्ञापयति" इत्येतदभिधाय स इदमब्रवीत्—"अस्माकं स्थितिः पूर्णतया स्फुटास्ति। वयं ब्रिटिशसाम्राज्यवादं विजयिनं न द्रष्टुमिच्छामो न च स्वदासतामपि वर्धयितुं कामयामहे। स्पष्टञ्च विदध्मो यदस्मदीयोऽध्वास्त्यपरस्यामेवाशायाम्। एतस्याः रणघोषणाया अनन्तर मस्माभिः १९३७ तमेशवीयवर्षे य आंशिकोऽस्थायी च सहयोगात्मकः शयः प्रसारितः सः साम्प्रत माकुञ्चितः। असहयोगदिशायां स्वपदक्षेपः पुरः करणीयो वर्तत इति स्पष्टो नो विचारः। यस्यां स्थित्यां वय मद्य समस्तां विमृश्य कस्यां दिश्यस्माभि रुपसर्तव्यं वापसर्तव्यमित्येतदस्माभि र्निर्णीत मस्ति। यस्यां दिशि पदमस्माभिः समुत्थापितं ततो न निवर्तनीयं तत्। पदप्रतिरोधस्य त्वर्थोऽस्त्यपसरणम्। नापसरणं कदापीष्टम्। वयमग्र एवोपसरिष्यामः। यदाहमिति वदामि यद् वयं निरन्तरं पुरः एवो पसरिष्याम स्तदा वयमित्येतस्मिन् पदे भवन्तः सर्वेऽप्यन्तर्हिताः"।

अन्ततो रामगढे पाटलिपुत्र (पटना) नगरस्यैव प्रस्तावः पारितोऽभवत्। यत्र, सम्प्रति राष्ट्रियमहासभा सविनयावज्ञान्दोलनं व्यतिरिच्य न किमपि साधनं निदधातीति निगदित मभूत्। तथात्वेऽपि न राष्ट्रियमहासभा तदधिवेशनानन्तर मपि आन्दोलनस्य सञ्चालनं न व्यदधात्। सा जनतायां संगठनं कर्तु मान्दोलनार्थञ्च सज्जीभवितु मन्वरुणत्। सत्याग्रहस्याप्यनिवार्यतोपस्थितासीत्। म० गान्धिन आदेशेन प्रान्तीयराष्ट्रियसभायाः समितिभिः सत्याग्रहसमितित्वेन स्वकार्यं सवेगं प्रारब्धम्; ताभिः सक्रियनिष्क्रियसत्याग्रहिणा मन्वयने संलग्नाभि रभूयत। ताः स्वकीयेष्वावान्तरिकेषु व्यतिकरेषु रचनात्मकस्य कार्यक्रमस्य प्रगते र्विवरणमपि प्रास्ताविषुः। अथ च राष्ट्रिय महासभायाः समितीनां ये सदस्या निर्धारित-प्रतिज्ञाया ग्रहणे सन्त्यसमर्था, राष्ट्रियमहासभाया अनु-

शासनस्थाः सन्तोऽप्यान्दोलनस्योत्तरदायित्वं स्वस्कन्धाभ्यां वोढु मक्षमास्ते राष्ट्रियमहासभायाः पदेभ्यः पृथग् भवेयु रित्येतदर्थञ्च यत्नः कृतोऽभूत् ।

साम्यवादिनः, समाजवादिनो, राष्ट्रियप्रजातन्त्रवादिनः, कृषीबलाः, अग्रगामिनश्च महात्मगान्धिनो नीत्यां न सन्तुतुषुः । राष्ट्रियमहासभाया नीतिं विरोद्ध मविश्वासिनः 'किसान नगरे' सुभाषचन्द्रवसोः सभापतित्वे समानान्तरं सम्मेलन मायोजयामासुः। एतेषां विरोधिनां संख्यापि बह्वी बभूव । तेपटना-प्रस्तावविरोधे नैजरुचिं प्रकाशयामासुः । अध्यक्षपदाच्छ्रीसुभाषचन्द्र वसु भारतीयजनतामचेतयत् "न सा विधानपरिषद उपहासप्रदयाचितकानायेनिपत्य स्वमार्गं विस्मरेत्; नागराधिकाराणां स्वतन्त्रताया उपरि क्रियमाणाक्रमणानि विरोद्धं शक्तिमदान्दोलनस्योपक्रमः करणीयो वर्तते । अतः स्वतन्त्रताप्रिया देशस्य दीननिर्धनजागरुकजनताकर्षक-श्रमिकेषु सान्द्रतरं सम्पर्कं स्थापयेयुः । आर्थिकस्वतन्त्रतायाः कृतेऽस्मदीयेऽस्मिन्नाहवे जनताया योगोऽधिगतो वर्तते । अस्मिन् कार्ये न मनागपि विलम्बोऽस्ति सह्यः । तथा यत्नः करणीयो यथा जनवृन्दे आशोत्पद्येत; नैतिकञ्च बलं संवर्धेत । स्थानीयस्यान्दोलनस्य बलवत्तरत्व मपेक्ष्यते; नवान्दोलनस्यापि प्रक्रम इष्यते" ।

नेता सुभाषचन्द्र आन्दोलनार्थं जनतां भृश मनूनुदद् येन सा तत्रात्मानं जुहुयादपि । तदीया बलवती प्रेरणा जनतायां प्रसाद मुत्साहं समचीचरत् ।

इतो मार्चमासे, १९४० तमेशवीय सम्बत्सरे मुस्लिमलीगधिवेशन लाहौरे समजायत । अस्मिन्नधिवेशने लीक् पाकिस्तान मियेष तेषु प्रदेशेषु यत्र मुसलमानानां संख्या भूयसी वर्तते । संस्था लीगाख्या भारतस्योत्तरपूर्वभागे उत्तरपश्चिम भागे च पाकिस्तानस्य निर्माणार्थं स्वविचारमभिव्याञ्जीत् । महाराज्यपालस्य वक्तव्येन मुस्लिमलीगुत्साह प्राप, सा संस्था द्विराष्ट्रसिद्धान्तरागमुच्चैरुत्थापयामास । राष्ट्रियमहासभा अल्पसंख्यक समस्या समाधाने यद्यपि प्रयतमानासीत् परं जिन्नानेतुः सम्प्रदायान्धतया हठधर्मितया च न सन्धानं कथ-

मपि भवितु मशकत् । शनैः शनैः मुस्लिमलीक् प्रभावो मुसलमानेषु भृशं ववृधे ।

युद्धे जर्मनी पोलेण्ड-नार्वे-डेनमार्क-हालैण्ड-वेल्जियम देशेषु स्वाधिकारं संस्थाप्य फ्रान्सदेशस्य पेरिसनगरे प्रवेशं चकार। इंगलेण्डे चाक्रमणं कर्तु विचचार। परं जर्मनदेशस्य युद्धभारोऽपि नितरा मवर्धत । युद्धंहि इंगलेण्डस्य स्थितिं शोचनीयां चकार। स देशो भीषण परिस्थित्यां पङ्के द्विप इव व्यषीदत् । राष्ट्रियमहासभायाः कार्यसमिते ७।७।१९४० तमेशवीयतिथौ बभूवाधिवेशनम् । तत्र प्रस्तावोऽयमभूत् पारितः—अस्माकमयं दृढो विश्वासोऽस्ति यदस्मिन् काले ब्रिटेनदेशो भारतञ्च याः समस्याः स्वसमक्षे पश्यतस्तासां समाधानाय एक एवो पायोऽयं यदिंगलेण्डदेशो भारतं स्वतन्त्रं कुर्वीत। तत्काले च स तदर्थं केन्द्रे एकं स्थायि राष्ट्रियं शासनं प्रतिष्ठापयेत् : अस्थायिसाधने सत्यपि स ब्रिटेनदेशः केन्द्रीयव्यवस्थापिका सभायाः समस्तानांनिर्वाचित वर्गाणां विश्वासं लभेत; तद् व्यतिरिच्य सः प्रान्ताना मुत्तरदायिशासनस्य सहयोगञ्चाप्नुवीत" । कार्यसमित्येदमपि घोषितं—चेच्छासनं तानि साधनानि सक्रियाणि कुरुते, तदा राष्ट्रियमहासभादेशं रक्षितुं प्रभावशालिनि संगठने पूर्णसहयोगदानायोद्यता भविष्यति ।

इत्थं निर्दिष्टे प्रस्तावे भारतीयस्वतन्त्रताया घोषणार्थं मस्थायि राष्ट्रियशासनस्थापनायाश्च वार्ता पुनः समुत्थापिताभूत् । देशस्यरक्षणाय प्रभावसम्पन्ने च संगठने राष्ट्रियमहासभायाः पूर्णसहयोगलाभाय तत् कृत्स्नमपि प्रथमात्ययथिकत्वेन निर्दिष्ट मजायत ।

७।१९४० तमतिथौ पूनाया मखिलभारतीयराष्ट्रियमहासभायाः समिते रधिवेशनं प्रथम मजायत । तत्र दिल्ली-प्रस्ताव एव परिपोषितोऽभूत् । इदञ्च स्पष्टतांनीतम् – 'स्वतन्त्रता प्राप्तिनिमित्तेन योत्स्यमाने युद्धे राष्ट्रिय महासभा अहिंसासिद्धान्तं कठोरतया क्रियायां परिणतं करिष्यति परं वर्तमानपरिस्थित्यां सा (राष्ट्रियमहासभा) तं प्रयत्न मवलम्बते येन भारतराष्ट्रियतारक्षणसिद्धान्तः समन्वितो भवितुं क्षमता

मधिव्रजेत्[1]। प्रस्ताव एषन सुगतमतयाभवत्पारितः। प्रस्ताव पक्षे ९७ मतानि , विरोध च ६३ मतानि दत्तान्यजायन्त । विरोधिषु प्रमुखा आसन्—डॉ० राजेन्द्र प्रसादः, डॉ० प्रफुल्लचन्द्र घोषः, आचार्य कृपलानी, श्री शङ्करदेवः, श्री हरिकृष्ण महतावश्च । अविरोधिषु त्वासन्—मौ० आजादः, पं० जवाहर लाल नेहरू, श्री राजगोपालाचार्यश्च ।

पूनाप्रस्तावोत्तरे महाराज्यपालो लॉर्ड लिनलिथगो ८।८।१९४० दिनाङ्के, वक्तव्यं यत् प्रकाशयाञ्चकार तदीयानि तत्वानि साररूपेणेमानि—

(१) विभिन्न राजनीतिकवर्गैः (तन्नेतृभिः) सह मेलनं विधाय, ब्रिटिशशासनस्य परामर्शं परिगृह्य, जनता-प्रतिनिधिभूतानां भारतीयानां कार्यकारिण्यां समन्वयनम् ।

(२) युद्धपरामर्शप्रदायिन्यां समित्यां भारतस्य समस्तानामपि वर्गाणां समावेशनम् ।

(३) न ब्रिटिशशासनं शासननिर्माणाय कस्यचनैकस्य ग्रहणं करिष्यति; न तत् सत्तां कस्यचन वर्गस्य हस्ते निधास्यति; इदं तदैव सम्भवं यदा, सर्वे राजनीतिकवर्गाः स्वीकुर्युः ।

(४) स्वदेशस्य संविधानं स्वयं भारतं चिकीर्षतीत्येतदांग्लशासन प्रीणयति । अल्पसंख्यकान् प्रति उत्तरदायिपूर्तिश्च तोषावहा ।

(५) ब्रिटिशशासनम्प्रति साहाय्यं दातुं जनतानुरुध्यते । सा लोकसभायाः (*Comman Weath*) अङ्गत्वेन च स्वतन्त्रतां प्राप्तुं ययेत ।

एतस्या घोषणाया अनन्तरं महाराज्यपालो राष्ट्रियमहासभाया अध्यक्षं मौ० अब्दुलकलाम आजादम् आमन्त्रयाञ्चकार, परं न श्रीमानाजाद आमन्त्रणं स्वीचकार । सः स्पष्टमेवागादीत्—राष्ट्रियमहासभायाः स्वातन्त्र्ययाचने, महाराज्यपालस्य च कार्यकारिण्या विस्तरणे न कोऽपि समन्वयोऽतः

१. श्री डॉ० राजेन्द्र प्रसादः *At the feet of M. Gandhi, P. 207*

पारस्परिकं मेलनं नापेक्ष्यते [1]।

राष्ट्रियमहासभायाः स्वराज्यमन्तव्यताया अवमानना, अल्पसंख्यकविचार—विरोध—संविधान समासम्बन्धेऽस्पष्टता इत्येनेष्वाधारेषु महाराज्यपालकृतवक्तव्य मतितरा मालोचित मभूत्।

मुस्लिमलीगभिधाना संस्था महाराज्यपालस्य वक्तव्यं न स्वीचकार न चास्वीचकार। सा संयुक्तभारतविचारं व्यरौत्सीत्। पाकिस्तानस्य स्थापनामन्तरेण समस्यायाः समाधानमिति साचकथत्। सा बलपूर्वकमवादीद् यत् तत्सम्मतिप्राप्ति विना भारतस्य किमपि संविधानं, कामं तत् स्यान्मध्यमकाल विषयकं वान्त्यं, न निर्मितं भवितुं शक्यम्। कार्यपालिकासमितिमधिकृत्य राष्ट्रिमहासभाया मुस्लिमलीक् संस्थायाश्च सदस्याः समानमधिकारं लभेरन्निति स्वमतं सा प्रकटीचकार। साम्प्रदायिकी समस्यानेन विधिनांग्लशासनस्य नीतिम्प्रति परमानुकूलासिद्ध्यम। मुस्लिमलीक् स्वाभिमतकार्यसाधनायै दिनानुदिनं हितकारिणीं परिस्थितिं प्राप्तु मवसर मवाप।

राष्ट्रियमहासभाया नीति मुद्दिश्य एमरिणा (*Amery*) भारतमन्त्रिणोक्तम्—"यदि राष्ट्रिय महासभा भारतीयजीवनस्य समस्तानामपि क्षेत्राणां प्रतिनिधित्वं कर्तुं प्राभविष्यत्, यदा सोद्घोषयेत्, तदा समस्यायाः स्वरूपमेव किमप्यन्यदभविष्यत्, तत्समाधानं च तदा सरलमभविष्यत्। अद्य, यद् राष्ट्रियसङ्कटोत्पत्तिः सञ्जातास्ति; तत्र कारण मस्ति भारतीयराष्ट्रिय जीवनस्य पर्याप्तविभिन्नत्वम्। न च वयम्। वयं तु स्वराज्यं दित्सामः"।

महाराज्यपालस्य वक्तव्ये विचारं कर्तुं मखिलभारतीयमहासभायाः समिते रधिवेशनं १५।८।१६४० तमेशवीयतिथावभूद् बम्बईनगर्याम्। तदधिवेशने निश्चयो विहितो यदेतावन्तं कालं राष्ट्रिय महासभा ब्रिटिशशासनम्प्रति साहाय्यं प्रदातुं यथाबलं प्रायितष्ट परं न शासनं तत् स्वीचकार; अतः

---

१. मौ० अबुल कलाम आजादः-*India wins freedam*, *P. 36*

साम्प्रत मागतोऽस्ति समयो यद् राष्ट्रियमहासभा किमपि सक्रियं पद् मुत्थापयेत्। तस्मिन्नधिवेशने म० गान्धिनो नेतृत्वे सविनयावज्ञान्दोलनचालनार्थं निर्णयः कृतः। न तदान्दोलनं व्यष्टिगतं स्यान्न च जनान्दोलनम्। आन्दोलने भाषण स्वतन्त्रता प्राप्ता भवेत्। अहिंसाया महत्ता पूर्णतया तत्रादृता स्यात्। अनेनान्दोलनेन धुरिराष्ट्रं (*Axis foowers*) प्रति साहाय्यदानं नासीन्न च ब्रिटिशशासनस्य कदर्थनाय प्रक्रमः। तदान्दोलनं नैतिकविरोध भावनाभिव्यूक्तीकरणार्थ मासीत्। केचिन्निश्चिता एव जना आन्दोलनार्थं मनुमता अभूवन्। तेषां भवेदयमुद्घोषः धनेन जनेन च युद्धार्थं साहाय्यप्रदानं नोचितं भवेत्। सत्याग्रहिषु सर्वप्रथमं नाम आचार्य विनोवा भावे महाभागस्यासीत्। स महात्मनो गान्धिनः शिष्यः सेवाग्रामाश्रम मध्यवसत्। १३।१० १६४० तमेशवीयदिनाङ्के राष्ट्रियमहासभायाः कार्यकारिणी म० गान्धिनः सत्याग्रहयोजनां स्वीचकार। १७।-१०।१६४० तमेशवीय दिनाङ्के सविनयावज्ञान्दोलनमा रब्धमभूत्। विनोवा भावे युद्धे ब्रिटिशशासनस्यकृते न साहाय्यं देयमिति भाषणं कर्तुं प्रावर्तत शासनं तं विन्दिनं चकार। ततश्च पण्डितो नेहरू आन्दोलने भागं ग्रहीतुं प्रचक्रमे। परं भागग्रहणात् प्रागेव इलाहाबादसमीपे स वन्दीकृतः। चतुर्वर्ष भोग्यदण्डदण्डितो ऽभवत् सः। ततश्च राष्ट्रियमहासभायाः सर्वे प्रमुखप्रमुखनेतारः स्वस्वक्रमेण सत्याग्रहं चक्रुः; कारागारे च तेऽक्षिप्यन्त। १६४१ तमवर्षस्य निदाघकालपर्यन्तं बिंशति सहस्रजना वन्दिनोऽभूवन्। म० गान्धी कारालयाद् वहि रेव समतिष्ठत। सः सत्याग्रहं न कृतवान्। सः सत्याग्रहगतिविधेः संरक्षणे निरीक्षणेचात्मानं न्ययूयुजत्।

राष्ट्रियमहासभाप्रवर्तितसत्याग्रहान्दोलनानेहसि महाराज्यपालः स्वकार्यकारिण्याः समिते विस्तार मकरोत्। तत्र अष्ट सदस्या आसन् सम्प्रति त्रयोदश जाताः। तेषु अष्टौ भारतीयाः पञ्च च आंग्लाः (महाराज्यपाल मादाय)।

कदाचिच्छासनं तत्कार्यं शासनार्थं महत् कार्यं मेने; परं वस्तुत स्तदासीन्महत्त्वरहितम्। महत्त्वपूर्णेषु विभागेषु आंग्लानां

हि अधिकाराधिष्ठितत्वात्। रक्षा-विभागः, गृह-विभागो वित्त-विभागः सन्ति महनीयमहत्ताभाजो विभागास्तत्रैवांग्ला आसीना आसन्। कार्यकारिण्यां समित्यां गृहीताश्च सदस्याः शासनस्य कठोसम्परिपोषका आसन्। अम्बेडकरं विहाय सर्वेषामपि सदस्यानां निकुरम्बं राजनीतिकवर्गे भृश मनुरज्यति स्म। नेयं समिति रुत्तरदायिनी समिति रासीत्। सा महाराज्यपालस्याधीनताया मवर्तत। तम्प्रत्येव सासीदुत्तरदायिनी। राष्ट्रियमहासभा मुस्लिमलीक् चोभौ तामवाजानीताम्।

१९४१ तमाब्दे अक्टूबर नवम्बरमासयोः, द्वितीयस्मिन् महासमरे, मित्रराष्ट्राणां स्थिति र्गम्भीरतरतां दुःसहं च सङ्कटं प्रत्यपद्यत। जर्मनी प्रतिदिशं विजयी भवन् दृष्टोऽभवत्। स ब्रिटेनमभिभवितु मपि क्षमोऽभवत्। तदीया स्थिति र्जर्मन्याः करजालादुन्मोचयितुं स्वां दुर्बला ममन्यत। जर्मनी रूसानीकिनीमपि पराजयमानः पुरः समुपससार। ७।१२।१९४१ दिनाङ्के जापानदेशो युद्धे धुरिराष्ट्रेषु सम्मिलितो बभूव। जापानः पार्लहारवरे (*Pearl Harbaur*) परमभीषणं वाय्वाक्रमणमन्वतिष्ठत्। आसीत् तत्स्थानं प्रशान्तसागरे अमेरिकादेशस्य समरयानानां महाविशालकेन्द्रः। तदाक्रमणाद् अमेरिकादेशस्य बहूनि युद्धयानानि प्रणेशुः। ततश्च जापानदेशः शीघ्रमेव फिलीपाइनद्वीपसमूहे, हांग्कांग-इण्डोचाइना-इण्डोनेशिया-मलायाख्येषु देशेषु स्वत्वं स्थापयामास। ज़ापाने युद्धप्रवृत्ते सति, सम्प्रति भारतीयजनतायाः सहयोगासादन मतितरा मपेक्षितमिति ब्रिटिशशासनमनुबभूव। तत्सहयोगं विना जापानाक्रमणस्य साम्मुख्यं न सरलं कार्यमिति च तन्मेने। तद् भारतीयानां सहानुभूति प्राप्तुं दिसम्बरे, १९४१ तमाब्दे समस्तान् राजनीतिकवन्दिन उन्मुमोच। परं न तस्य गान्धिन उपरि कोऽपि प्रभावो न्यपप्तत्। आलोचयत् स तां नीतिं, नान्दोलनस्य च संवरणं युक्त ममंस्त। तस्यां सङ्कटमयस्थित्या मान्दोलनस्य समुपसंहरणं स राष्ट्रियमहासभाया नीते रवमाननमस्तीति तस्य मत मासीत्। स उद्घोषयामास 'ब्रिटिशशासनस्येयं नवा नीति र्न मम मानसस्य कमपि तारं स्पृशति; सत्याग्रह स्तं कालं

यावत् सक्रियं भवेत् यावद् राष्ट्रिय महासभायाः कार्यकारिणी समिति नं तं वर्जयति। ततश्च राष्ट्रियमहासभायाः कार्यकारिण्याहूताभूत्। अस्मिन् समये तस्याः पुरतो जापानजनितसङ्कटपूर्णपरिस्थितेः साम्मुख्यीकरण मासीत्। स्थिति स्तु अनुमानमिद मजनयद् यज् जापानीयसेना क्षिप्रमेव भारतप्रवेशे सफला स्यात्। अतस्तदीयं ध्यानं जापानीयादाक्रमणाद् भारतस्य रक्षायां बभूवावर्जितम्। स्वकीयायां नीत्यां परिवर्तनं सोचित ममंस्त। २३।१२।१९४१ तमेशवीयतारिकायां कार्यसमिति र्बारदोल्यां बभूव। तत्र प्रस्तावोऽयं निर्धारितोऽभूत् "ब्रिटेनस्य भारतीयनीत्यां कीदृशेऽपि परिवर्तने ऽजातेऽपि, प्रवृत्तस्यायोधनस्य व्यापकविस्तृतस्वरूपधारित्वात् तस्य च भारतद्वारप्रत्यासन्नत्वात् कार्यसमितिः समुत्पन्नामिमां नवां परिस्थितिम्प्रति स्वचेत आवर्जयितु कामास्ति। स्वाधीनतार्थं युद्धे प्रवृत्तेषु आक्रान्तेषु जनेषु भारतस्य सहानुभूति र्वर्तते। अस्त्यपि नैसर्गिकमेतत्। परं स्वतन्त्रं भारतमेव राष्ट्रियताधारे देशस्यरक्षाया उत्तरदायित्वं स्वस्कन्धेन वोढुं क्षमते; युद्धहेतोश्च पुरः समागतान्युद्देश्यानि रक्षितुं च प्रभवति। भारतस्याखिल मपि वातावरण माङ्गलपरिपन्थिन्या अविश्वासवत्या च भावनया व्याप्त मस्ति; एतस्यां परिस्थित्यां न गुरुगुरुतरव्यापकप्रत्याश्रतयः कमप्यन्तरं पातयितुं शक्नुवन्ति, न च भारतं स्वेच्छयावलेपवतः साम्राज्यवादस्य कामपि सहायतामेव कर्तुं शक्नोति; यतोहि तद्दृष्टयां साम्राज्यवादस्यैकनायकत्वस्य चान्तराले कीदृगपि भेदो न वर्तते"। निर्दिष्टेऽस्मिन्नेव प्रस्तावेऽभिहितमिदमप्यभूत्—'राष्ट्रिय महासभा आगमिष्यत्सु कठिनेष्वहःसु, सुदृढे संगठने प्रवले चानुशासने जनतायाः सेवां कर्तुं शक्नुयात्; अत्रेद मपि सेच्छति यत् तदीयाः सर्वाः समितयो राष्ट्रभक्ताश्च जनाः स्वस्वक्षेत्रे जनताया विश्वासभाजनीभवन्तः स्वां स्थितिं नेनिज्युः। साम्प्रतं राष्ट्रियमहासभाजनानां कारागृहस्थितत्वमपि म० गान्धिन इष्ठं; स इच्छति महासभाया जना जनताया हृदयाद् युद्धभीति निर्गमयेयुः"। एतद्विधस्थिते रुद्भूतत्वात् कार्यसमिति रान्दोलनं निरोद्धुमवाध्यत।

यद्यपि युद्धं नाभून् मित्रराष्ट्रपक्षपाति, परं ब्रिटेनस्य प्रधानमन्त्री चर्चिलो भारतसचिवश्च एमरी भारतमधिकृत्य विचारेषु नीतिषु च न किमपि परिवर्तनमभ्यलषेताम्। पुनः कस्मात् कारणात् क्रिप्सायोगः प्रेषितोऽभूदित्येष प्रश्न इह उत्तिष्ठति।

इह कारणानि इमान्यासन्—

(क) इंगलेण्डस्य केचन जनाः शासनस्य ध्यानं भारतस्य राजनीतिक्याः समस्यायाः समाधानाय किमपि सन्तोषाधायकं पदमुत्थापयेदि त्येतदर्थं मावर्जयामासुः परं न ब्रिटिशशासनसत्ता तत्र ध्यानं निदधौ।

(ख) २।१९४१ तमदिनाङ्के जनरल चांगकाईशेकः स्वपत्न्या, कैश्चन सैनिकैरधिकारिभिश्च समं भारतमागात्। स भारतस्य प्रमुखेषु नेतृषु मिमेल। युद्धे ब्रिटिशशासनम्प्रति स्व-सहायतां प्रदातुं सम्मतिं प्रायच्छत्; येनाक्रमणकारिणः स्युः पराजिताः; स्वतन्त्रतायाश्च रक्षा भवेत्। स इदञ्च स्वसन्देशे-ऽभिव्यानक्—"अहं विश्वसिमि भारतयाच्ञा मप्रतीक्षमाणमेव ब्रिटिशशासनं तस्मै सद्य एव राजनीतिकीं शक्तिं प्रदास्यति; येन भारतीया अपेक्षितभौतिकशक्तीः समुन्नताः कर्तुं प्रभवेयु-स्तेऽनुभवेयुश्च यत् ते आतङ्कवादविरोधिनां राष्ट्राणां विजया-र्थमेवाजौ सहयोगिनो न सन्त्यपितु त इद मप्यनुभवेयु र्यत् तेषां सहयोगोऽसौ भारतीयस्वातन्त्र्यनिमित्तेन, तत्कृतसंघर्षे नून मेका युगान्तरकारिणीघटनास्ति। क्रियात्मिकया दृष्ट्या मम मते इयं मतिमत्तापूर्णानीतिः स्यात्; सा ब्रिटिशसाम्राज्यस्य यशः सर्वास्वपि दिक्षु वितनिष्यति"।

(ग) अमेरिकादेशस्य राष्ट्रपती रुजवेल्टोऽपि ब्रिटिशसत्तां भारतस्य समस्यायाः समाधानं विधातुं चेतयन् आटलाण्टिक-घोषणा समानरूपेण विश्वस्योपरि घटते; कस्मात् पुनः भारतं विप्रलभ्यत इत्यवोचत् (अत्रेदमप्युल्लेखनीयत्वेनापतति यदेकदा महात्मा गान्धी चर्चिलस्य पुरः पर्यनुयोगमिमं प्रास्तावीद् यत् किम् अटलाण्टिकघोषणायाः प्रभावो भारते निपतेत्? परं, तत्रासौ स्पष्टतया प्रत्यषेधीत्।

(घ) आस्ट्रेलियायाः परराष्ट्राधिकारिणापि विषयेऽस्मिन् स्वसमर्थनं पूर्णतया कृत मासीद् यच्चेद् भारतस्य सकाशाज् जापानविरोधिनी सहायताभीष्टास्ति तदा तत्स्वतन्त्रं कार्य्यम् ।

(ङ) २४।२।१९४२ तमदिनाङ्के, इंगलेण्डस्य लोकसभायां भारत मधिकृत्य मनोविनोदी विवादः सञ्जातः; लोकसभायाः सदस्या बहुमतेन भारते समुपस्थितस्य गतिरोधस्य निवृत्तये ऽवादिषुः परं स उपेक्षितयायामेव निपातितोऽभवत् ।

चर्चिलोऽगदच्चैकदाहं भारतमन्त्री चोभौ भारतम्प्रति औपनिवेशिकं स्वराज्यं दातुं कामयावहे परं भारतन्त्विच्छत्येव नं तत् तदर्थं स्वस्य योग्यत्वमेव नोऽस्माकं पुरतो निदधाति । स ततश्चास्माभि र्मन्त्रिमण्डल—सदस्यस्य भारतम्प्रति सम्प्रेषणाय निश्चयः कृतोऽस्ति सोऽस्ति श्रीक्रिप्स इत्येतच्चाभिदधौ । स एतदभिदधत् 'सर स्टुफोर्ड क्रिप्सः शासनस्य प्रतिनिधि र्भूत्वा भारतीयगतिरोध समापनाय भारतं गमिष्यतीत्यघोषयत् । क्रिप्समहाभागस्य प्रेषणे इत्येतानि कारणान्युदतिष्ठन् ।

क्रिप्समण्डलं सर्वत्र प्रत्युद्गत मभूत् आंग्लपत्राणि चर्चिल कृतघोषणायास्तस्याः स्वागतं कुर्वाणा स्तन्मण्डले हर्षं व्याञ्जिषुः । मौ० आजादो राष्ट्रियमहासभाया अध्यक्षः सर स्टुफोर्ड क्रिप्सं मित्र मिव मत्वा प्रसन्नमनसा तम्प्रत्युदगमत् ।

क्रिप्समहोदयो ब्रिटिशसत्तायाः प्रस्ताव मादाय भारत मागत आसीत् । सः प्रस्तावो निम्नलिखिताशयक आसीत्—

"भारतस्य कृते भविष्यत्काले वचनानीमानि पूरयितुं या चिन्तात्र भारते च प्रकटीकृतास्ति तत्र विचारयत् सम्राजो मन्त्रिमण्डलं स्फुटतया निश्चितेषु शब्देषु तानुपायान् ज्ञापयितुं स्वकीयमौचित्यं मनुते यानाश्रित्य तदधिभारतं सत्वरमेव स्वायत्तशासनस्य स्थापनां कर्तुमाकाङ्क्षति । एतदाचरणे तस्योद्देश्यमस्ति भारतीयस्य नूतनस्य संघस्यावतारणम् । सः स्वाधीनताप्राप्त उपनिवेशः स्यात् । ब्रिटेनस्य तत्साम्राज्यस्य च स्वाधीनताप्राप्तोपनिवेशान्तरैः सार्धं तत्सम्बन्धः सम्राजम्प्रति प्रतीक्ष्यतया राजभक्त्या च समुद्ग्रथितो भवन् सञ्चलेत् । एष

भारतीयसंघः पददृष्टया ब्रिटेनस्यान्यस्वाधीनताश्रितोपनिवेशा इव भवेत्। आभ्यन्तरिके शासने वैदेशिक्यां समस्यायां न सः केनापि प्रकारेण परवान् स्यात्। अतः सम्राजः शासनमुद्घोषयति—

(क) "संयुगस्य समाप्ते रनन्तरमेव भारतार्थं नवशासन विधाननिर्माणोद्देश्येन, भाविनि वर्णित आधारे एका निर्वाचिता संस्था स्थाप्येत।

(ख) विधाननिर्माणकारिण्यां संस्थायां देशीयराज्यै र्गृहीष्यमाणा व्यवस्था येन प्रकारेण कृता स्यात् तद्वर्णन मधः क्रियते—

(ग) सम्राजः शासन मनेन प्रकारेण कृतं विधान मङ्गीकृत्य तत्कार्यान्वितताप रकमुत्तरदायित्वं तस्यामेव स्थित्यां ग्रहीष्यति यदाधोलिखिताः समयाः पूर्ति गता भवन्ति—

(१) चेद् ब्रिटिशभारतस्य कोऽपि प्रदेशो नवं विधानं न स्वीकर्तु मिच्छेत्, तदा स वर्तमानवैधानिकस्थितेः स्थायित्वस्याधिकार माप्नुयात् परं प्रदेशस्याकाङ्क्षायां सत्यामियं व्यवस्थापि तत्र प्रवर्तेत; प्रदेशश्च तद्विध आत्मानं तत्रान्तर्भावयितु शक्नुयात्।

नवीने विधाने सम्मिलिततताया हेतोरनभिलाषिणः प्रदेशान् प्रति, तेषा मिच्छायां सत्यां, सम्राजः शासनं नव–विधानप्रदानं स्वीकरिष्यति, तदीयं पदमपि पूर्णरूपेण भारतीय संघ इव स्यात्। इदं विधानं तत्क्रमसंवादिन्यां सारण्या मधिष्ठापितं भवेद्, यस्योल्लेखः क्रियतेऽत्र—

(२) "सम्राजः सत्ताया स्तद्विधानकारिण्याः संस्थायाश्च मध्ये भवेदेकः सन्धिः। भारतीय स्कन्धेष्वारोपितस्योत्तरदायित्वस्य, आंग्लहस्तान्तरितस्य, सर्वासा मप्यपेक्षितानां समस्यानां पूर्णः समावेशोऽस्मिन् सन्धौ स्यात्। सम्राजः शासनद्वारेणदत्तान्याश्वासनानि ध्यात्वा सन्धौ जातीयाना मथ च धार्मिकाणा मल्पसंख्यकानां रक्षणाय प्रबन्धो भवेत्; परं तत्रेदृक् कोऽपि प्रतिबन्धो न निहितः स्याद्, यद्वशाद् ब्रिटिशराष्ट्र-मण्डलीयै रन्यैः सदस्यैः सह भारतीयसंघस्य नैजभाविसम्बन्धं

निश्चेतु मधिकारो न्यूनतां प्रपद्येत"।

"देशीयानि राज्यारिण नवविधानानुसारेण चलितानि स्युर्वा न चलितानि स्युर्नवपरिस्थितिं दृष्टौ निधाय तत्सन्धीनां व्यवस्थायां संशोधनमपेक्ष्येत"।

(घ) संग्राम समाप्त्यवधि यावत् प्रमुखसम्पदादरवद्भि र्नेतृभिश्चेदन्यस्याः कस्या अपि प्रणाल्यार्हेतोः संहत्य निश्चयो न कृतः स्यात् तदा विधाननिर्मात्र्याः संस्थाया निर्माण मित्थं भवेत्—

"प्रान्तीय निर्वाचनपरिणामेषु ज्ञातेषु सत्सु (युद्धसमाप्तौ निर्वाचनाना मावश्यकताऽऽपतेत्) प्रान्तीयानां निम्नविधान सभानां सम्पूर्णाः सदस्या मिलित्वा निर्वाचनमण्डलरूपेण निषत्स्यन्ति; आनुपातिके च प्रतिनिधित्वाधारे विधाननिर्मात्र्याः संस्थाया निर्वाचनं ते करिष्यन्ति। निर्वाचनमण्डले यावन्तो जनाः स्यु स्तावतां दशमांशसंख्या विधाननिर्मात्र्यां संस्थायां स्यात्।

ब्रिटिशभारतम्प्रति यथा जनसंख्यानुपातेन प्रतिनिधि-नियतीकरणेऽभिहितं भवेत् तथैव देशीयानि राज्यान्यपि प्रति तदेवोक्तं भवेत्, एतादृशानां प्रतिनिधीना मधिकारा अपि ब्रिटिशभारतस्य प्रतिनिधीना मधिकारा इव स्युः।

(ङ) भारतोन्मुखसङ्कटस्य स्थित्यां नवविधानप्रयोगा-स्थित्यां च सम्राजः शासनं भारतस्य रक्षणं, नियन्त्रणं, निर्देशनञ्च प्रति उत्तरदायित्वं सम्पूर्णविश्वयुद्धप्रयत्नाङ्गत्वेन स्वकरायत्तमेव विधास्यति। परं भारतीयाया जनतायाः सह-योगेन देशस्य सम्पूर्णसैनिकार्थिकसाधनानां संगटितीकरणस्यो-त्तरदायित्वं भारतशासनाधीनं भवेत्। सम्राडिच्छत्यतस्तदी-येच्छा भारतीयजनताया विभिन्नवर्गीयनेतॄन् आह्वयति, ते स्वदेशस्य, ब्रिटिशराष्ट्रमण्डलस्य, मित्रराष्ट्राणाञ्च सम्मतौ परामर्शे च द्राक् प्रभाववर्षिणा विधिना भागं गृह्णीयुः। इत्थं ते महत एकस्य कार्यस्य सम्पादने रचनात्मकं साहाय्यं कर्तुं प्रभविष्यन्ति। भाव्यञ्च कार्येणानेन भाविन्याः स्वाधीनतायाः कृते नितरां महत्त्वपूर्णेन"।

क्रिप्सप्रस्तावेषु विमर्शणार्थं निषण्णा कार्यसमिति भारतीयराष्ट्रियमहासभायाः क्रिप्सप्रस्तावनामसन्तोषजनकत्वं प्राप्तवती। न तै र्भारतस्य मन्तव्यानि पूर्णानि शक्यानीति सा दृष्टवती; पर मिदन्तु स्वीकरणीयमस्त्येव यत् क्रिप्सप्रस्तावेषु १९४० तमवत्सरस्य घोषणायाः प्रभावोऽवश्यं निपतित आसीत्। अत्र विभिन्नवर्गपरितोषाय विभिन्नानि तत्त्वान्य-विद्यन्त। अत्र राष्ट्रियमहासभायाः पर्याप्ततोषकरं मन्तव्यद्वयं स्वीकृत मासीत्। ते मन्तव्य एते—(१) भारतस्वतन्त्रताया घोषणा, (२) विधाननिर्माणाय विधानसभा। देशीयानां राज्यानां प्रसादनाय, मुस्लिमलीक्संस्थायाश्च प्रमोदनाय भारतीयसंघेऽन्वयन मनन्वयनं वा तदि (देशीयराज्य-मुस्लिम-लीक्) च्छाधीनमित्येतच्चात्र निर्दिष्ट मासीत्। एतावदेवनात्र स्वजनताया इच्छाया अवगतीकरणं विना देशीया नरेशाः स्वप्रतिनिधिनियुक्तीकरणाधिकारे स्वतन्त्राः कृता आसन्। हन्त, क्रिप्सप्रस्तावाः सर्वप्रसादनप्रयत्नवन्तोऽपि न तथाचरितुं क्षमाः अजायन्त। एतस्मिन् विषये प्रकाशक्षेपोऽपेक्ष्यते—

(१) युद्धे सति समाप्ते, औपनिवेशिकं स्वराज्यं दत्तं स्यादि-त्येतद् ब्रिटिशशासनाश्वासनस्य सन्तोषा सन्तोषजनकत्वात्। तद्-विधान्याश्वासनानि प्रायेणावर्तमानपरिच्छिन्नानि भूत्वा भविष्य-त्कालमेवाभिव्याप्नुवन्ति। भीषण परिस्थित्या मेव वर्तमानोऽने-हाध्यानावस्थितो जायते। भारतीयजनता तु पुनः पुनः ब्रिटिश-शासनेन विप्रलब्धासीदतः सा न तदीये तद्वचस्यपि विश्व-सिति स्म। तस्मिन् काले ब्रिटिशसाम्राज्यं स्वयमेव शोचनीया-यांस्थित्या मवर्तत।

(२) एकतस्तु मुसलमानाः पाकिस्ताननिर्माणचिह्नानि प्रस्तावेभ्यस्तेभ्यो दृष्टुमवसरं लब्धवन्त एकतश्च हिन्दूमहासभा भारतीयभारतस्याखण्डतोच्छिन्नतोन्मुखेति दृष्ट्वोद्विविजे।

(३) प्रस्तावेषु तेषु देशीयराज्यसंविधानसभानां सदस्य-स्य नियुक्तेः का व्यवस्था स्यादिति न स्पष्टीकृतमासीत्।

(४) युद्धकाले देशस्य रक्षायाः समस्तोभर आंग्लहस्ता-धीनस्तत्र परिलक्षित आसीत् किञ्चांग्लोभवेत् सेनाया:

सर्वोच्चाधिकारो (*Commander in Chief*) भारतीयसेनाया नीत्यां तदीयं कृत्स्नं नियन्त्रणं मश्नुते स्म ।

राष्ट्रियमहासभा तु क्रिप्सप्रस्तावान् न स्वीचकार । कार्यकारिण्याः समिते निर्माणे, कार्येषु, महाराज्यपालस्य तेषु तेषु च कार्यकलापेषु न किमपि सन्धानं भवितु मार्हत् । रक्षायाः प्रश्न आसीन्महत्त्वपूर्णः । महाराज्यपालो नाम्नैव शासकः स्याद् वा वैधानिकशास्तृत्वेन कार्यं कुर्वीत; समस्तसत्तायां मन्त्रिणा मधिकारो भवेन्न वा; परं नात्र ब्रिटिश शासनं समुद्यत मासीत् । न वस्तुतो ब्रिटिशशासन मैच्छद् गतिरोधस्यान्तम्; तत्तु भारतीयानां पारस्परिकमतभेदात् समस्या न समाधीयत इत्येतं हि अमेरिकादिदेशेषु प्रभावं क्षेप्तु मभिलषते स्म । तत्तु छल मारचय्य जापानं विरोद्धुं भारतात् साहाय्यं प्राप्तुं तद्-विधप्रयत्ने रत मासीत् ।

मुस्लिमलीक् च क्रिप्सप्रस्तावंनाङ्गीचकार । पाकि-स्तान स्थापन चिह्ने दृष्टे सत्यपि, मतग्रहणस्थित्या मुत्पन्नायां सत्यां मतानि मुसलमानेभ्य एव गृहीतानि स्यु र्न च मुसलमानेतरेभ्यः इति शङ्काभूत् । बङ्गाल-पञ्जाबप्रदेशयो र्मुसलमानांनां बहुमत मासीत् । परं नासीत् तन्मतं प्रभूततायाम् । राष्ट्रियमुसलमानानां सम्मि-लितत्वे सति, हिन्दुषु, ते (मुसलमानाः) भारतीयसंघे स्वान्त-र्भावं समुद्घोषयितु मर्हन्तीति बलीयस्यूहासीत् । अतः मुस्लिम-लीग् लोकमतग्रहणदशायां मुसलमानमतैरेव "तस्य निर्णयः स्यादिति काङ्क्षति स्म । परमेतत्स्वीकरणमासीदसम्भवम् ।

क्रिप्सप्रस्तावाः समस्तै राजनीतिकवर्गै रस्वीकृताः । ततश्चासफलो भूत्वा श्री क्रिप्स इंगलेण्डं प्रतस्थे । वार्ताभङ्गात् प्रागेव अमेरिकास्थो लॉर्ड हेलिफेक्सः, सः कदापि भारतस्य महाराज्यपालोऽपि बभूव, अमेरिकायां भाषमाणो राष्ट्रियमहा-सभां कटुतयाऽऽलोचयामास । भारतीयकृतक्रिप्सप्रस्तावन्यक्-करणं स न्यक्चकार । तेनाभिहितम्—"अस्मत्प्रयत्ने सत्य-सफले, ब्रिटिशशासनं गुरुगुरुतरसंगठितभारतीयवर्गाणां साहाय्यं सहयोगं च विनैव विवशं भूत्वा स्वकर्त्तव्यं पालयिष्यति ।

नास्माकं कृते राष्ट्रियमहासभा स्वसहयोगं प्रदत्तवती; सदा वञ्चिता एव वयं जाता ततः। परम् अस्ति राष्ट्रियमहासभेदृशी या न सम्पूर्णस्यापि भारतस्य प्रतिनिधित्वं करोति; न भारतस्य अन्याः संस्थास्तदीया सम्पूर्णभारतप्रतिनिधितां स्वीकुर्वन्ति"।

वस्तुतस्तेनेदं भाषण ममेरिकां तोषयितु मेव कृतम्। आसीदेव क्रिप्सयोजनाया उद्देश्यम्—अमेरिका-परितोषणम्। न च भारतीय वैधानिकसङ्कटस्य समापनम्। भारतान्निवृत्य-सरस्टेफोर्ड क्रिप्सोऽमेरिकाजनतायाः कृते आकाशवाण्याभाषत-"वयं भारतीयान् नेतॄन् प्रति तत्कालवर्तिनो महाराज्यपालस्य शासनपरिषदि तादृशं प्रस्तावं प्रतिनिधित्वप्रदाननिमित्तेन निहितवन्तो यादृशं प्रतिनिधित्वं भवदीयास्ते मन्त्रिण उपयुञ्जन्ति ये भवदीयं राष्ट्रपतिम्प्रति सन्ति परामर्शदातारः"। एतावदेव सोऽनृतं न बभाषे; स इदमप्यभाषिष्ट—"राष्ट्रियमहासभाल्पसंख्यकानाच्छाद्य तेषु स्वत्वनां वितनीतु मभिलषते। सेच्छति तद्विनाशनम्"। ईदृशानृतमयं भाषणं क्रिप्सस्य भवेदिति न भारतीया आशासत। डीक्वेन्सी तद् भाषणेऽब्रूत—धूर्तः क्रिप्सश्छद्मना कपटेन च द्विरावृत्ताभ्यां चालाभ्यां कार्यं साधयितुं व्यापृत आसीत्। ईदृशेऽनुचिते कर्मणि सोऽल्पमप्यनुशयं न निधत्ते स्म। तमधिकृत्य महात्मना गान्धिनोक्तम्—"अहमिदं विलोक्यातितरां दूये यत् क्रिप्स इव जनोऽपि तामसुरतां बिभर्ति। स्वकार्ये सः स्वप्रतिष्ठां भृश मक्षिणोत्। प्रो० लास्गीकथितं च क्रिप्सयोजनाया नाटकत्वं प्रतिपादयति। राष्ट्रियमहासभाया अध्यक्षेण सह संलपन् स यत् किमपि प्रोवाच ततः सः समयान्तरेण बभ्रंशे।

जापानाक्रमणसमये आंग्लाना मवस्था भृशं शोचनीयतां गतासीत्। ते कापुरुषता मबिभरुः। तेषां युद्धनीति र्जनता-निपीडनकारिण्यजायत। वर्मातः सहस्रशो भारतीयाः क्षुधिता विवसना दुःखिता भवन्तो भारत माजग्मुः। पूर्वीयबंगाले, पूर्वीयसमुद्रतटे च विद्यमानेषु प्रदेशेषु सर्वत्र भीति र्व्याप्तासीत्। भारतीया दासाइव राजकीयकर्मचारिणा मधिकारिणां चादेशं

पालयेयुरक्षरश इत्येषा शासनम्य निन्द्या नीतिरासीत्। अनेके प्रमुखा राष्ट्रियमहासभाया नेतारः कारागारे क्षेपिताः। भारते तदानीं वृहन्नैराश्यं विततमासीत्।

राष्ट्रियमहासभा युद्धकाले आंग्लशासनमार्गे बाधामुपस्थापयितुं नैच्छत् परं सा तस्य (शासनस्य) पुरो नतमस्तकापि भवितुमुद्यता नासीत्। न सा समरे शासनस्य सहयोगिन्यपि बुभूषति स्म। तदा राष्ट्रियमहासभाया मान्यो हि सदस्यः श्री राजगोपालाचार्यो ब्रिटिश सत्तां विरोद्धुं संयुक्तव्यूहमपि रचयितुमचीकमत। स मुस्लिमलीग संस्थाया मन्तव्यं स्वीकर्तुं समितेः पुरः प्रस्तावं न्यदधात्; परं राष्ट्रियमहासभा तं प्रस्तावं न स्वीचकार। ततोऽसावुन्मुक्तो भूत्वा तत्प्रचारेऽलगत्; मद्रासविधानसभायां तदाशयकं प्रस्तावमप्येकं स्वीकृतं कारयामास। ततश्च स राष्ट्रियमहासभासदस्यतातः कार्यसमित्यां स्वत्यागपत्रमपि निदधौ।

प्रमुखा राष्ट्रियमहासभायामेतारः कारागारे क्षेपिताः। भारते तदानीं वृहन्नैराश्यं विततमसीत्।

अस्मिन् समये महात्मनो गान्धिनो विचारा पर्यवर्तन्त। आंग्लैस्त्वरयैव भारतं त्याज्यमित्येतत् सोऽचिन्तयत्। तेषां स्थितिर्जापानीयान् भारतोपर्याक्रमणं कर्तुं प्रोत्साहयतीति स मेने। एतावदेव न, स न केवलं भारतमपितु समस्तम् एशिया महाद्वीपमांग्लाजह्युरित्येतदपि विचारयामास। तद्विचारेण इह स्वसाम्राज्यमोहं संवृत्य तेषां ब्रिटेन-गमनं समीचीनमिदानीमित्येतदपि स विममर्श। शान्त्या सम्प्रत्यन्यायसहनं का पुरुषत्वं स्यादिदानीन्तु शासनं विरोद्धुं पदमुपसारणीयमेव, कामं तस्य मध्ये कीदृगपि प्रभावो निपतेत्। आंग्लेषु प्रस्थितेषु; विभाजनं समाप्तं भवितुमर्हति। हिन्दु-मुसलमाना युगपन्मिलित्वा स्वदेशं रक्षितुं क्षमाः स्युरित्येतं निश्चयं स ययौ।

जुलाई मासे, १९४२ तमाब्दे राष्ट्रियमहासभायाः कार्यसमितेरधिवेशनं वर्धायां बभूव। तस्मिन्नधिवेशने म० गान्धिनो विचारा मान्या अभूवन्। तत्र पारिततां नीते प्रस्ता-

वेऽभिहित मिदमभूत् - अधुनानुदिनं घटिताभ्यो घटनाभ्य, स्ताभ्यः प्राप्तेभ्योऽनुभवेभ्यो राष्ट्रियमहासभा-कार्यकर्तार इमं दृढीयांसं निश्चयमुपयान्ति यद् भारते ब्रिटिशशासनस्य समाप्तिः शीघ्रमेव स्यात्। दासत्वान्दुकनिबद्धं भारतं स्व-रक्षाकार्ये, मानवताविध्वंसकाजौ नैजं भाग्यचक्रमुज्जासयितु न पूर्णतापूर्वकं भागं ग्रहीतुं क्षमते। तदेवं भारतस्य सुरक्षा न केवलं भारतहितेऽपेक्ष्यतेऽपितु जगतः सुरक्षायै किञ्च एका-धिनायकतावादस्य-सामाजिकसमानाधिकारपरिपन्थिवादस्य, सैनिकवादस्य, अन्यान्यविधानां च साम्राज्यवादाना मथ च कस्यचनराष्ट्रस्य राष्ट्रान्तरे क्रियमाणस्याक्रमणस्यावसानं विधातुमपि समिते धारणेयं यत् सर्वविधानामपि मानवता-ध्वंसकतत्त्वानां प्रतिरोधः कर्त्तव्यो, यतो हि तेषा मग्रे नमन-स्यार्थोऽस्ति भारतीयानां पतनं, तेन तु तेषां पारतन्त्र्यं नैरन्तर्य लभेत। राष्ट्रियमहासभा मलाया-सिंगापुर-बर्मास्थानेषु घटितानां घटनानां भारतेऽपि घटनं नैवेच्छति सा त्विच्छति हृदयेन यत् सा जनतायाः संहतेच्छायां शक्त्याञ्च भारतमाक्रमणस्य सफलं प्रतिरोधं कर्तुं योग्यं विदधीत। भारतं ब्रिटिशसत्ता जहात्वेतं प्रस्तावं प्रस्तुतीकर्तुं राष्ट्रियमहासभाया उद्देश्यमिदं न, यदनेन ब्रिटेनस्य वा मित्रराष्ट्राणां युद्धकार्येषु बाधोत्पद्येत वानेन जापानदेशो वा धुरीसमूहस्य किमप्यन्यं राष्ट्रं भारता-क्रमणनिमित्तेन किं वा दरदे (चीने) भाराधिकवर्धापनप्रयोजनेन प्रोत्साहन मप्नुवीत; न च राष्ट्रियमहासभा मित्रराष्ट्राणां रक्षाशक्ति मपकर्तु मिच्छां स्वां परिपुष्णाति। सा, अतः, जापानिनां वान्यस्य कस्याप्याक्रमणं निरस्तुं वा तत्प्रतिरोद्धुं, चीनस्य च रक्षायै सहायतायै चाधिभास्तुं वा मित्रराष्ट्राणां सशस्त्रानीकिनीं स्थापयितुं –चेत् तानि (मित्रराष्ट्राणि) सहमतानि भवेयुः – सहमतावर्तते। भारताद् ब्रिटिशसत्ताया दूरीकरणे प्रस्तावस्योद्देश्य मिदं न वर्तते कदापि यद् भारतात् सर्वाँग्ला निश्चप्रचभावेन च ते, ये भारतं स्वगृहत्वेन मत्वा, तत्रान्यैः सह नागराः समानाधिकारा वा भूत्वा वासं कर्तुं ममिलषन्टे, प्रस्थिताः स्युः। अत एव चेदियं प्रेरणा मोधता मुपैति, तदा

राष्ट्रियमहासभा वर्तमानस्थितेः स्थायित्वं, येन परिस्थितेः शनैः शनैः मलिनीभवनं, भारतस्य चाक्रमणविरोधिन्याः शक्ते-रिच्छायाश्च दुर्वली भवनं स्वाभाविक मस्ति, अधिकशङ्कातिम-कयादृष्टया पश्यति। तस्यां स्थित्यां राष्ट्रियमहासभा, स्वां समग्राहिंसात्मिकां शक्तिं, या १९२० तमेशवीयाब्दे, यदा राजनीतिकानामधिकाराणां स्वाधीनतायाश्च परिपोषणाय अहिंसा स्वनीते रङ्गत्वेन स्वीकृताभूत् - सञ्चितीकृता च वर्तते - अनभिलाषपुरस्सर मुपभोक्तुं बाधिता भवेत्। ईदृशस्य व्यापकस्य संघर्षस्य नेतृत्व मनिवार्यत्वेन महात्मा गान्धी विधास्यति"।

वर्धाप्रस्तावस्य स्वीकृतेरनन्तरं राष्ट्रियमहासभा क्षिप्रमे-वान्दोलनं प्रारप्स्यत इत्येषा जनतायां भावनोदबुध्यत। परं तत्परकघोषणा न कृताभवत्। १।८।१९४२ तमेशवीय दिनाङ्के प्रयागे तिलकदिन मायोजितमभूत्। तदवसरे पं० जवाहरलाल नेहरू समभाषत-"वयं पावके क्रीडितु मुपक्रमामहे, द्विधारासिञ्च प्रयोक्तु मिच्छाम स्तत्प्रहारो विपर्यस्तो भूत्वास्मास्वपि निपतितु मर्हति; परं वयं किं करवाम? तस्मिन्नेव समये श्री राजेन्द्र प्रसादः स्ववक्तव्ये व्यक्तंचकार "वय मस्मिन् पदक्षेपे गोलिकाशरव्यी-भूता भवितुं शतघ्न्याश्च साम्मुख्यं कर्तुं सन्नद्धा भवामः" सर-दार पटेलश्च बम्बय्या मगादीत्—"अस्मिन्नुपक्रमणे आन्दोलनं चलेदल्पकालं परं स्यात् परमभयङ्करम्"। इत्थं राष्ट्रिय महा-सभाया उच्चनेतृभ्यो जनताभासभिममवाप्नुत यद् राष्ट्रिय महासभा भीषण मान्दोलनं चालयितुं व्यवतिष्ठते। भारत-शासन मपि न तत्प्रतिकर्तु मुदास्ते। यथानुमानं शासनं निषूद-नायान्दोलनस्य कृतसङ्कल्प मभूत्।

बम्बय्या मखिलराष्ट्रिय महासभाया राष्ट्रियसमितेरधि-वेशनं ७।८।१९४२ दिनाङ्कादारब्ध मभवत्। सागाभिन्येवाह्नि समितिः पर्याप्तविमर्शणानन्तरं 'भारतं त्यजत' इत्येतं प्रस्तावं पारितता मनैषीत्। भावीतिहासो घटनाश्चाधिवेशनमिद 'मैतिहासिकाधिवेशन' नाम्ना अप्रथयन्। सा (समितिः) अजू-घुषत्—

'राष्ट्रियमहासभाकार्यकारिण्याः समितिरियं १४।७।१९४२ दिनाङ्के जातस्य प्रस्तावस्य परिपोषण मनुमोदनञ्च विदधाति। तस्या अयञ्चापि विश्वासः—अर्वाक्तनस्यानेहसो घटनाः अपि तं प्रस्तावम्प्रति अन्यदप्यौचित्यं प्रकटीकुर्वन्ति, इदञ्च ताः स्पष्टीकुर्वन्ति यद् भारते ब्रिटिशशासनस्यावसानं किञ्च भारतस्य मित्रराष्ट्राणा मादर्शस्य च पूर्त्यर्थं मत्यन्त मपेक्षितं जात मस्ति। शासनस्यास्य स्थायित्वं भारतस्य प्रतिष्ठां क्षिणोति, तां कृशतां नयति किञ्च स्वरक्षणे विश्व-स्वतन्त्रतापरकादर्शपूर्त्याञ्च सहयोगप्रदानक्षमायां शक्त्यां क्रमिकं च कार्श्यं जनयति।......अस्मिन् देशे ब्रिटिशशासन-स्यान्ततताया अत्यन्तं तत्काल एवापेक्षा विद्यते। अत्रैव सम्परा-यस्य भाविकालः, स्वतन्त्रतायाः प्रजातन्त्रस्य च सफलता सन्तिष्टते। स्वतन्त्रं भारतं स्वकीयानि सर्वाणि विशालानि साधनानि स्वतन्त्रतापक्षे सम्प्रयुज्य सफलता मिमां सुनिश्चितां करिष्यति।......अखिलभारतीय राष्ट्रियमहा-सभायाः समितिः पूर्णनिर्बन्धपूर्वकं ब्रिटिशसत्तापसारणात्मकं मन्तव्यं पुनः आवर्तयति। भापनस्वतन्त्रताघोषणानन्तर मस्थायि शासनमुद्घोषितं स्यात्; स्वन्त्रञ्च भारतं मित्र-राष्ट्राणां मित्रं भवेत्, स्वातन्त्र्याहवस्य च सम्मिलितप्रयत्नस्य परीक्षासु दुःखे सुखे च भागं ग्रहीतुं प्रभवेत्। आधुनिकसाम्राज्य-वादस्य केन्द्रबिन्दुभूतं भारतं साम्प्रतं समस्यायाः प्रमुखो विषयः सञ्जातोऽस्ति।...आंग्लेषु गतेषु सत्सु, देशस्य प्रमुखराजनीतिज्ञ-समुदायेन वर्गैश्च स्थाय्येकं शासनं निर्मितं भवेत्, तदुद्देश्यं भवेन्मुख्यं-स्वसैनिकविषयिकायाः अहिंसात्मिकायाश्च शक्तेः प्रयोगेण वैदेशिकाक्रमणविरोधे देशस्य सुरक्षणम्। अल्पसंख्य-कानां कृते आश्वासनं सर्वथैव समितेरिष्टं, स्याच्चेदं विदितं यज्जनान्दोलनेन न राष्ट्रिय महासभा राज्याधिकार मवाप्तु कामा। राज्याधिकारः कस्मिन्नपि समये लब्धो भवेत् तदुप-योगं सर्वे देशवासिनो विधास्यन्ति।—भारतस्य स्वतन्त्रता एशियायाः सर्वेषामपिशोभितानां देशानां स्वतन्त्रतायाः प्रतीक-त्वाय कल्पेत; भूमिकात्वेन च विनिधार्येत। वस्तुतो वर्मा,

इण्डोनेशिया, मलाया, इण्डोचायना, ईरानः, ईराकोऽन्ये च सर्वे देशाः स्वतन्त्राः स्युः। इदञ्चेदानी मेव स्पष्टतांगच्छेद् यद् ये देशा अद्य जापानस्याधिकारे सन्ति, ते भाविनि काले कस्यैचनोपेनिवेकिशक्त्यै न दत्ता भवेयुः।"

प्रस्तावेऽस्मिन् सत्यपि पारिते, नांग्ला देशं भारतं हातु मुद्यताः स्यु रित्येतच्चविचिन्त्य समिति र्जनान्दोलनचालनायापि निश्चिकाय; न तस्य तिथिघोषणा तदाक्रियत। यतो हि महात्मनो गान्धिनो विचारोऽय मभूद् यज्जनान्दोलनारम्भात् प्राक् स एकदा पुनः शासनस्य पुरः सन्धानात्मिकां वार्तामुपस्थापयेत्। समिति र्महात्मनो गान्धिनो नेतृत्वे आन्दोलनं चालयितु मजूघुषत्।

८।८। दिनाङ्के, प्रस्तावे सति पारिते, म० गान्धी समितेः पुरः स्वविचार मवतारयामास। सः ७० मिनट व्यापिनं समय मभाषत। स्वभाषणेन स तं प्रस्तावं स्वविचारांश्च कृत्स्नतया-व्याचख्यौ। इह श्रीपट्टाभिस्तीतारमैया ब्रवीति "वस्तुतस्तस्मिन्नहनि म० गान्धी भगवद्विभूतेः शक्त्या प्रेरितो भूत्वाऽऽमनत्। तदभ्यन्तरेऽनलः प्रज्वलन् दिदोपे। तदा स राजनीते रवरधरातलादुत्थितो भूत्वोच्चतरधरासीनः सन् उत्कृष्टतरं मानवत्वं विश्व व्यापि भ्रातृत्वं, शान्ति, मानवमात्रं च प्रति सद्भावविभावितो भूत्वा दिव्यस्य लोकस्य चर्चां कुर्वाणोऽवालोक्यत"। ध्रुवं स अब्राहमलिङ्कनस्य सुविदितेषु शाश्वतममत्वमयेषु शब्देषु स्वभाषणं चकार। स जनता मनुसन्धान आचचक्षे "भवन्तः कस्मिन्नपि न द्विषन्तु, न च कस्मिन्नपि भेदभावं बिभ्रतु। सर्वेष्वपि दयालुतापूर्णं व्यवहारं कुर्वन्तोऽनिशमीश्वरप्रदर्शितसत्याध्वनि दृढीयांसो भवन्तु। अस्माभि र्यस्यकस्यानुष्ठानाय व्रतं गृहीत मस्ति तत्पूरणाय सम्पूर्णलग्नतया भवन्तः प्रयतन्ताम्; येन न केवल मेतस्मिन् देशेऽपितु समग्रेऽपि संसारे शाश्वतशान्तेर्न्यायस्य च स्थापना भवितु मर्हेत्"।

भारतस्य स्वतन्त्रतान्दोलने 'भारतं त्यजत' प्रस्तावो नैर्जप्रभूततरं महत्त्वंनिधत्ते स्म।

आंग्लशासनं निर्दिष्टे प्रस्तावे प्रागेवाभिज्ञात मासीत्; तस्माद् धेतोस्तत् ९।८।१९४२ तमेशवीयाब्ददिनाङ्के भानूदयात् प्रागेव कार्यकारिण्याः सर्वानपि सदस्यान् महात्मानं गान्धिनञ्च वन्दीचकार म० गान्धिनं श्रीमतीं सरोजनी नायडू च पूनास्थे 'आगांखाँ प्रासादे, किञ्च कार्यकारिण्याः सदस्यान् अहमदनगर-दुर्गे वन्दित्वेनावासयत्। ततश्च प्रदेशीयान् नेतृनापि तद् झटित्येकद्विदिवसानन्तरमेव कारागारस्थान् विदधौ। शासनं विज्ञप्तिं प्रकाश्य राष्ट्रियमहासभा रेलपथोच्छेदनदूरभाषतारा-दिसमुत्सादने व्यापृता भवितु मिच्छति; तदीयोऽयं कार्यक्रमो विदिततां गतोऽस्त्यतः शासनं लोकहितेच्छयैतत् सर्वं कार्यं कर्तुं प्रावर्तयदात्मानमित्येतद् ज्ञात्वा जनता निस्तब्धाभवत्। किं तया कर्तव्यमिति न सा निश्चेतुं शशाक। जनतायां तदा शासनमुद्वेग मवश्य मजनयत् परं न तस्यां विश्वासं जनयितुं प्रबभूव। सा शासननीतिं विरोद्धुं प्रदर्शनञ्चकार; सभाः, कृत्वा, दैनिकानि च कार्याणि हित्वा संरम्भं प्रकटीचकार। जनताया कार्याणीमानि शासने रोष मुत्पादयामासु; तत् क्रूरं भवत् कठोरं व्यवाहरत्। लगुडप्रहारः, गोलिकाचालनं, वेत्रप्रताडनम् इत्यादिनिर्दयकार्यैं भृशं जनता मतौत्सीत्। शासनस्य नृशंसं दमनचक्रं जनसामान्यस्य दुर्बलं हृदयं हिंसात्मकानि कार्याणि कर्तुं मुपससार। सा रेलपथानुत्पाटयामास, तारस्तम्भान् उत्सादयामास, पत्रालयान्, रेलस्टेशनानि, पुलिसस्टेशनानि च ददाह। इदं सर्वमपि विधाय युवानः शासनव्यवस्थांश्लथयितुं युद्धकार्ये बाधांचोत्पादयितु मीहीञ्चक्रिरे। शासनसत्ता क्लान्ता-श्रान्तोद्विग्ना च भूत्वा भारतं त्यजेदिति यूना माकाङ्क्षा-भवत्। अयं सः समय आसीद् यदा सुभाषचन्द्र वसो र्नेतृत्वे स्वतन्त्रभारतसेना—आजादहिन्दसेनायाः—निर्माणं जात-मासीत्। सा ब्रह्मामार्गेण भारतसीमायां प्रवेशं विधातु मकथ-नीयप्रयासाचरणे संलग्नासीत्। वर्षर्तोः समाप्तौ सा कामरूपान्-आसामप्रदेशम्-आक्रान्तान् करिष्यतीत्येषाशा तदोदपद्यत। साजस्रमाकाशवाण्या भारतीयेषु सिताङ्गविरोधाय विद्रोहात्मि-काया भावनायाः समुत्पादने तस्याश्च प्रबलीकरणे प्रययास।

एतानि नाशनच्छेदनादिकार्याणि देशस्य बहुषु भागेषु रेलानां यातायातं प्रतिहत मकार्षुः। तेषा भागानां सम्बन्धः शेषभारताच्छिन्नः समजायता जमशेदपुर-बम्बई-अहमदाबादस्थ श्रमिकाः संवृतस्वस्वव्यापारा अवातिष्ठन्त। कतिपयेषु तु खण्डेषु शासनस्य समाप्ति रिवाजायत। तत्र च समानान्तर-शासनस्थापनाक्रियत। संयुक्तप्रान्ते बलिया–बस्तीमण्डलयोः, बम्बय्यां हि सतारायां, वङ्गेषु मिदनापुरमण्डले, विहारप्रदेशे च कस्मिंश्चिद् भागे इदमेव सर्वं घटित मभवत्। तदानीं परिस्थितिं वीक्ष्यांग्लशासनस्य प्रत्यासन्न एव कालेऽन्तः स्यादित्यनुमीयते स्म।

यद्यपि सम्पराये आंग्लाः पराजयोन्मुखा अदृश्यन्त, तथापि त आन्दोलनं कठोरतया पेष्टुं निरचैषुः। प्रारम्भे आरक्षिणां सहायतया ततश्च सैन्यस्य सहायतया ते (आंग्लाः) आन्दोलनकारिण्यां जनताया ममानुषिकं व्यवहारं चक्रुः। बलियामण्डले आंग्लसत्तायाः पुनः स्थापनायै बलूचीसेना प्राहीयत। सा स्त्री-पुरुषेषु घोर निर्दयात्याचारं विदधौ। वरुथिनी निःशस्त्रायां जनतायां गोलिकाः ववर्ष। सा लुलुण्ठ, व्यापादयामास, पीडयाञ्चकार च भृशं जनान्। स्त्रियोऽपमानिता अक्रियन्त, निर्धनेषु कर्षकेषु सामूहिकोऽर्थदण्डः कृतः। केषुचन स्थानेषु वायुयानेभ्यश्च गोलिकानां वृष्टि विहिता। आन्दोलनं नृशंसतया निषूदित मभूत् परं जनतापि ब्रिटिशशासनविरोधं सूचयन्ती न सा अतः परस्तात् आंग्लानां स्थितिं भारते दिदृक्षतीति च स्पष्टतया ज्ञापितवती। समाजवादिनो नेतारः प्रच्छन्नतयान्दोलनं चालयाञ्चक्रुः। सञ्चालकेषु श्रीजयप्रकाशनारायणः श्रीमती अरुणा आसफअली च प्रमुखतां भेजतुः। परं न समाजवादिनश्चिरं प्रच्छन्ना अपि भवन्तः कार्यं कर्तुं प्रबभूवुः। १९४२ तमाब्दस्य 'भारतं त्यजत' आन्दोलनं कियदधिकं तदोग्रतरं रूपं बिभर्ति स्म इत्येतस्यानुमानं स्वल्पैरङ्कैः कर्तुं शक्यं, यान् फेब्रवर्यां, १९४३ तमसम्वत्सरे भारत-शासनस्य संग्रामसदस्यः सर रेजिनाल्ड मैक्सवेलः केन्द्रीय-विधानसभायां प्रस्तुतीचकार। तेऽङ्का ज्ञापयन्ति यत् १९४२

तमाब्दीयान्दोलने पुलिससेना ५३८ कृत्वो गोलिकाः प्रायुङ्क्त। तेन ९५० जना आहन्यन्त; १३६० जना आहता अक्रियन्त; ६०२२९ जनाः वन्दिनः कृताः; प्रायेण २०० रेलवेस्टेशनानि नाशितानि; ५५० पत्रालया आक्रान्ताः; तेषु ५० पूर्णतया दग्धाः। २०० परमहानिं गमिताः। ३५०० स्थानेषु तार-दूरभाषादिका उच्छिन्नतां नीताः। ७० पुलिसस्थानानि (गुल्माः) अन्यानि च कतिपयानि राजकीयभवनानि दग्ध्वा धराशायीनि कृतानि।

८।८।'४२ दिनाङ्के, निशि शासनेन या विज्ञप्तिः प्रकाशिता; तत्र पत्रेषु च यो राष्ट्रियमहासभायाः कार्यक्रमः प्रकाशितोऽभूत् तस्मिन् विध्वंसनपरकं कार्यमप्यन्यतममवर्तत; परं वस्तुतो राष्ट्रिय महासभाया न तादृक् विध्वंसननिष्ठः कार्यक्रम आसीत्। तत्कार्यक्रमस्त्वासीत् सविनयावज्ञान्दोलनपरकः। महात्मा गान्धी तं कार्यक्रमं निर्धारयाम्बभूव। तत्रादौ चतुर्विंसतिहोराव्यापि स्वकार्यस्थगनं निर्दिष्ट मासीत्। म० गान्धी अहिंसात्मकान्दोलनचालने धृतव्रत आसीत्। स न तद्विधं किमपि कार्यमैच्छद् यत्र हिंसा-विध्वंसनविघटनादिकार्याणि संवर्तन्ते। स जौपान-समाजवादपरिपन्थ्यादिकाक्रमणं विरोद्धु मियेष। शासनेन राष्ट्रियकार्यकर्तारो वन्दितां प्रापिता स्तस्मात् कारणाज्जनता स्वेच्छयान्दोलन मचालयत्। शासनदमनचक्रेण सा किंकर्तव्य विमूढा कृता। अतोऽहिंसापथात् सा अभ्रंशत। स्थानीय-माण्डलिक-प्रादेशिकराष्ट्रियमहासभासमिति जनताम्प्रति य सन्देशं प्रासीसरत् तत्राहिंसार्थमेव बलं दत्त मासीत्। स्वातन्त्र्याय युध्यमानां जनतां वीक्ष्य तस्यां क्रियमाणानि प्रपीडनानि च सम्प्रेक्ष्य सेनायां विद्रोहभावनोदतिष्ठत् 'सेतुभेदन-रेलपथोत्पाटनादिकार्याणि यानि विनायोजना मघटन्त तेषां मूले देशप्रगाढप्रेमावेग उद्दाम एव वस्तुतः प्रावर्तत। तदुद्भेदो नासीदस्वाभाविकः। यत्र तत्र यत् हिंसात्मकं कार्यं दृष्ट मभूत् तच्छासनस्य राक्षसीयं दमनमेव तत्र कारणं बभूव[1]। राष्ट्रियमहासभा तु मनस्यपि हिंसा न विचारयामास। सा दृढतया

१. उ० प्र० स्वाधीनता संग्राम एक झाँकी, पृ० १०७-११७।

अहिंसारूढासीत् । न जनतां सा हिंसायां मनागपि रुचिं निधातु मनूनुदत् न चाचकथत् न प्रोत्साहयाञ्चकार । राष्ट्रियमहासभा जनतां हिंसार्थं नुनोद'—इत्येषः शासनस्यानृतदोषारोप-आसीत् । यदा म० गान्धी तत्सर्वमजानात् स तस्मिन् विषये राष्ट्रियमहासभाया नीतिं स्पष्टीकर्तुं समयमपेक्षाञ्चक्रे; तादृश मानुकूल्यं च सोऽपैक्षिष्ट येन राष्ट्रियमहासभायाः कार्यकारिण्यां विचार-विनिमयो भवितुमर्हेत्; परं महाराज्यपालो म० गान्धिनस्तत्कथनम्प्रति मनागपि न स्वमन आचकर्ष । महात्मनो गान्धिनः कृते समये प्रदत्ते सति, जगद् ज्ञास्यति यद्राष्ट्रिय-महासभा हिंसात्मक मान्दोलनं न संश्रयतीति विचार्य; किञ्च जगद्दृष्ट्या तत्प्रतिष्टा वर्धिष्यते; तद् (जगत्) अवगमिष्यति यच्छासनेन राष्ट्रियमहासभायां मिथ्यादोषारोपणं कृतं, किञ्च राष्ट्रियमहासभा जापानिषु नाजिषु फासिष्टेषु चाल्पिष्टामपि सहानुभूतिं न निदधातीत्येतच तद् (जगद्) ज्ञास्यतीत्येतत् सर्वं कृत्स्नतया विचिन्त्य स (महाराज्यपालः) महात्मनि गान्धिनि न मिमेल। ततो वाधितो भूत्वा म० गान्धी एकविंशति दिनभोग्य-मनशनं कृतवान् । अनशनात् त्रिचतुर्दिनानन्तरं म० गान्धिनो-ऽवस्था चिन्तास्पद मभवत् । समग्रोऽपि देशो महाराज्यपाल-सेवायां तारं प्राहिणोत् । तत्र प्रार्थयद् गान्ध्यभीप्सित सः (महाराज्यपालः) पिपर्तु वा स्वीकरोतु । परं लार्ड लिनलिथगो स्पष्ठ मवादीद् यन् म० गान्धो तं समयं यावन्न मुच्येत यावदसौ स्वप्रमादं नाङ्गीकरिष्यति । म० गान्धी ताः सङ्कटमयीः परि-स्थितीस्तरीतुं जेतुं च प्रबभूव । तस्य तदनशनं सफलतया पूर्ति मगात् शासनस्यानया नीत्या क्षुब्धा भूत्वा महाराज्यपालस्य कार्यकारिण्या दूरीभवितुं त्रयोभारतीयसदस्यास्त्यागपत्रं ददुः । तेषां नामानीमानि—श्री एच० पी० मोदी, श्रीनलिनीरञ्जन सरकारः, श्री एम० एस० अणे च । अस्मिन्नेव काले श्री एमरी भारत-मन्त्री 'यदि राष्ट्रिय महासभा 'भारतं त्यजत' इत्येतदा-न्दोलनं त्यजेत् तदा क्रिप्स योजना सम्प्रति कार्यान्विता भवितुं शक्यास्ति' इत्येतदवोचत् । एतेन राष्ट्रियमहासभा हिंसात्मक-कार्यार्थं कदापि जनतां न प्रेरयामास; तदर्थन्तु शासनमेव वर्तते

उत्तरदायि । सर्वथैव तज् जनताममानुषिकै रत्याचारै र्निप-डियामासेति स्पष्टीभवति[1] ।

एतस्मिन् आन्दोलने साम्यवाद्यनुसृता नीति र्देश मप चकार । भारतीया राष्ट्रानुरागपरा यदा स्वतन्त्रतायाः प्राप्त्यै प्राणानपि होतुं संलग्ना आसंस्तदा ते साम्यवादिनः शासन-साहाय्यप्रदा अजायन्त । मित्रराष्ट्रेषु [illegible]न्वितत्वात् ते युद्धं 'जनयुद्धम्' इत्येतेन नाम्ना प्रथयाम्बभूवुः । प्रायतिषत च युद्धकार्ये शासनमुपकर्तुम् । ते मुस्लिम लीक् संस्थया च सह सन्धातुं प्रायतन्त । पाकिस्तानापेक्षणे ते मुस्लिमलीगं परिपो-षयामासुः । आदौ ते राष्ट्रियमहासभायाः पक्षे आसन् परं गच्छता समयेन, तामत्यजन्; अकुर्वंश्च स्वसम्बन्धं शासनेन मुस्लिमलीगा च सार्धम् । 'भारतं त्यजत' इत्येतस्मिन् राष्ट्रिय-महासभाया आन्दोलने ते व्यरज्यन् । श्रमजीविनश्च ते उद्वे-जयन्ति स्म; राष्ट्रियमहासभातो भवेयुस्ते (श्रमिकाः) दूरे इत्ये-तदर्थञ्च चेष्टाञ्चक्रिरे ।

मुस्लिमलीक्संस्थाया अपि 'भारतं त्यजत' इत्येतदधि-कृत्य व्यवहारः साम्यवादिनां व्यवहार इवासीत् । सा संस्थापि यथाशक्यं शासनम्प्रति साहाय्यकारिण्यदृश्यत । तद् 'भारतं त्यजत' आन्दोलनं न मुस्लिमहितानुकूल मिति सा मुस्लिम् लीक् । संस्था मेने । एतावदेव न सा राष्ट्रिय महासभाविरो-धितत्वसहायतया केन्द्रेऽस्थायिशासनं स्थापयितुं निष्फलं प्रयास मपि चकार । पाकिस्तानाधारे सा सन्धातु मुद्यतास्तीत्येतदा-शयकं पत्रं म० गान्धिनश्च सकाशे प्राहिणोत् । अत्र म० गान्ध्यपि पत्रं प्रेषयायामास परं मच्छासनं मध्य एवाधरत् । मुहम्मद अली जिन्ना राष्ट्रियमहासभा हिन्दूसभातो न भिन्नेति-निजगाद । आलोचयामास च सः कटुतया राष्ट्रिय महासभाम् । वस्तुतः साम्यवादिनी मुस्लिमलीक् च संस्था द्वेऽपि देशद्रोहि-कार्यमेव चक्रतुः ।

'भारतं त्यजत' आन्दोलने जनता ससाहसं सोत्साहञ्च कार्य-मकरोत् । परं नेतृणां वन्दित्वात् सा नान्दोलने सफलता मवाप ।

१. उ० प्र० स्वाधीनता संग्राम की एक झाँकी, पृ० १३५-१३८

अक्टूबर मासे १९४३ तमेशवीयाब्दे लॉर्ड वेवेल (*Wawell*) महाराज्यपालो बभूव। सः शासनव्यवस्था मुत्थापयितुं वङ्गेषु दुर्भिक्ष जनितां दुःस्थितिञ्च दूरीकर्तुं प्रायतत। तदानीं म० गान्धी रुग्णत्वाद् वन्दिगृहादमुच्यत। अस्मिन् विषये श्री सुभाषचन्द्र वसो र्नेतृत्वे स्वतन्त्रभारतसेना भारतमागन्तु मुपचक्रमे; अतः भीषण परिस्थितिवशाद् विचलितं भूत्वांग्लशासनं तं मुमोच इत्येतत् केषाञ्चन कथन मस्ति। अस्तु।

स्वस्थतां प्राप्य म० गान्धी राजनीतिकगतिरोधान्तप्रयोजनेन प्रयत्न मारभत। तदांग्लदृष्ट्या युद्धं गम्भीरतरायां स्थित्यां स्थित मासीत्। श्री सुभाष चन्द्रस्यापि निर्दिष्टा सेना निरन्तरं भारतस्योत्तर-पूर्वसीमा माक्रमणेन वेपयितुं स्वपदमुपसारयन्त्यदृश्यत। सा 'कोहिमां' स्वाधिकारनिघ्ना मकार्षीत्। म० गान्धी तेष्वेवाहःसु लार्ड वेवेलस्या भ्यर्णे पत्रं प्राहिणोत्। तत्रेद मभिहितम्—

(१) सः (म० गान्धी) राष्ट्रियमहासभायाः कार्यसमितेः परामर्श मन्तरेण किमपि न कर्तुं शक्नुते।

(२) महाराज्यपाल मासाद्य स तं कथयेत् यत् सम्मेलनस्योद्देश्यं मित्रराष्ट्रणां युद्धप्रयत्ने बाधाया उत्पादनं न भूत्वा साहाय्यप्रदान मेव स्यात्। स न देशं १९४२ तमाब्दवर्तिन्यां स्थित्यां निधातु मर्हति।

(३) गतयो र्द्वयो र्वर्षयोः संसार उपस्टतः; अतः परिस्थितयः पुनः प्रेक्षणीयाः।

(४) चेद् राष्ट्रियशासनं स्थापितं स्यात् तदा सः (म० गान्धी) राष्ट्रियमहासभां भागं तत्र ग्रहीतुं नुदेत्।

(५) असैनिकशासननियन्त्रणकारि शासनं तं तोषयितु मर्हेत्।

(६) स्वाधीनतायां प्राप्तायां सत्यां स राष्ट्रियमहासभाम्प्रति नैजसम्मतिप्रदानाद् विरमेत्।

पत्रस्योत्तरे महाराज्यपालः स्पष्टतया लिलेख—चेद् राष्ट्रिय महासभा शासनेन सह सन्धातु कामा, तदा सा 'भारत

त्यजत' 'आन्दोलनं निवर्तयेत्, आन्दोलननीतिञ्च त्यजेत् ।

शासनस्योत्तरेण तदा कीदृशमपि सन्धानं सम्भवं नासीदित्यतत् स्पष्टं जायते । राष्ट्रियमहासभायाः कार्यसमितेः सदस्यानां परामर्शं विना 'भारतं त्यजत' आन्दोलनस्य परावर्तनमसम्भव मासीत् । न शासनं म० गान्धिनः कृते प्रददौ तदानुकूल्यं येन सः कार्यकारिण्याः सम्मतिं ग्रहीतु मर्हेत् । एतस्मात् कारणाद् गतिरोधो न भवितु मशक्नत् ।

**अत्रेदं स्मरणीयम्**—

आंग्लशासनं स्वकीयया पूर्णया शक्त्यावश्यमान्दोलनं नाशयितु मचेष्टत । वङ्गप्रदेशस्य तत्कालवर्ती मुख्य मन्त्री श्री श्यामा प्रसाद मुकर्जी तु आंग्लशासनकृतानत्याचारान् विरुन्धानः स्वपद ममुञ्चत् । स त्यागपत्रं स्वं निदधौ स्वत्यागपत्रविषये सः ६।११।'४२ तमदिनाङ्के वङ्ग—राज्यपालपत्रं, यल्लितस्यायं सारः—

"मिदिनापुरे यादृशानि कठोराणि दमनानि क्रियन्ते तानि जर्मनकृताधिकारप्रदेशेषु विहितानि दमनानीव सन्ति । पुलिसेन सैनिकैश्च शतशो गेहा दग्धाः । नारीषु जाता अत्याचारा अपि श्रवणगोचरं गताः सन्ति । हिन्दु गृहलुण्ठनाय मुसलमानाः प्रोत्साहिताः अक्रियन्त । विधि-व्यवस्थारक्षकाः स्वयमेवेदृशानि निन्दनीयानि दुष्कृत्यान्यकार्षुः" ।

बङ्गे ष्विव युक्त प्रान्ते चामानुषिका अत्याचाराः अक्रियन्त । तत्र क्रान्ति मुन्मूलयितु भारतस्यांग्लशासनेन स्मिथ–नेदरसोलयो र्नेतृत्वे सेना प्राहीयत । सा सेना प्रथमन्तु आन्दोलनकारिणः प्रजग्राह । कृतवती च तत्रत्यायां जनतायां यानत्याचारान् तेऽत्याचारा राक्षसीयान् पाशवांश्चात्याचारान् ह्लेपयन्ति स्म । जना वृक्षशाखास्वालम्ब्य मारिताः । वहवः कशाभि स्तथा प्रताडिता यथा न ते जीवनं वोढुं शक्नुयुः । बहवो गोलिकाभि र्व्यापादिताः । स्त्रीणाञ्च भूषणान्यपहृतानि । श्रीमता तारिणी सरकारेण *'India in revolt'* नामकग्रन्थे हताहतानां पञ्च विंशति सहस्रमितसंख्या लिखि-

तास्ति ।

तद् द्विचत्वारिंशधिकैकोन विंशतिशततमेशवीयाब्दे समुत्थित मान्दोलनं सकलदेशव्यापि भूत्वा ब्रिटिशशासन मधूनयत् । तस्मिन्नेवाब्दे आंग्लाः क्रुद्धा भूत्वा, स्वकीयां स्थितिं भारतेऽसम्भवां वीक्ष्य नितान्त भयङ्कर राक्षसा इव भूत्वा वङ्गेषु तां दुःस्थिति मुत्पाद यामासु या निर्दया दुःस्थितिरन्नस्याप्राप्ति प्रकटीकृत्य लक्षशो जनान् व्यापादयामास । जना क्षुधिताः सन्तो हा हन्त प्राणानजुहवुः । चेत् तत्काल वर्ति शासनं नाभ्यलर्षिस्यत तदा न सा भयावहा स्थिति रवतरितु मशक्ष्यत् । आंग्लशासन तथाविधं प्रमादं तादृशी ञ्चोपेक्षां चकार यथाविधात् प्रमादाद् यादृश्याचोपेक्षाया समुत्पादिताया मापदि निपत्य न जनाः मृत्युमुखात् स्वान् रक्षितु मशकन् । अन्नाभावाज्जनाः क्षीणकलेवराः समजायन्त; अतो बहवो ज्वर-विशूचिकादिरुग्भि व्यापादिताः । रोगनिपीडितत्वादुपरताना मपि संख्या विशालासीत् । अध्यक्षेण '*Beng al Chember of Commerce*' स्य श्री जे० के० मित्रेण स्ववक्तव्येकथित मासीत् "......... जनाः अतिनिर्धनत्वात् स्वकीयानां प्रियात्मीयजनानां दाहक्रियाया मप्यसमर्थाः सन्ति । ते मृतान् स्वजनान् नदीषु नदेषु कुल्यासु च क्षिपन्ति । वङ्गप्रदेशस्य बहवः सुन्दरा जलाशयाः शवै रापूर्यन्त । ताञ्छवान् वायसाः गृद्ध्राश्च अदन्ति । बहूनि च क्षेत्राणि छिन्नभिन्नदुर्गन्धयुक्तशवानां रुण्डमुण्डैः परिपूर्णानि भूत्वा चतुर्दिग्भ्यो गृद्धानाह्वयन्ति । मानवताया इतिहासे ईदृशानि करुणापूर्णानि हृदयच्छेनभेदनकारीणि दृश्याणि क्वचिदेव कदाचिद्देव वीक्ष्येरन् !

तस्यां विनाशकारिण्या मापदि मातरो हा, स्वोत्सङ्गस्थप्रियमाणवकानपि व्यक्रीणन् । '*United Press*'. तो ज्ञायते यदनेकाबोधाः शतशो बालिकाः (त्रिवर्षदेशीयबालिकातस्त्रयोदशवर्षदेशीया बालिकाः यावत् । वेश्याः क्रीणन्ति स्म । एकद्विरुप्यकद्वारेणैव तास्ताः अक्रीणन् । क्वचित्तु तादृश्यपि शोच्या स्थितिः प्रेक्षिताभवत्—केवल सकृद्भोजनावाप्तिनि-

मित्तेन हा, नारी स्वसतीत्वविलोपनेऽबाध्यत !
श्री मती 'रेड' लिखति—

"पूर्वीयवङ्गप्रदेशस्य एान्दपुरादि स्थानेषु क्षुधाव्याधिम्रियमाणास्त्रियः स्वकियशिशूनत्यल्पपणप्राप्त्यर्थ मेव विक्रीणान्त्यो व्यालोक्यन्त । एतादृश्यः शतशो नार्यस्तदा मया स्वकीयाभ्यां लोचनाभ्यां विलोकिताः । भावोऽय मांग्ला यां विपदं 'दुर्भिक्ष' नाम्ना व्यवाहार्षुः सा विपत् परमदारुणासीत् । तत्तुलना संसारस्य कठोरकठोरयापि कयापि जातया विपदा सह न कर्तुं शक्यास्ति ।

तस्या विपदः कारणानि बभूवु रिमानि :—

ब्रिटिश राज्यस्योच्चोच्चतराधिकारिणां स्वार्थान्धता, अव्यवस्था किञ्च धनपतीनां स्वार्थदिग्धलोभवृत्तिः । एतद्धेतोः प्रमुखात् हा सहस्रशो लक्षशश्च जना अन्नाभावादम्रियन्त ।

सा विपन्मनुष्यजनितासीन्न च दैवावतारिता । तस्याः उत्तरदायित्वं वस्तुतः समतिष्ठत वङ्गशासने स्वार्थान्धधनपतिषु च । वङ्गशासनं तदा नितरां तत्रोपेक्षाञ्चक्रे ।

२५।१।१९४२ दिनाङ्कीय 'हरिजन' पत्रे महात्मा गान्धी शासनञ्चेतयन्नलिखत्—

"वर्तमानसमयस्य गुरुतमतात्कालिकावश्यकतास्ति—क्षुधितानां कृतेऽन्नदानं, नग्नाञ्चकृते वसनसहायता । देश स्तयोर्द्वयोरपेक्षावान् वर्तते ।

वस्तुतः सा महाविपद् ब्रिटिशशासनस्याभवद् भालकलङ्कोऽसौ यो न कदापि मार्ष्टो भवितु मर्हत् ।

'भारतं त्यजत' इत्येतस्मिन्नान्दोलने प्रवृत्ते सति आंग्लशासनं या दण्डरूपविपदो भारतीयजनताया मपातयत् तास्वन्यतमा विपद मिमामपि तदपीपतद् यद्धेतो र्लक्षशो जनाः क्षुधोपरेमिरे ।

**हा हन्त गौरवपुषां भरतस्य भूम्यां**
**न न्यायपूर्वक मियेष हि शासनं स्वं**

**कर्तुं न चेच्छदनयस्थितनिन्द्यकृत्यं**
**स्वाधीनतासुखगता मतिलोलुपं ताम् ॥**

न केवलं तदा तद्विध मान्दोलनं प्रवृत्त मासीद् । देशः स्वतन्त्रताहेतो महात्मनो गान्धिनो नेतृत्वे पावनेऽस्पृश्यतां निवारयितु मपि संलग्नो भवन् स्वदेशीयवस्तुव्यवहरणे च हृदा रतः पर्यवालोक्यत ।

तेष्वेवाहःसु श्रीराजगोपालचार्यः स्वमत्या स्वदृष्टया च साम्प्रदायिकीं समस्यां निवारयितुं प्रययास । तत्प्रस्तुतीकृतां योजनां म० गान्धी अपि स्वीचक्रे । अनयायोजनया मुस्लिमलीगभिमतः पाकिस्तानस्य सद्भावोऽभ्युपागम्यत । एतस्या नवीनाया योजनायाः मुख्या वार्ता इमा आसन् :—

(१) भारतं भवेत् स्वाधीनमित्येतदुद्दिश्य नवस्य विधानस्याधोलिखितान् समयान् पूरयितुं समयानां पूर्तौ सत्याम्) मुस्लिमलीक् स्वाधीनताया निमित्तेन भारतस्याभिमतं पोषयिष्यति । तत्कार्यप्रयोजनेन च अस्थायिनोऽन्तरा कालवर्तिशासनस्य स्थापनायां राष्ट्रियमहासभया सह सहयोगं करिष्यति ।

(२) युद्धे सति समाप्ते, भारतस्योत्तरपश्चिमभागे च मुस्लिम स्पष्टबहुमतमण्डलेषु आयोग एको नियुक्तीकृतः स्यात् । तदेवं निर्दिष्टेषु क्षेत्रेषु तत्रत्यानां सर्वेषां निवासिनां वयस्कस्य मताधिकारस्य, वान्यव्यावहारिक मताधिकारस्याधारे मतसंग्रहः स्यात् । एवमेव भारतस्य तेषां क्षेत्राणां पृथक्तायाश्च निर्णयोऽपेक्ष्येत; चेद् बहुसंख्यका जनता भारतात् पृथक् सत्तासम्पन्नस्यैकस्य राज्यस्य स्थापनाया निर्णयं कुर्वीत तदा स निर्णयः कार्यान्वितो भवेत् । परं सीमाया मण्डलानि कस्मिन्नापि राज्ये आत्मान मन्तर्भावयितुं स्वतन्त्रतां निदधीरन् ।

(३) मतसंग्रहात् प्राक् प्रतिपक्षः स्वमतप्रचाराय पूर्णांस्वतन्त्रतामाप्नुयात् ।

(४) पृथक्करणं यदा सम्पन्नतां गच्छेत्, तदा रक्षाया, व्यापारस्य, यातायात-साधनाना-मन्येषाञ्च विषयाणां रक्षार्थं

सन्धान मेव भवेत् ।

(५) जनसंख्याया आदानं प्रदानं च जनताया स्वेच्छया स्यात् ।

(६) एते समयास्तस्या मेव दशायां कार्यान्विता: स्यु र्यदा ब्रिटेनदेशो भारतशासनोत्तरदायित्वं त्यक्तुं कामयेत ।

एतेन भारते स्वतन्त्रे सत्येव, पाकिस्तानस्थापनाया: पक्षे म० गान्ध्यासीदिति सिद्धध्यति । मुस्लिममत बहुलक्षेत्राणाञ्च जनसंख्या पाकिस्तान स्थापनाया: पक्षे भवेदित्येतदपि तदभिमतं बभूव । योजना मेता मादाय म० गान्धी जिन्नानेतरि मिमेल, परं जिन्ना न तां योजनां स्वीचकार । स: पाकिस्ताने उत्तरपश्चिमीयसीमाप्रान्तस्य, सिन्धो:, बिलोचिस्तानस्य, पञ्जाबस्य, बंगालस्य, आसामस्य च समस्तस्य समावेश मैच्छत् । परं न म० गान्धी तस्यैदतभिमतं स्वीकर्तु मुद्यतो जात: । अत: साम्प्रदायिकी समस्या न समाहिता भवितु मशकत् । म० गान्धी तु तत्समाधान मभिलषते स्म -

वेवेल योजना अधोलिखितयो र्द्वयो: कारणयो: प्रस्ताविताभूत्—

(१) मई मासे, १९४५ तमेशवीयाब्दे यूरोपस्य महायुद्धं समाप्त मभूत् । परं दक्षिण पूर्वदिशायां युद्धं चलित मासीत्, अत: ब्रिटिशशासनं तस्मिन् मृधे भारतीय साहाय्यस्य प्राप्तव्यत्व मन्वभवत् ।

(२) इंगलेण्डे नवनिर्वाचनस्य प्रत्यासन्नत्वात् श्रमिकाश्चर्दिलशासनस्य भारतसम्बन्धिनीं नीति मालोचयन्त: प्राप्यन्त ।

चर्चिल स्तदनुयायिनश्च श्रमिकवर्गस्य विजय मनुमाय श्रमिक वर्गो ऽवश्यं भारतं स्वतन्त्रं विधास्यतीत्याशङ्कमाना भारतीय राजनीतिगतिरोधं संवरीतु प्रयतमाना अजायन्त ।

प्रधानमन्त्री चर्चिलो भारतीयस्थिते: पूर्णमभिज्ञतां प्राप्तुं लॉर्ड वेवेलं लन्दन मागन्तु मामन्त्रयाञ्चकार । ब्रिटिशमन्त्रिमण्डलस्य सदस्यै: सार्धं परामर्शं विधाय लॉर्ड वेवेलो भारत माजगाम । ततश्चाकाशवाण्या तद्भाषणं प्रसारित मभूत् ।

तस्मिन्नेवावसरे भारतमन्त्री एमरी लोकसभाया मभाषत । बेवेलय'जनाया मुख्या वार्ता आसन् इमाः—

(१) भारतशासनस्य राजनीतिकगतिरोधं दूरीकृत्य भारतं स्वशासनस्य लक्ष्यभूत दिशाया मग्रेसरं कर्तु म् (आंग्लाः) आकाङ्क्षावन्तः सन्ति ।

(२) महाराज्यपालस्य कार्यकारिण्यां परिषदि(कौंसिले) सम्मिलितीभवितुं राजनीतिक दलानां नेतारो निमन्त्र्यन्ते । महाराज्यपालं, सेनापतिं (कमाण्डर इन चीफं) चव्यतिरिच्य एतस्याः परिषदः (कौंसिलस्य) अन्यसमस्तसदस्या भारतीय राजनीतिकदलानां नेतार एव भवेयुः ।

(३) भारतशासनस्य वैदेशिकविभागोऽपि (सीमान्त-गान्धार (काबुल) विषयान् व्यतिरिच्य) भारतीय सदस्या-धीना एव स्युः ।

(४) कार्यकारिण्यां परिषद (कौंसिले) सवर्णानां मुस-लमानानां च संख्या सभा एव भवेत् ।

(५) कार्यकारिण्याः परिषदः (कौंसिलस्य) स्वरूपहेतोः राष्ट्रिय महासभायाः अभीप्सा सा पूर्ति मियात्, सङ्क्रान्तिकाले यदर्थं भारतीयाः अचकमन्त ।

(६) १९३५ तमेशवीयसम्वत्सरवर्तिय शासनाधिनियम-द्वारेण (गवर्नमेण्ट ऑफ इण्डिया एक्टेन) महाराज्यपालस्य शासन सम्बन्धे दत्तानां विशिष्टाधिकाराणां प्रयोगोऽकारणं न कृतः स्यात् ।

(७) एकतो महाराज्यपालस्य भारतशासनस्य प्रधान-त्वादेकतश्च ब्रिटिशहितानां भारते रक्षकत्वाच्च तस्य, तदीया मिमां द्विगुणां स्थितिं दूरीकर्तु मधिभारत मेकस्य ब्रिटिशोच्चा-योगिनः (हाई कमिश्नरस्य) पृकक्तया नियुक्तिः कृता भवेत् ।

(८) युद्धसमाप्तौ भारतीयाः स्वदेशार्थं स्वयं संविधा-नस्य निर्माणं विदधीरन् ।

(९) शिमलाया माश्वेव भारतस्य विभिन्नराजनीतिक-वर्गाणां नेतारः (सम्मेलनार्थम्) सम्मिलेयुः ।

न वस्तुतो वेवेल योजना भारतीयस्वतन्त्रतायाः सम-

स्यां मनागपि स नादधौ। सा भारत संविधान विषये तु वस्तुतः पूर्णतया शान्तैव भूत्वा समतिष्ठत। तस्मिन् काले महामानं गान्धिनं विहाय सर्वे राष्ट्रियमहासभाया नेतारो हि बन्दिगृहे आसन् ते शिमला सम्मेलनं सम्भावयितुं मुक्ता अक्रियन्त। राष्ट्रियमहासभा शिमला सम्मेलने भाग मादातुं स्वकीय मध्यक्षं मौ० अबुल कलाम आजादं प्रार्थयत। तदनुरोधेन स तत्र गतः। सम्मेलनम् आशामये वातावरणे प्रारब्ध मभूत्। परं साम्प्रदायिकमतभेदहेतो र्न सन्धानं भवितुं शशाक। जिन्ना कार्यकारिण्यां मुस्लिमलीग्संस्थाया मुस्लिमानेव सदस्यत्वेन ग्रहीतु मैच्छत्। न स राष्ट्रियमहासभाया मुस्लिमान् सदस्यत्वेन स्वीकर्तुं कामयाञ्चक्रे। तद्दुरभिनिवेशवशात् सः प्रयासोऽपि व्यर्थतां गतः। न राष्ट्रिय सभा मुस्लिमानां प्रतिनिधित्वं कुरुते केवलं मुस्लिमलीगेव तेषां प्रतिनिधित्वं करोतीति जिन्नानेतुर-भिप्राय आसीत्। राष्ट्रियमहासभा नेदमनौचित्य मसहत। अतः सन्धानं न संवृत्तम्। जिन्नानेतु र्दुर्निबन्धाच्छिमलासम्मेलनं विफल मभूत्। राजनीतिकगतिरोधो यथापूर्वं समतिष्ठत।

मुस्लिमलीग्संस्थाया नेतु र्जिन्नाख्यस्य तु दुरभिनिवेश आसीदेव, पर मांग्लशासन मपि हृदा भारतीयराजनीतिकगति-रोधं न निवारयितु मियेष। भारतस्य विभिन्नराजनीतिक-साम्प्रदायिकनेतॄणां मतभेदत्वान्नभारते भारतीयानां शासनं स्थापितं भवितुं महतीत्यांग्लशासनं देशनेतॄणां समक्षे निधातु मेव सदैवेयेष। चर्चिलः सर्वमेतं प्रपञ्च प्रदर्श्य, वितत्य च सर्वेषा मपि देशानामग्रे, स्वकीयपक्षस्य विजयं निर्वाचने आच-काङ्क्ष। श्रमिकवर्गस्य निर्वाचने पराजय स्तस्येष्ट आसीद्येन न भारतं स्वतन्त्रं भवितु मर्हेत्।

सम्मेलनेन मुस्लिमनीते र्दुर्हृदयं पूर्णतया प्रदर्शितम्। जिन्नाकृताभिनिवेशंहि सर्वेऽपि मतिमन्तोऽवाज्ञासिषुः। पञ्जाब-बङ्गालादिप्रदेशानां बहुसंख्यक मुस्लिमत्वात् संस्थाप-यिष्यमाणे पाकिस्ताने मुस्लिमाः सन्निवेशंलभेरन्निति जिन्ना कथनं नासीत् सत्यम्। यतो हि पञ्जाबप्रदेशे साम्यवादिनां नेता खिज अयात खां प्रधानमन्त्र्यासीत्; बंगालप्रदेशे राज्य-

पालस्य शासनं तदावर्तत; न तत्र मुस्लिमलीगधिकारे शासनस्य सत्ता प्रतिष्ठिता भवितु मशक्नोत्। उत्तरपश्चिमसीमाप्रान्ते प्रधानमन्त्री डॉ० खान महाशय आसीत्; स महासभाया आसीत्। सिन्धुप्रदेशे प्रधानमन्त्री सर गुलाम हुसैन आसीत्; सोऽपि राष्ट्रिय महासभासम्बद्ध आसीत्। एतेन मुस्लिमलीक्-संस्थाया मुस्लिमप्रतिनिधिकारित्वं निरस्तं जायते। एतद् व्यतिरिच्य मुसलमानाना मेका संख्यासीन्महती यस्या मुस्लिमलीगा सह नासीत् कोऽपि सम्बन्धः।

यदि मुहम्मदअली जिन्ना बुद्धिमत्तया कार्यमकरिष्यत्, महाराज्यपालनिर्मितकार्यकारिणीसमितिः स्वीकृता भवितु मशक्ष्यत्, तदा कार्यकारिण्यां सप्त मुसलमाना अभविष्यन्; संख्या च तदीया चतुर्दशावधिका समप्तस्यत।

समस्तेऽपि भारते मुसलमानजनसंख्या २५ प्रतिशत तदानी मवर्तत। तेन ते (मुसलमानाः) स्वकीयं लाभविशेषं कर्तुं क्षमा आसन्। मुस्लिमलीक् स्वहठधर्मितया सुवर्णावसर मजहात्[1]।

शिमला सम्मेलनस्यासफलत्वात् लॉर्ड वेवेलो भारतीय-राजनीतिकगतिरोध समाधानोद्देश्येन प्रान्तीयराज्यपालानां सम्मेलनं १, २।८।१९४५ दिनाङ्कयो रामन्त्रयाञ्चार। सम्मेलनेऽस्मिन् राज्यपालशासनसमाप्तिमधिकृत्य विचारः कृतोऽभूत्। भारते प्रान्तीयव्यवस्थापिकासभानां साधारणं निर्वाचनं सम्पद्येतेति च विमर्शण मभवत्। अस्मिन्नेवावसरे इङ्गलेण्डे लोकसभायाः (*House of Commons*) कृते साधारणं निर्वाचनं जातं; तत्र श्रमिकवर्ग आशातीतां सफलतां लेभे। इदानीं श्री एटली प्रधानोमन्त्री सञ्जातः। भारतसचिवश्चाभूत् श्री पैथिक लॉरेन्सः। नवसंसद मुद्घाटयन् ब्रिटेनसम्राट् अघोषयत् "भारतीयजनतायाः कृते प्रदत्तवचोऽनुसारं मम शासनसत्ता भारतीयलोकमतस्य नेतृषु मिलित्वा भारते शीघ्रमेव स्वायत्त-शासनारम्भदिशायां यथाशक्ति यतिष्यते"। मौ० आजादस्य वर्धापनापरकन्ते लेने श्री एटली असमच्छ्रमिकसत्ता भारतीय-

१. मौ० आजादः *India Wins Freedom*, *Page 114*.

समस्याया समुचितसमाधानाय पूर्णतया प्रयतिष्यते इत्यचकथत्। श्रमिकशासनसत्ता भारतमहाराज्यपालं लॉर्ड वेवेलं परामर्शोद्देश्येनाजुहाव; स भारतीय समस्यासम्बन्धे श्रमिकशासननीतिं स्पष्टीचकार। भारतीयजनमतनेतृषु मिलित्वा सम्राजः शासनसत्ताश्चैव स्वराज्यं स्थापयितु मुद्यतास्ति। युद्धहेतोः एतावन्तं कालं केन्द्रीयाणां प्रान्तीयानाञ्च व्यवस्थापिकासभापरकं निर्वाचनं न भवितु मशकत्; तदिदानीं शैत्ये स्यात्। सम्राजः शासनसत्ताया इयं हार्दिकीच्छास्ति यत् सर्वेषु प्रदेशेषु राजनीतिकनेतारः स्वस्वप्रदेशे मन्त्रिमण्डलनिर्माणभारं वोढुं तत्परा भविष्यन्ति; यावच्छीघ्रं च सम्भवं, संविधानसभाया निर्माणं सम्पत्स्यते। अस्मादेव कारणात् सा मम कृतेऽधिकारं प्राददाद् यत् निर्वाचनानन्तरं व्यवस्थापिकासभायाः प्रतिनिधिषु भवेद् विचारो; येन १९४२ तमाब्दस्य योजना स्वीकरणीयास्ति वा तत्स्थाने कापि परिवर्तिता योजनापेक्षणीयास्ति इत्येतन्निश्चितं स्यात्। भारतीयदेशीयराज्यानां प्रतिनिधिष्वपि निश्चयं कर्तुं विचारः कृतः स्याद् यत् ते संविधानसभायां केन प्रकारेण भागं ग्रहीष्यन्ती''ति च व्याञ्जीत्।

ब्रिटेन प्रधानमन्त्रिणो घोषणायां प्रमुखं तत्त्वमासीत् निर्वाचनम्। देशस्य, वातावरणस्य, विश्वराजनीतेश्च परिवर्तितत्वाद् राष्ट्रियमहासभा आगामिषु निर्वाचनेषु भागं ग्रहीष्यतीति निरचिनोत्। सा संसदीयसमितिं (*Parliamentary Board*) स्थापयामास। तत्संख्या तदा सप्तावधिकासीत्।

राष्ट्रियमहासभायाः कार्यकारिणीसमिति महत्त्वमयीं निर्वाचनघोषणां कृतवती। तद्द्वारेण राष्ट्रियमहासभा स्वनीतिं स्वकार्यपद्धतिं च कृत्स्नतया स्फुटीचकार। घोषणाया महत्त्वमयत्वात् तदीयाः केचन अंशाः साररूपेणोद्ध्रियन्ते—

"स्वतन्त्रतार्थं यतमानाया राष्ट्रियमहासभायाः षष्ठिवर्षाणि व्यतीतानि···सा भारतस्य सर्वेष्वपि भागेषु स्वतन्त्रता सन्देशं व्यानशोत्। सादावतिलघुतया प्रारब्धाभवत् परं शनैः शनैः स्तस्या विकासोऽभवत्। अद्य तु सा सर्वमपि देशमभिव्याप्य दीप्यते। इयं देशस्य स्वातन्त्र्यभावनाया जीवितप्रतीक-

त्वेन विद्योतते । बलिदानैस्त्यागैश्चान्यविधाभिः सेवाभिः साम्प्रतं भारतीयानां हृदयेष्वधिकारं कृत्वा व्याजृम्भते । तदीयं जीवनं शक्तिशालिना मान्दोलनानां जीवनमस्ति । अपमानजनकानुचिताभीप्साः सा सदैव न्यच्चकार ।

## सप्तमः परिच्छेदः

राष्ट्रियमहासभाया इतिहासो जनतोपकाराणां भारत-स्वातन्त्र्यलाभार्थं क्रियमाणानां प्रयत्नाना मुज्जवल इतिहासो-ऽस्ति। यावदपि दमनं शासनसत्ता व्यदधात् तावन्तमेव प्रभावं तावती मेव च शक्ति सा समलभत। सानिशं भारतीयान-सेवत; तदानीन्तु विशेषरुपेण यदा भारते घोरनिराशासीद् व्याप्ता।

राष्ट्रियमहासभा नागराणां समानाधिकारे विश्वसिति; सा सर्वेषा मपि हिनायानुकूल्यान्यवसरं च समुचितं प्रदातुं पक्ष-पातिनी वर्तते। जनाः स्वस्वव्यक्तित्वविकासने सफलता माप्नुयु रिति तदिष्टं वर्तते। भारतस्य विधानं स्यात् संघात्मकं, यत्र सम्मिलितान्येककानि स्वायत्तशासनं विन्देयुः। विधानसभाना-माधारो वयस्कमताधिकारनिष्ठ सिद्धान्तभाग्भवेदिति च तदभिलषितम्।

राष्ट्रियमहासभा सामाजिक्याः आर्थिक्याश्च स्वतन्त्र-तायाः स्थापनायै यतिष्यते। सा देशे कीदृश मप्यसमानत्वम्प्रति न प्रश्रयं प्रदास्यति। सावनतानां दलितानाञ्चोन्नत्यै घोरं प्रयत्नं विधास्यति। गान्धार (काबुल) प्रदेशविकासनाय च सा पद मुपसारयिष्यति। सा दरिद्रतायाः अन्तं कर्तुं विविधानुपा-यानवलम्बिष्यते। कृषीबला भवेयु रुन्नत अदरिद्रा इत्येतद् धेतोः सा प्रयतिष्यते। तेषां राज्येन सह राज्यस्य च मध्ये प्रत्यक्षः सम्बन्धः स्यादिति तस्या चेतः प्रीणयिष्यति। सा जनानां शिक्षाया निमित्तेन ध्यानावस्थिता स्याद् येन तेषां बौद्धिकं, मानसिकं, सांस्कृतिकं नैतिकञ्चोत्थानं भवेत्। सा औद्योगिकान् श्रमानुत्थापयिष्यति; तासा मखिलाना मपि-शक्तीना मवसानं विधास्यति या स्तान् शोषयन्ति; तदीय जीवनधरातल मुन्नमयन्ती सा तेषां कृते विशिष्टसौकर्याणि

प्रदास्यति ।

अन्ताराष्ट्रियविषयेषु राष्ट्रियमहासभा विश्वव्यापि-संघस्यनिर्माणे पक्षपातिनो वर्तते। सा संसारस्य सकलेषु राष्ट्रेषु, विशेषेण प्रतिवेशिराज्येषु सौहृदमयं सम्बन्धं निधास्यति। साजस्रं हिंसां युद्धञ्च विरोत्स्यति; सा शान्ति, सहयोगं, साह-चर्य्यञ्च गृह्णन्ती कार्यं करिष्यति ।

वेवेलस्य एटल्याश्च योजनानुसारेण भारते विधान-सभानां कृते नवानि निर्वाचनानि १९४५–'४६ सत्रस्य शैत्येऽजा-यन्त । राष्ट्रियमहासभानेतारो विजयार्थं घोरं प्रयासं कृतवन्तः। संयुक्तप्रान्ते, मद्रासे, बम्बय्याम्, उत्तरपश्चिमीयसीमाप्रान्ते, आसामे च राष्ट्रियमहासभा आशातीतां सफलतां प्राप। बङ्गाल-पञ्जाब-सिन्धुषु मुस्लिमलीक् च पर्याप्तानि स्थानान्य-विन्दत्। मुस्लिमस्थानेष्वपि कानिचन स्थानानि राष्ट्रियमहा-सभाभ्यर्थिनो विजयिनी बभूवुः; अप्रेलमासे, १९४६ तमाब्दे नव-मन्त्रिमण्डलानां निर्माणं प्रान्तेषु जातम्। हिन्दुबहुसंख्यकप्रान्तेषु राष्ट्रियमहासभाया मन्त्रिमण्डलं रचित मभूत्। बङ्गाल-पञ्जाब-सिन्धुप्रान्तेषु न तस्या मन्त्रिमण्डलं निर्मितं भवितु मशकत्। मुस्लिमलीक् बङ्गाले सिन्धौ च स्वमन्त्रिमण्डलनिर्माणे सफलता मध्यगच्छत्। पञ्जाबे मौ० आजादस्य प्रयत्नेन संयुक्तमन्त्रिमण्डलस्याभवन्निर्माणम्। तत्र राष्ट्रियमहासभायाः सदस्याः, अकालिनः, यूनियनिस्टाः (*Unionist party*) सम्मि-लिता अभूवन्। एतानि निर्वाचनानि देशे राजनीतिक्यांस्थित्यां गुरुतरं परिवर्तन मकार्षुः। युद्धाद् भारते जाताया राष्ट्रिय-चेतनाया विकासं न ब्रिटिशशासनसत्तोपेक्षितु मशकत्। भारतार्थ मनिवार्यतया स्वतन्त्रता देयैव वर्तत इति सा निश्चयं कर्तुं बाधिताभूत्।

अथ भारते नवीनस्य परिवर्तनस्याभा सर्वत्र किमप्यद्-भुतं तेजो बिभ्राणा व्यद्योतत। तत्र कारणानीमानि–

(अ) राजकीयसेवासु प्रविष्टानां नवतरुणानां मानसे आंग्ला भारतं स्वतन्त्रमधुना करिष्यन्तीत्येतस्य विश्वासस्योद्-भवः।

(आ) सर्वेषु देशवासिषु देशभक्तिभावनायाः सञ्चारः; जनताया माङ्ग्ल-दासता-सहनस्योत्कटानिच्छा ।

(इ) जनानां भारतीयनेतृषु परमादरधीः; राष्ट्रिय-भावनाया विविधैः प्रदर्शनैः प्रकाशनम्; भारतीयानां प्रबल-प्रगाढस्वातन्त्र्यौत्सुक्येनांग्लहृदयस्य प्रकम्पनम् ।

(ई) १९४६ तमाब्दे भारतस्य जलसेनाया विद्रोहे प्रवर्तनम् ।

(उ) कतिपयप्रबलतरघटनाभि रांग्लनेत्राणा मुन्मीलनम् ।

सुभाषचन्द्रवसोः सेनायाः सैनिकेषु चालितेनाभियोगेन सर्वस्मिन् देशे देशप्रेम प्रवाहित मभवत् । सैनिकेषु तेषु जनता असीम श्रद्धा मदीदृशत्; सा तत्कार्याणि प्राशंसत् । सा शासन-नीतिं विरुन्धाना तन्मुक्तिं प्रार्थयत । तस्मिन् काले शासनं प्रदर्शयितृषु कठोर व्यवहार माचरत् । बहुषु स्थलेषु सेना आयुधानि प्रायुंक्त । तेन शतशो जना हता आहता श्चाजायन्त शासनस्य स्वतन्त्रसैनिकसमवाये क्रियमाणा कठोरा दमन-कारिणी नीति र्जनता मुद्वेजयामास । १८।२।१९४६ तम-दिनाङ्के शासनविरोधिप्रदर्शनं बम्बय्यां जातम् । विद्रोहो जल-सेनायां वायुसेनायाञ्च पुस्फोट । सैन्ये सहानुभूतिं दर्शयितुं बम्बईनगरे त्रिलक्षश्रमिकाः स्वकार्यं तत्यजुः । स्थिति र्भीषणा जाता । आंग्लसेनाऽऽहूताभूत् । कृतकार्ययोधेषु श्रमजीविषु च गोलिकानां वृष्टिः कृताभवत् । शतशो हता अजायन्त । कराँच्यां तु स्थिति र्नितरां दारुणाभूत् । तत्र यदांग्लसेना भारतीयसैन्येषु गोलिका-प्रहारं कृतवती तदा भारतीयसेनापि तथैवान्वविष्टत । १८५७ तमवर्षानन्तर मयं प्रथमोऽवसर आसीद् यदा भारतीयसेना आंग्लसेनायां गोलिकाः प्रायुङ्क्त । विद्रोह उन्मुक्ततया प्रावर्त्तत । परमुचितसाहाय्यस्यानुपलब्धत्वाद् विद्रोहिणः सञ्जाता हतोत्साहाः । यद्यपि विद्रोहो न जातः सफलः परम् आंग्लाः 'इदानीं ब्रिटिशसाम्राज्यं भारते न स्थातुं शक्नोतीति निश्चय मगुः । तास्ता घटना आंग्लानां नेत्राण्युन्मी-लयाञ्चक्रुः । सम्प्रति भारतीयराष्ट्रवादो हि सेनायां प्रवेश-

नाम्न रोद्धुं शक्यो; भारतीयसेनेदानीं राष्ट्रप्रेमोन्मुखी सञ्जातास्ति; न भारते ब्रिटिशसेना पर्याप्ता येन भारतीयसेनां बिना कार्यं चलेदित्येतत् सर्वं निश्चित्य आंग्लाः भारतं स्वतन्त्रं कर्तुं कृतसङ्कल्पा अजायन्त। ते भाविन्यपि काले भारतेन सह सौहृद मैच्छन्, ऐच्छंश्च यथापूर्वं भारते ब्रिटिशधनपतित्वस्य सुरक्षितता।

शासनं भारतस्य परिवर्तनोन्मुखतायां नोदास्त। १९।२।१९४६ तमदिनाङ्के भारत प्रधानमन्त्री लॉर्ड पैथिक लारेंसोऽघोषयत्—'ब्रिटिशशासनं भारतम्प्रति कैवीनैटमिशनं (*Cabinet Mission*) प्रेषयिष्यति। तद् भारतीयेषु नेतृषु भारतस्वतन्त्रताप्रश्ने विचार विनिमयं करिष्यति। तदैव भारतस्य महाराज्यपालो घोषणाञ्चकार—मिशने भारतमन्त्री लॉर्ड पैथिक लारेन्सः, सर स्टफोर्ड क्रिप्सः, ए० वी० अलेकजेण्डरश्च स्युः। १५।३।१९४६ तमदिनाङ्के ब्रिटेनस्य प्रधानमन्त्री एटली भारतीय समस्या मधिकृत्य इंगलेण्डस्य लोकसभाया मभाषत—परिस्थितिः पूर्णतया परिवर्तितास्ति; तत्समाधानं न सम्भवम्। गतिरोध निवारण मनिवार्यम् अस्यां घोषणायां भारतेष्टः स्वतन्त्रताप्राप्त्यधिकारः स्वीकृतोऽभूत्। शासनसत्ता भारतस्य प्रार्थितायां स्वतन्त्रतायां पूर्णं सहयोगं साहाय्यञ्च प्रयच्छन्ती बहुसंख्यकजनान् स्वध्यानपथे निदधत्यल्पसंख्यकान्प्रति निषेधाधिकारं न दास्यन्ती तेषां हितं सर्वदैव ध्याने निधास्यति-इत्येतच्च तत्र स्पष्टीकृतमभूत्। अन्ततश्च ब्रिटेनप्रधानमन्त्री श्री एटली घोषणायामिदमप्यभ्यदधात्—मण्डलस्य (मिशनस्य) जना भारतस्य समस्यां समाधातु मुत्सहन्ते; ते सन्ति तत्र समुद्यताः। ते प्रतिसम्भवोपायेन समस्यां समाधातु मुचिततापूर्वकं यतिष्यन्ते।

श्री एटली महाभागस्य भाषणेन भारतीया आश्वस्ता अभूवंस्ते नास्ति भारतस्य स्वतन्त्रता दवीयसीत्यवागच्छन्।

२६।३।१९४५ तमदिनाङ्के मन्त्रिजनायोगो भारत माजगाम। श्री लॉर्ड पैथिकलारेन्सस्य स्टफोर्ड क्रिप्स महाशयस्य च भाषणेन भारतम्प्रति सत्तां हस्तान्तरितां कर्तुं तदागमनं जात

मिति विश्वासो दृढतया समजनि। आयोगस्य (मिशनस्य) उद्देश्य मासीदिदम्—

एकस्या नवीनाया वैधानिक्या रूपरेखायाः स्थापना, केन्द्रेऽन्तः कालवर्तिनोऽस्थायिनः शासनस्य च प्रतिष्ठापनम्।

तन्मिशनमेतदर्थं भारतीयनेतृषु मिमेल तदर्थं, वार्ता च चिरदिनान्यचलत् परं पाकिस्तानपरकनिर्बन्धहेतोर्नसंधानं भवितु मशकत्। पाकिस्तानपरकां मुस्लिमलीक् संस्थाया स्तामभीप्सां न राष्ट्रियमहासभा न्याय्या ममंस्त। तदैव देहल्यां मुस्लिमलीगधिवेशन मपि जातम्। पाकिस्तानप्राप्त्यै प्रतिसम्भवोपायाः प्रयुक्ताः स्युरिति तत्र भाषणेषु कथित मभूत्। बंगालस्य प्रधानमन्त्री सुहरावर्दी न्यगदत् "मुसलमानजाति र्न मरणासन्नजाति स्तस्य सम्बन्धः शब्दसीमागतो न"। बम्बई मुस्लिमलीगो नेता चुन्द्रीगरः प्रोवाच "सहस्रशो वर्षाणि वयं येषु हिन्दुष्वशास्महि तेषां हस्तगतानस्मान् कुर्यु राङ्ला इति न तेषामधिकारः" मुहम्मद इस्माइलः प्राब्रवीत्—"भारतीयै र्मुसलमानै धार्मिकयुद्धाय निश्चयः कृतोऽस्ति"। सर फिरोज खाँ नूनोऽशंसत् "हिन्दवो मुसलमानानां तत् ताण्डवं द्रक्ष्यन्ति यस्य प्रदर्शनं चंङ्गेज खाँ, हलाकू च चक्रतुः"। तदधिवेशनेऽयं प्रस्तावोऽभूत् पारितः—"मुस्लिमसम्प्रदाय स्तद् विधानं न स्वीकरिष्यति यत्र भारत मखण्डं स्वीकृतं स्यात्। एतदुद्देश्याधारे कस्यामपि संविधानसभायां सहयोगं न करिष्यति"।

एतेन सन्धानस्यासम्भाव्यता स्पष्टतयावगतीभवति। राष्ट्रियमहासभा-मुस्लिमलीगो र्मध्ये सन्धाने न जाते सति मिशनसदस्याः राष्ट्रिय महासभाया मुस्लिमलीगश्च त्रित्रिसदस्यानामन्त्रयामा सुस्तेषां सदस्यानां पुरः स्थापितायाः योजनाया आधारत्वेन निम्नसिद्धान्ता मताअभूवन्—

(१) भारते संघशासनस्य स्थापना स्यात्; तदधिकारे वैदेशिको विषयो, रक्षा, यातायाते च स्युः। (२) प्रदेशाः स्वायत्तशासनं प्राप्नुयुः। (३) प्रदेशहस्तनिघ्नाधिकाराणा मविशिष्टत्वं मतं भवेत्। (४) प्रदेशानां सर्वेषां भागद्वये विभक्तीकृतत्वमिष्टं स्यात्।

अत्रापि पर्याप्ते विचारे कृतेऽपि न सफलता प्राप्ताभवत्। मन्त्रिमण्डलस्य सदस्याः पाकिस्तानाभीप्सायां न सहमता अभूवन्। पुनश्च मन्त्रिमण्डलस्य सदस्या वैधानिकसमस्यामधिकृत्य योजनामेकां निदधुः। अस्याश्च योजनाया उल्लेखनीया वार्ता इमा आसन्—(१) भारते संघराज्यं स्थाप्येत। तत्र भारतस्यसर्वाणि राज्यानि सम्मिलितानिस्युः। अस्य संघराज्यस्याधिकारो वैदेशिकेषु विषयेषु, रक्षा-यातायातसम्बन्धिविषयेषु भवेत्। एतेषां विषयाणां कृतेऽपेक्षितधनराशिसम्पादनाधिकारं संघराज्यं प्राप्नुयात्। (२) संघशासनस्य कार्यकारिण्यां, व्यवस्थापिकासभासु प्रति विषये, यस्य सम्बन्धः कयापि महत्त्वपूर्णया साम्प्रदायिक्या समस्यया सह सवर्तेत, द्वयोरपि प्रमुखयोः सम्प्रदाययोः (हिन्दू मुसलमानाश्च) उपस्थितानां मतदातृणां सदस्यानां बहुमतत्वपरकपक्षोऽपेक्ष्येत। (३) संघसूच्यां येषां विषयाणामुल्लेखो न कृतोऽस्ति, तेष्ववशिष्टेषु च विषयेषु प्रदेशानामधिकारो भवेत्। (४) देशीयराज्यानामधिकारे ते सर्वे विषयाः सुरक्षिताः स्यु र्ये न सन्ति संघशासनसत्तार्थमर्पिताः। (५) प्रदेशाः परस्परं मिलित्वा पृथक्शासनसम्बन्धिसमवायस्य निर्माणार्थं स्वतन्त्राः स्युः। प्रतिसमवायः प्रादेशिकविषयनिर्णाणार्थमधिकारमश्नुवीत; तद्व्यवस्थां शासनं सामूहिकतया सम्पादयेत्।

योजनायामेतस्यां भारतस्य संविधानं स्रष्टु मेकस्याः संविधानसभाया व्यवस्था कृतासीत्। तत्सदस्य-संख्योल्लेखश्च तत्राक्रियत। निर्वाचने परोक्षनीत्या निर्देश कृतोऽभूत। भारत-प्रदेश-प्रतिनिधीनां निर्वाचनं प्रादेशिकविधानसभया कृतं स्यात्। तन्निर्वाचनमानुपातिकप्रतिनिधिप्रणाल्याधारकं भवेत। देशीय-राज्यप्रतिनिधीनां सम्बन्धे योजनायां केवल मिद मभिहितं जातं यत् तन्नियुक्तीकरणनिर्णयः परामर्शेण, गच्छतानेहसा, क्रियेत।

तद्योजनायां हि आन्तरकालिकशासनसत्तास्थापनाया अपि व्यवस्था तावन्न कृताऽभूत् यावत् संविधानसभा संविधानं न निरमिमीत। तत्रायमुल्लेखः कृतः—अस्यां सत्तायां युद्धविभागोऽन्ये च समस्ताविभागा स्तेषां राजनीतिकनेतृणां निय्न-

तायां निहिताः स्यु येषु जनतायाः पूर्णो विश्वासो भवेत् । तदेवं स्थापितां शासनसत्ताम्प्रति ब्रिटिशशासनस्य पूर्णः सहयोगः प्राप्तः स्यात् । तद् (ब्रिटिशशासनम्) समस्तोत्तरदायित्वादान-शक्ति प्रति तदर्थ साहाय्यं सर्वविधतया करिष्यति[1] ।

एतया योजनया राष्ट्रियमहासभाया मुस्लिमलीगश्च नेतृणां तोषणाय पदमुत्थापितं बभूव । अत्र पाकिस्तानविषयिकाभीप्सा नादृताभूत् । परं मुसलमानान् प्रसादयितुं प्रदेशाः समुदायेषु विभक्तीकृताः । पर्याप्त शक्तिश्च तदर्थं प्रदत्ता । योजना राष्ट्रियमहासभां प्रीणयितु मयतत । साम्प्रदायिकप्रतिनिधित्वं यद्यपि योजनां पूर्णतया अस्वीकृतां न चकार, परं तत्क्षेत्रं विशालसीमाभिव्यापि विहितम् ।

मन्त्रिमण्डलप्रतिष्टापितयोजनेयं विभिन्नराजनीतिक पक्षेषु कां प्रतिक्रिया मजनयदित्येतदिहोल्लिख्यते—

राष्ट्रियमहासभायाः कार्यकारिणी कतिपयाशङ्का-निराकरणाय अनुरुरोध ।

अतः सा स्वविचारान् निदधौ—

(अ) अनयायोजनया संघराज्य मतिदुर्बलं भवेत् । न तत् समस्तभारतम्प्रति कामपि योजनां निधातुं क्षमं स्यात् ।

(आ) इयं योजना भारतं त्रिषु भागेषु विभनक्ति । अतः स्याद् भारतस्याखण्डता विनष्टा । चेत् प्रदेशानां वर्गे सम्मिलितता वा न तत्र सम्मिलितता प्रदेशेच्छाधीना तदा राष्ट्रियमहासभा तां स्वीकुर्वीत ? (राष्ट्रियमहासभा अस्मिन् विषये मन्त्रिमण्डलस्य ध्यानं पञ्चदश मेकोनविंशञ्च प्रघट्टकम्प्रति आचकर्ष) ।

पाकिस्तानविषयिकाया अभीप्सायाः स्वीकृतत्वादपि न मुस्लिमलीक् तां योजना मनुमेने । हिन्दु-मुसलमानहितपरकैव सा योजनेति मत्वा सिक्खा अपि तां नाद्रियन्ते स्म । तत्र योजनायां भारतस्यैकता सैद्धान्तिकतया स्वीकृता न च व्यावहारिकतयातो महासभापि तां योजनां न स्वीकृतवती । सावदत् यन्मुसलमानाना मेव हितं तत्र दृष्टमस्ति; भारतस्याखण्डत्वं न

१. राजेन्द्रप्रसादः *India divided, P, 400 E.*

तत्र रक्षितम् ।

महाराज्यपालः संक्रान्तिकानवर्तिन्याः सत्तायाः स्थापनायाः प्रयत्नमुद्दिश्य प्रमुखप्रमुखकतिपयनेतृषु मिमेल परमन्ततो गत्वा साम्प्रदायिकतातमिस्रा तमपि प्रयत्नं स्वगर्भे न्यपातयत् । मुस्लिमलीक्-पाकिस्तानाभीप्साबशाद् मानवतां निःशेषतया अजहात् । १६।८।१९४६ दिनाङ्के कलिकातायां महान् नृशंस उपप्लवो भीषणः प्रास्फुटत् । मौ० आजादस्तदानीं तत्रैवासीत् । स लिखति—१६।८ दिनाङ्को भारतस्येतिहासेऽसिताक्षरेषु निर्दिष्टो भवेत् । तस्मिन्नहनि नगरं शोणितसागरे निममज्ज । शतशो जना हताः सहस्रशश्चाहता अभूवन् । सम्पद्विनाशस्यानुमानं न कर्तुं शक्यम् । नगरे दुराचारिणां राज्यं स्थापित मभवत् । मुसलमानाः किं न कश्मलं हिन्दुषु विहितवन्तः[1] ।

राजनीतिकगतिरोधनिवारणाय येऽपि प्रयत्नाः कृता अजायन्त, तत्र महाराज्यपालो यदा सफलतां नापश्यत् तदा ब्रिटेनशासनस्य प्रधानमन्त्री घोषणामिमां चकार—

(१) सत्ताहस्तान्तरणस्य कृते १९४८ तमाब्दस्य जूनमासो निर्धार्यते ।

(२) महाराष्ट्रियसभा-मुस्लिमलीगअमान्यं संविधानं न ब्रिटिशशासनं स्वीकरिष्यति ।

(३) सर्वसम्मत्या सम्मानितं ब्रिटिशशासनसत्तासंविधानं स्वीकरिष्यति । यद्येतत् सम्भवं जातं तदा ब्रिटिशशासनं कस्मै सत्ता देया स्यादित्यत्र विचारयिष्यति ।

ब्रिठिशशासरसत्ता सर्वसम्म केन्द्रीयशासनाभावे सत्तां प्रान्तीयवर्तमानशासनं वान्यत् किमपि प्रति समर्पयितुं शक्नोतीति यदा मुस्लिमलीक् सङ्केतं प्राप, तदा सा राष्ट्रियमहासभया सह सन्धानं नापेक्षिष्ट । सा तु प्रतिषेधस्वत्वं शासनसत्तातोऽध्यगमत् । इदानीं सा पाकिस्तानविषयककल्पनायाः सार्थकं रूपं कर्तुं मवसर मविन्दन । तदीया पाकिस्तानाभीप्सा सफलतायां दृढीयस्कंता मलभत । संविधानसभानिर्मितकेन्द्रीय-

१. मौ० आजादः *India wins freedom, Page 159.*

शासनम्प्रति सत्ता समर्पिताभविष्यतीति चेद् एटलो महानुभावः स्वघोषणाया मभिव्यक्त मकरिष्यत् तदा मुस्लिम लीग् विवशा (वाधिता) भूत्वा राष्ट्रियमहासभया सार्धं सन्धातुं सन्नद्धाभविष्यत्। वस्तुतो मुस्लिमलीगः स्वप्रत्यक्षनया करणीय-कार्यकलापे (*Direct action*) अनुपमा सफलतेयं ज्ञेया।

इदानीं लॉर्डवेवेलस्य स्थाने लॉर्ड माउण्टवेण्टनो महाराज्यपालः समतिष्ठत। सः स्वकार्यभारं २३।३।१९४७ दिनाङ्के जग्राह। एष महाराज्यपालो भारतविभाजनकार्याय वस्तुतः प्रहितोऽभूत्। भारतमागम्य सोऽविलम्बेन सोत्साहं कार्ये समलगत्। आदावसौ म० गान्धिनि मिलित्वा विचार मकार्षीत्। भारतस्यान्येषु च नेतृषु सोऽमिलत्। मुस्लिम लीक् केनापि-प्रकारेण अखण्डितस्य भारतस्य कृते आयोजितायां विधानसभायां न सहयोगं करिष्यतीत्येतं निश्चय मात्मानं स आसादयत्। सः कृत्स्नामपि परिस्थितिं सम्यगधिजगे। भारतस्य विभाजन मनिवार्यमिति स निरचैषीत्। सः सर्वामपि भारतीयां स्थिति सर्वथैवावगम्य पुनः परामर्श मादातुं ब्रिटिश मन्त्रिमण्डलाल् लन्दन मगात्। कृत्वा च परामर्शं तत्र भारतं निववृते। स आगत्य ३।६।१९४७ दिनाङ्के योजना मेकां प्रास्तावीत्। सा योजना माउण्टवेटेन योजनानाम्नाप्रथत। योजनाया मुख्या वार्ता इमाः—

(१) ब्रिटिशशासनसत्तेच्छति यद् भारतस्य शासन माश्वेव तस्मैशासनाय विश्राणितं भवेद् यस्य निर्माणं जनताया इच्छया जात मस्ति।

(२) ब्रिटिशशासन मिदं नाभिलषते यद् वर्तमानसंविधानकार्येकीदृगप्यन्तराय उद्भावितः स्यात्।

(३) वर्तमानया संविधानसभया विरचितं संविधानं देशस्य तेषु भागेषु न कार्यान्वितं भवेद् ये न तत् स्वीकुर्वन्ति वाञ्छन्ति चेत्येदप्यत्र स्पष्टीक्रियते।

(४) देशस्य ते भागाः, ये संविधानसभाया इदं संविधानं न स्वीकुर्वन्ति कस्या अपि नवायाः संविधानसभाया निर्माणं चिकीर्षन्ति न वेत्येतदपि ज्ञातव्यं वर्तते। सा प्रक्रियानुसरणीयास्ति

यया तत् तत् स्थानवासिनी जनता वा तत्तत्सम्प्रदायप्रिया जनता तुष्येत् ।

पञ्जाबस्य बंगालस्य च विधानसभाया अधिवेशनं द्वयो भागयोः क्रियेत । एको भागस्तत्क्षेत्रसम्बद्धप्रतिनिधीनां स्याद् यत्र मुसलमनानां बहुमतं नास्ति । तत्पुरतः प्रश्नोऽयं प्रस्तुतीकृतो भवेद् यत् ते स्वप्रान्तस्य विभाजनपक्षे सन्ति न वा । चेन्मतं विभाजनपक्षे स्यात् तदा ते वर्तमानसंविधानसभायां सम्मिलिता बुभूषन्ति किं वा पृथक् संविधान सभाया निर्माणं कर्तुं कामयन्ते ।

(५) सिन्धोर्विधान सभापि वार्ताया एतस्या निर्णयनायावसरं लभेत ।

(६) उत्तरपश्चिमीय सीमाप्रदेश मधिकृत्य विषयस्यास्य निर्णयस्तत्रत्यया विधानसभया न क्रियेत; तत्र तन्निर्णयो जनमतेन विधीयेत ।

(७) आसामप्रदेशस्य सिलहटमण्डले मुसलमानाः सन्ति, बहुसंख्यायां; यदा हि तत्रत्येष्वन्येषु खण्डेषु हिन्दवः सन्ति बहुसंख्यकाः । अतः जनमतेन सिलहटस्था जनता आसामे अन्तर्गतत्व मिच्छति वा पूर्वीयबङ्गाले इत्येतद् ज्ञातव्यम् । निर्णयो-विधेयो जनमतेन ।

(८) देशीयराज्यान्यधिकृत्य च सैव योजना व्यवस्था च स्वीकार्या, यस्या निर्धारणं मन्त्रिमण्डलयोजनायां कृतं भवेत् ।

(९) यद्युपर्युक्तयोजनानुसारेण मुस्लिम क्षेत्रं विभाजनं सम्पोषयति तदा भारतस्य पाकिस्तानस्य च सीमाया निर्धारणाय एकस्यायोगस्य नियोजनं भवेत् ।

(१०) ब्रिटिशशासनं १९४८ तमाब्दं यावत् सत्ताया हस्तान्तरणं न प्रतीक्षेत; तत् १९४७ तमाब्द एव कार्यमिदं सम्पन्नतां निनीषेदित्यत्र स्पष्टीक्रियते ।

मुस्लिमलीक् माउण्टवेटन योजनांस्वीचकार । माउण्टवेटन योजनां विचारयितु मखिलभारतीयराष्ट्रियमहासभाया अधिवेशनं देहल्या मभवत् । सा भारतस्याखण्डताया मभिलषमाणापि परिस्थितिभिः प्रबाध्यमाना भूत्वा माउण्टवेटन

योजनां- भारतविभाजन मह्हृदयेन स्वीचकार। सा तत्र प्रस्ताव मिमं पारितता मनैषीत्—

"राष्ट्रिय महासभा भारतस्यैक्ये स्वपक्षं न्यदधात्। राष्ट्रिय महासभायाः स्थापितायाः षष्ठिवर्षाण्यतीतानि; सा स्वजनुः समयादेव एकस्य संयुक्तस्य स्वतन्त्रस्य भारतस्य स्वप्न मपश्यत्; तत्प्राप्त्यैव च लक्षशः पुरुषाः स्त्रियश्च कष्टान्यसहन्त; समुद्र-पर्वतान्यान्यभौगोलिकदशाभि रद्यतनस्य भारतस्य निर्माणं कृतमस्ति। कापि मानवीया शक्तिस्तदाधारं परिवर्तयितुं न क्षमतावती वर्तते। आर्थिक्यः परिस्थितयः, आर्थिक विषयाणां वर्धमानान्यात्ययिकत्वानि च भारतस्यैकता मतोऽप्यधिकावश्यकत्वं ज्ञापयन्ति। अस्माभि र्भारतस्य यच्चित्र मालिखित मस्ति तदस्मद्धृदये ध्याने च वर्तते वर्त्स्यते च। अखिलभारतीयराष्ट्रियमहासभायाः समितिः पूर्णतया विश्वसिति यद् वर्तमानपरिप्रेक्ष्ये, भारतीयासु समस्यासु समुचितेन दृष्टिकोणेन विचारः कृतो भविष्यति। तेन निष्पक्षावदातविचारेण द्विराष्ट्रसिद्धान्तस्य निर्मूलता सिद्धा भविष्यति; भविष्यति च स तदा परित्यक्तः। शासकीय योजनया सम्भवतो भारतस्य कतिपये भागास्ततः पृथक्त्वं नीता भविष्यन्ति; अतोऽतिखेदपूर्वकं वर्तमानदशाया मखिलभारतीयराष्ट्रियमहासभायाः समितिः सम्भावनामिमां स्वीकुरुते।"

अस्मिन् समये घटनाचक्रमति तीव्ररंहसा गतिमद् वर्तते। एतस्या योजनाया अनुसारेण बंगालस्य पञ्जाबस्य च विभाजनं भवेत्। तत्र मुस्लिमा हिन्दवश्च विधानसभायाः सदस्याः पृथगधिवेशनेषु स्थित्वा भारते वा पाकिस्ताने सम्मिलिता भवितुं निश्चेष्यन्ति; अथ च तदैव त इदमपि निश्चयं करिष्यन्ति यत् प्रदेशानां विभाजनं करणीयं किं वा न। विभाजन परकस्तेषां निश्चयो भविष्यति, पाकिस्ताने सम्मिलितत्वाय च तेषां निर्धारणं भविष्यति। २०।६ दिनाङ्के बंगालप्रदेशस्य, २३।६ दिनाङ्के पञ्जाबप्रदेशस्य च विधानसभाः सम्भावनानुसारं स्वनिर्णयं प्रकाशयाञ्चक्रुः। सीमा-विभाजनाय द्वावायोगौ नियुक्तीकृतौ। तावपि स्वनिर्णयं शीघ्रं प्रददतुः। खान अब्दुल-

गफ्फारखाँ (सीमान्तगान्धी) उत्तरपश्चिमसीमाप्रदेशे जनमतं ग्रहीतुं व्यरौत्सीत्। प्रदेशो भारते वा पाकिस्ताने सम्मिलितो भवेत् तदाधारोवा पाकिस्तानं वा परवतूनिस्तानं कल्पितं भवेदित्येतस्यामवन्यां न जनमतं कार्यमिति तद्विचारोऽभवत्। परं नास्य दिशायां ध्यानं दत्त मभूत्। जनमत-वहिष्कार निश्चयाद् विरोधिनो लाभवन्तो जाताः। जनता पाकिस्तानपक्षे निर्णय मददात्। सा पाकिस्ताने सम्मिलिता भवितुं निर्णिनाय। आसामप्रदेशस्य सिलहट मण्डलमपि पश्चिमीय बङ्गाले आत्मान मन्तर्भावयितुं निश्चय मकरोत्।

भारतस्वतन्त्रतापरक विधेयकं ब्रिटिश लोकसभायामुपस्थापितमभूत्; तदतिशीघ्रं १८।७ दिनाङ्के स्वीकृतमजायत। चर्चिलानुदारसमवायस्यापि सहयोगप्रदत्वात् तद् विधेयक माशु स्वीकृत मभवत्। ततश्चनिश्चयोऽयं कृतोऽभूत्—

(१) १५।८।१९४७ दिनाङ्के भारतपाकिस्तानाख्ययो र्द्वयोः स्वतन्त्रयोः राज्ययोः स्थापना स्यात्। द्वे च ते औपनिवेशिकराज्यत्वाय कल्पेयाताम्।

(२) द्वयोरप्युपनिवेशयोः संविधानसभाम्प्रति ब्रिटिशशासनं सत्तायाः उत्तरदायित्व मर्पयिष्यति। एते यदृच्छया नैजसंविधाननिर्माणनिष्ठां स्वतन्त्रतां विधास्यतः। अतः संविधानसभाः सम्पूर्णप्रभुत्वसम्पन्नसंस्थाः स्युः।

(३) भारतपाकिस्तानाख्योपनिवेशयोरुभयोरपि भवेदेकैको महाराज्यपालः। स तन्मन्त्रिमण्डलसम्मत्या नियुज्येत। महाराज्यपालो राज्यपालाश्च स्वेच्छापूर्वकं शासनं नैव करिष्यन्ति।

(४) यावत् संविधानसभाः संविधानस्य निर्माणं नानुतिष्ठन्ति तावत् ताः संविधानसभाः विधानमण्डलत्वेन कार्यं विधास्यन्ति; तद्विधायिनीषु शक्तिषु च कीदृशमपि नियन्त्रणं न भविष्यति। व्यतीते सति १५।८।४७ दिनाङ्के, ब्रिटिशसंसत्पारितः कोऽप्यधिनियम स्तद्विधानमण्डलस्य स्वीकृतिं विनोपनिवेशेषु न भविष्यति कार्यान्वितः।

(५) नवविधानानुसारं प्रदेशेषु नवनिर्वाचनानि न यावत् स्यु स्तावत्प्रदेशेष्वस्यैव समयस्य विधानमण्डलान्येव कार्यं करिष्यन्ति ।

(६) १५।८।१९४७ दिनाङ्कानन्तरं भारते पाकिस्ताने च ब्रिटिशसंसन्नियन्त्रणस्य संवृतत्वात् भारत-मन्त्रिपदं समाप्तं स्यात् ।

(७) यावद् वर्तमानसंविधाने नवस्य संविधानस्य गठनं न जायेत, तावत् १९३५ तमाब्दस्य भारतशासनाधिनियमेनैव शासनं भवेत्; (परं परिवर्तितपरिस्थितिवशात् कामिचनापेक्षितानि परिवर्तनानि कृतान्यजायन्त । तेषु ता धाराः स्थानं न लब्धुमशक्नुवन् यासां सम्बन्धो महाराज्यपालपरकः प्रादेशिकराज्यपालविशेषोत्तरदायित्वपरको, भारतमन्त्रिशासन सम्बन्धिनियन्त्रणपरकश्च केन्द्रीयशासने कतिपयविषयाणां सुरक्षिततायाः कृते स्थित आसीत् । विधानसभाद्वारेण• स्वीकृतानां विधीनां स्थितिः सम्राजकृतास्त्रीकरण क्षमाधिकारेण सहासीद् वा, एतादृशै रन्यै र्विषयैः समं समवर्तत । १९४७ तमाब्दस्याधिनियमेन १९३५ तमाब्दस्य भारतशासनविषयकोऽधिनियमस्तथा सम्मार्जितो यथा सङ्क्रान्तिकाल वर्तिन्यां स्थित्यां द्वयोरपिराज्ययोः शासनं प्रजातन्त्रानुसारं संगठितं-कार्यान्वितं भवितुमार्हत्) ।

(८) भारतीयराज्येषु ब्रिटेन सार्वभौमसत्ता समाप्यते । तानि प्रति कस्मिन्नपि उपनिवेशे सम्मिलितानि भवितुं स्वतन्त्रता प्रदीयते । स्वाभाविकसम्बन्धानां निश्चयनाय तानि प्राप्ताधिकाराणि क्रियन्ते ।

१५।८।१९४७ दिनाङ्के, भारतस्वतन्त्रताधिनियमेन भारतं पाकिस्तानं च स्वतन्त्रौपनिवेशिकराज्ये परिणतेऽजायेताम् । तदेवं ब्रिटिशशासनस्यावसान मजायत । भारतस्य महाराज्यपालो माउण्टवेटनः पाकिस्तानस्य च मुहम्मद अली जिन्नाभवत् । द्वयोरपि भारतपाकिस्तानयो र्महाराज्यपाल एक एव (माउण्टवेटनः) स्याद् येन सङ्क्रान्तिकालः शान्तिपूर्वकं समाप्तो

भवितुं शक्नुयादित्यखिलभारतीयराष्ट्रियमहासभा आकाङ्क्षत। परं नैतज्जातम्। यद्यपि भारतं स्वतन्त्र मजायत; राष्ट्रियमहासभा, अकथनीयेषु प्रयत्नेषु कृतेषु सत्सु, सफलता मधीयाय; परं भारतस्य विभाजनं यस्यां परिस्थित्या मभूत् सा प्रतिभारतीय मदुनोत्; समस्यायाः समाधानस्य कि मपि द्वारमेव न वर्तत।

यदा पाकिस्तानगतं बङ्गालं हिन्दवः सिक्खाः कर्मचारिणश्च त्यक्तु मबाध्यन्त; तेषां च स्थाने मुस्लिमाः कर्मचारिणो न्ययुज्यन्त, तदा मुसलमाना असहायेषु हिन्दुवादिष्वन्यायं कर्तुमारभन्त। एतस्य प्रतिक्रियातो भारताधी पञ्जाबभागेऽभवत्। उभयत्रापि जनेषु शोचनीया विपद आपेतुः। तदैव दिल्ल्यामपि साम्प्रदायिक उपद्रव उदतिष्टत्। दिल्ल्यां प्रच्छन्नतया मुसलमाना भीषणतरविपद्घटाभि र्जनजीवनं सम्पदश्च तदीया ध्वंस यितुं संलग्ना आसन् परं तां दुःस्थितिं श्री वल्लभ भाई पटेलो निवारयितुं परममतिमत्तापूर्वकं नीत्या, सत्स हसेन च कार्यञ्चकार। अतो न दिल्ल्यां विपदापपात। महात्मागान्धी सपदि बङ्गालाद् दिल्ली माजगाम। सः शान्त्यर्थमनशनं चक्रे। सर्वेषामपि जनाना माश्वासने सति प्राप्ते, म० गान्धी अनशन मजहात्। महात्मगान्धिनो नीतिं मुसलमानपक्षपातिनीं मत्वा धर्मान्धाः हिन्दवोऽकुप्यन्। नाथूराम गौडसे नामा कश्चिज्जनः ३०।१।१९४८ दिनाङ्के, महात्मनि, यदा स विडलाभवने, सायं प्रार्थनार्थं सोपानादवतरन्नासीत्, गोलिकाप्रहारं कृतवान्। शीघ्रमेव तस्य मृत्युः सञ्जातः। साम्प्रदायिकसमस्याहेतोः शान्तेः अहिंसायाश्च आराधको बलिवेद्या मात्मान महौषीत्।

जर्मनी-जापानेटलीदेशान्त पराभूय मित्रराष्ट्राणि विजयीनि जातानि परं यस्यैंगलेण्डस्याधिकारो भारतेऽवर्तत स इंगलेण्डदेशो द्वितीयविश्वसमरे विजय मवाप्यापि नितरां जर्जरतां गतः। स जीवन्नपि अजीवन्निव जातः। तस्यार्थिकी स्थिति भृशं क्षीणतरतां गमिता युद्धेन, महता ऋणभारेण सः कवलीकृत आसीत्। एकतस्तु युद्धात् तदीया स्थिति र्दुबलाभवदेकतश्च ब्रिटिशशासनसत्ता श्रमिकवर्गस्य निघ्नता मागता। श्रमिका भारतस्य स्वतन्त्रताम्प्रति न तादृशं हृदयं धृतवन्तो

यादृश मनुदारवर्गश्चर्चिलीयो हृदय मबिभः। भारतं स्वतन्त्र-तार्थं यदा युध्यमान मासीत् तदोपरिनिर्दिष्टस्थितिरेव कारणं नाभवत् परं भारतीया अपि लक्षशः स्वतन्त्रतालाभाय नाना-विधानि कष्टानि सहमाना आंग्लानां हृदये 'न भारते साम्प्रत मस्मदीयं शासनं सम्भवम्' इत्येतं विश्वास मुदपीपदन्। स्वतन्त्रताप्राप्त्यर्थं क्रियमाणं भारतीयानां त्यागं, बलिदानं, कठोरकष्टसहिष्णुत्वञ्च वीक्ष्य ब्रिटिशशासनस्य सिंहासनं प्रावेपत। भारतीय-सैनिकानां विद्रोहस्तु ब्रिटिशशासन मत्रास यत्। एकतस्त्वांग्ला एतत् सर्वं मपश्यन्नेकतश्च श्रीसुभाषचन्द्र कृत युद्धप्रयत्नास्तदीया स्वतन्त्रतावाहिनी च तान् सावधानान् कुर्वाणा भयभीतांश्चकार। परमेतानि सर्वाण्यपि तत्त्वानि मिलित्वा पि न तन्महत्त्व मबिभरु तन्महत्त्वं राष्ट्रप्रेमाख्यं तत्त्व मजुषत। महात्मा गान्धी, राष्ट्रियमहासभा, भारतीया पं० जवाहरलालनेहरु-राजेन्द्रप्रसाद-बल्लभभाईपटेलादिका. नेतारो, निर्दिष्टेभ्य एतेभ्यः प्राक् तना लोकमान्य बालगङ्गाधरतिलक-गोपालकृष्णगोखलेप्रभृतयश्च नेतारो देशस्य नगरं-नगरं, ग्रामं ग्रामञ्च देशभक्तिपरिपूर्णं विधाय जने-जने च देशप्रेमसञ्चारितं कृत्वा समग्रमपि देशं संसारस्य देशप्रेमवतां देशानां शिरोमणिं कृतवन्तः। तेषां देशसेवा, तेषां, देशार्थमुत्सर्ग स्तेषां ज्ञानं, तेषां सन्नीतिस्तेषां नैतिकं बलं च भारतस्याबालवृद्धान् राष्ट्रोपास-कानकार्षुः। ते देशमेव स्वकीय माराध्यदेव ममंसत। ते देश-सेवामेव स्वजीवनस्य सर्वस्व ममन्यन्त। अतः स्वराष्ट्रस्य स्वा-तन्त्र्याय महात्मगान्धिनिर्दिष्टमहिंसाव्रतमग्रहिषुः, सत्याग्रहार्थ-मात्मान मुचित सत्पात्रत्वेन प्रमाणीकृतवन्तः; देशार्थं किं किं न कष्टं सहमानाः पर्यवालोक्यन्त; ते कारागारकष्टानि सहर्ष मुपभुञ्जानाः, वेत्रप्रहारं, लगुड-प्रहारं, गोलिका-प्रहारञ्च सह-मानाः, एतावदेव न, प्राणापहारिणीं शूलदण्डदोलामधिष्ठिता भवन्तश्च प्राप्यन्त। वस्तुतो भारतीयाना मिदं प्रकृष्टतमं देश-प्रेम आंग्लान् भारतं त्यक्तुं विवशीचकार। ते भारतीयानां देशानुरागानलजनितताप सोढु मक्षमा भूत्वा भारत ममुञ्चन्। अमुञ्चंस्तु भारतं ते, परं तस्य विभाजनं कृत्वैव ते तत्

(भारतम्) स्वतन्त्रं कृतवन्तः। तन्नीत्यैव वस्तुतः कुटिलया पाकिस्तानस्य स्थापना भवितु मार्हत्। तेषां सा नीति र्मुस्लिम-लीकसंस्थातो बल मवाप्तवती। इयं मुस्लिमलीक् संस्था सास्ति यावसरं सम्यगधीत्य भारत-विभाजन मचीकरत्। हन्त, यदेह स्वातन्त्र्यविभाकरस्य रश्मयो भारतवसुमत्यां सर्वत्रानन्दोल्ला-समयप्रकाशस्योद्गिरणे संलग्ना आसस्तदा भीषणतमं रक्त-पातमयं दृश्यमप्यत्रावतरत् तस्य त्तदायि वर्तते सिताङ्ग-शासनम्। तत् स्वशासनोदयकालादेव सम्प्रदायिकत्वबीज मवपत्। न तत् कदापि हिन्दुमुस्लिमयोरैक्य मचीकमत। तत् तु सततं तथा प्रायतत यथा तयो र्मध्ये द्वैधोभाव शात्रवेर्ष्याः प्रवर्धेरन्। तत् सकृन्नासकृत् स्वसत्तायाः स्थत्यर्थं भारते साम्प्र-दायिकानुपप्लवान् ससर्ज। मुस्लिम लीग् वस्तुतस्तु पाकिस्तान-परकाभिनिवेशे अति दृढतां साहसञ्चांग्लानाम वलम्बनमधिगम्यैव न्यवध्नात्। भारतन्तु वर्तते आध्यात्मिकं राष्ट्रम्। तच्चरित्रे तु सर्वभूतहितंरतत्वं निसर्गतया प्रबलं भवच्चकास्ति। अस्ति तन्मानवतावादि। विश्वबन्धुतावादस्तेनैव जगत्या हृदये समुद्-दीपितः। आंग्ला भारतीयान् जनान् प्रजामिव—सन्तानमिव—मत्वा न्यायपूर्वकं धर्मपूर्वकञ्च सुखेन वसन्तो भारतं शासतु; ते देशमिमं स्वकीयमेव ज्ञात्वा तं सर्वविधतया संवर्धयन्तु—इदं महात्मा गान्धी हृदयेनाकाङ्क्षति स्म। स इदं सविनय मांग्ल-शास्तरि न्यवेदयच्च। परं दुःखमस्ति महद्; न ते तत्कथने स्वल्पमपि ध्यानं प्रदत्तवन्तः। मानवतावादित्वान्मानवतासेवन-निष्टस्वभावत्वाच्च तन्मुस्लिमेषु यथा त्मीयतां न्यबध्नात्, तथैव तदांग्लेष्वपि आत्मीयतां निदधाति स्म। अहो, भारतमिव सर्व-प्राणिहितकरं राष्ट्रं न राष्ट्रान्तरं कदाचित्। भारतं तु कामयते—"सर्वे भवन्तु सुखिनः; पश्यन्तु च भद्राणि ते"।

केन प्रकारेण भारतं स्वतन्त्र मभवत्; स्वातन्त्र्याय केन प्रकारेण तत् तानि तानि कष्टान्यसहत; स्वातन्त्र्यान्दोल-नेऽहिंसां तत् कीदृश्या श्लाघनीयया रीत्या पर्यपालयत्, राष्ट्रिय-महासभा स्वतन्त्रतायाः प्राप्त्यै केषां केषां संघर्षाणा मन्तराले स्वप्रगतिपथं ग्रहीतु मशकत्, आंग्लाः केन केन प्रकारेण कूटनीति

माश्रित्य भारतीयान् विप्रालभन्त; स्वतन्त्रतायै अस्मद्देशस्य नवयुवानः केन प्रकारेण सहर्षं स्वकीयानसूनपि हसन्तो हसन्त उदसृजन्; महात्मा गान्धी अन्ये चास्मद्देशस्य वन्दनीयचरिता लोकमान्यबालगङ्गाधरतिलक--पण्डितमोतीलालनेहरु--राजेन्द्र-प्रसाद–सरोजनी नायडू-सुभाषचन्द्र वसु-पण्डितजवाहरलालनेहरु लाला लाजपतराय-राजगोपालाचार्य-लालबहादुरशास्त्रि–भगत-सिंह प्रभृतिनेतारो देशस्य कृते यं त्यागं कृतवन्तो यानि यानि च बहूनि बहुविधानि कष्टानि सेहिरे; वस्तुत स्तेषां सर्वेषामपि देशभक्तप्रवराणां त्यागमयस्य भारतमातृसेवा-मयस्य बलिदानमयस्य जीवनस्य या पावनकथा वर्तते सैव भारतं स्वतन्त्रं कारयितुं युध्यमानस्य स्वातन्त्र्ययुद्धस्येतिहासो वर्तते ।

**ऋषिमुनिवृन्दसुसेवितचरणाम्बुज ए ।**
**मृदुलमनोज्ञ मनः शुचि मम भारत ए ॥१॥**

**शरणसमागतमानवहितपोषक ए ।**
**कलितललितरुचिरम्य जय जय भारत ए ॥२॥**

**हरिपदतोयजरतजगतीप्रियभूषण ए ।**
**श्रुतिस्मृतिबोधितपथगत, जय भारत ए ॥३॥**

**नयसृतिपथिक यशोधन सुकृतप्रिय ए ।**
**रुचिरसरलशुभमानस, जय भारत ए ॥४॥**

**कृतमुदितसुजन, दण्डितशठदुर्जन ए ।**
**प्रकृतिमधुरचरितोज्ज्वल, जय भारत ए ॥५॥**

**विविधविचित्रविपिनाजिर कृषिबन्धुर ए ।**
**ज्ञानसुधांशुचकोर, जय जय जयभारत ए ॥६॥**

**हृद्य विहगमृगजीवन, गिरितटिनी प्रिय ए ।**
**अतिशयचारु उदार, जय जय भारत ए ॥७॥**

**प्रतिभानवविलसित सुन्दर ममभारत ए ।**
**शमदममञ्जुल शुभ्र, जय जय भारत ए ॥८॥**

वन्दामहे भारतमातृभक्तान्
श्रीगान्धि-राजेन्द्र-सुभाष-पन्थ-
श्रीनेहरु-शास्त्रि-पटेलनेतॄन्
अन्यांश्च सर्वान् विनयेन मान्यान्

सा वन्द्यते राष्ट्रमहासभापि,
राष्ट्रं स्वतन्त्रं प्रियभारतं या ।
द्रष्टुं विवेकेन चकार कार्यं,
सम्मार्गयन्तो ह्युचितंस्वमार्गम् ॥

॥ शुभं भूयात् ॥

## शुद्धि पत्रम्

(अनेकत्र समस्तपदानामेकस्यामेव शिरोरेखायां संयोजनं न जातम्। एतादृशेषु स्थलेषु सुधियः पठकाः संशोध्य पठितुं प्रार्थ्यन्ते।)

प्रयुयुजुयैः प्रयुयुजुः, यै (२-२०) भारत भारतं (५-४) उपनिषदेशान् उपनिषदुपदेशान्, (६-१०) प्रासीत आसीत् (६-१०) तादृशा तादृशीं (०-२५) कालेस्य कालेजस्य (११-४) दोष मेत दोष एषः राजनीतिकाधिकाग राजनीतिकाधिकारिभिः (११-२६) मगडगात् मगृहणात् (१३-२४) त्युको त्युत्को (१५-३) सयं सत्यं (१५-२२) सह्वन् सः बहून् (१६-५) द्वियीय द्वितीय (१६-११) पालयन् पालयन्न (१७-८) वमु वसु (२०-१) नारे नारो (२०-२४) भव भुव (२१-२) प्रचक्रमाते प्रचक्रमे (२१-२१) भवन्मिः भवन्ति (२३-१०) मान्यायै मन्यायै (२३-१५) तद् तत (२३-२३) शयिनं शायिनं (२३-२४) तस्याः शोचः तस्याः अति शोचः (२४-७) विद्रोप-विद्रोह (२८-२५) तन्त्र यन्त्र (३०-३०) हग् दृग् (३१-७) जनया जनता (३१-१०) न् न (३१-प्रयनेमातषु प्रयतमानेषु (३३-१५) तन्स्ये तन्त्ये (३३-१८) दुक्चै…न दुच्चै (३३-२२) भारतीथस्य भारतीयस्य (३३-२२) मम मद (३५-६) नितान्तन्याय नितान्तान्याय (३३-११) ऽजीवामि ज्जीवामि (३३-१४) परिणयते परिणायते (४३-२६) मेशाविया मेशवीया (४४-५)वर्त्याँवा वर्तयामा (४४-१३) धाया धाय (४४-२५) मुहान् महान् (४६-१) मुमुक्ती मुक्ती (४६-३) शोभा क्षोभा (४६-१५) स्वा न स्वा (४६-२१) यन्त्य तन्त्य (४६-२२) महन्ति महान्ति (५०-८) साहारे साहा (५२-१५) समाकं स्माकं (५३-१२) वैधाध्त्र वैधाध्व (५५-१२) क्षद्र क्षुद्र (५६ ४) थोगो योगो (५६-१७) स्रम्भा स्रम्भ (६७ ७) सयता सत्यता (६७-८) चिन्तामपि चिन्तापि (७२-१६) जज्ञास्ताः प्रशस्ताः (७६-११) माद्रसतः मद्रासतः (७८-१) सममत् समत् (७८-७) प्रसत्रा प्रसन्न (७८-२४) व वः (७८-२४) स्यु स्य

(७८-२४) स्निग्धौ स्निग्धो (७८-२७) वेवने वेशने (७८-१४) माग मार्ग (८४-३०) स्वारा स्त्ररा (८६-१३) त्मा त्म (८७-४) प्रच्य प्रतीच्य (८७-१६) गम्भीरां गम्भीरां विज्ञतां (८७-२३) सन्ति सन्ति, सन्ति (८६-६) तु न्तु (६०-२) दित्यं दिव्यं (६०-७) तन्तो तन्त्रतो (६०-१६) नाक्र नाक (६१-१०) राट्रे राष्ट्रे (६१-१६) रजां रुजां (६३-७) आमग्त्र्य आमन्त्र्य (६३-२४) न्वाय न्याय (६३-२८) निपीडय निपीड्य (६४-१८) ध्यक्षे ध्यक्ष्ये (६५-३१) कतुं कर्तुं (६६-१५) व्यहरन्तो व्यवहरन्तो (६७-१३) व्याजह्रः व्याजह्रुः (६६-१६) त्वस् त्वम् (६६-१६) प्रथत्न प्रयत्न (६६-१६) इत्यूत इत्येत (१०३-१५) कारिणीः कारिण (१०५-१) गगच्छ गच्छ (१०५-१६) स्वनु स्वनू (१०५-१७) पयित पयितुं (१०५-२५) कायानि काव्यानि (१०५-२५) परमस्य परस्य (१०६-४) साहित्यय साहित्यस्य (१०६-४) विन्दमान विन्दमानान् (१०६-२५) रप रूप (१०८-२४) भोय भोग्य (११०-१०) दह इह (११२-१०) आग्लु आंग्ल ११२-१५) नियमन नियम (११२-१७) मनुस्त्या मनुसृत्या (११२-१७) वद्मः विद्मः (११२-२३) समाप्तामा समाप्ताया (११२-३१) एवेदृक् एवेदृक् (११४-५) प्रभत्वं प्रभुत्वं (११६-२२) नीतिः नीतः (११८-३०) सोऽलिले सोऽखिले (११८-१) भशं भृशं (११६-५) लर्घं लघु (११६-२४) कर्तं कर्तुं (११६-१६) अभिवद अभिवन्द (१२०-३१) हाइस हाउस (१२१-३) ऽभिकार ऽधिकार (१२२-२१) ताय तायै (१२२-३०) भाय भाग्य (१२३-७) द्राक्तष्ट्रा द्राष्ट्रा (१२३-११) स्वपा स्वल्पा (१२३-१५) गान्थी गान्धो (१२५-११) स्रङ्गः स्तरङ्गः (१२७-७) कात्रक्षाः काङ्क्षाः (१२७-२५) भर भरु (१३१-२६) वेक्षो वेशो (१३३-१६) अशक्त अशकत् (१३४-१०) कि किं (१३४-३०) णः ण (१३४-३१) ताद्रृश्शं तादृशं (१३५-२०) कैशि कैशिया (१३४-२६) तोषरने तोषाग्ने (१३६-३६) मसृटजत मसृजत् (१३८-१८) विदधु विदधुः (१३६-६) वर्तत्-वृतन् (१४०-३) धनपनयो धनपतयो (१४१-१०) शासमस्य शासनस्य (१४१-१६) देहाप देहम (१४१-१७) इत्युक्वा इत्युक्त्वा (१४५-३) आजा-अजा (१४७-१५) दित्मे दित्ये (१४७-२७) तत्वात् कत्वात् (१४८-६) स्वारा

स्वरा (१४६-२०) वन्त वन्त: (१५१-१६) मये मध्ये (१५२-२०) तेहत्ये इत्येतत्(१५२-२८) न्यू न्यु(१५३-६) कतु कर्त (१५३-२८) नेतृपि: नेतृभि: (१५४-४) मार्वर्जयत् मावर्जयत् (१५४-७) ययापूर्व यथापूर्व (१५५-२४) भावत् यावत् (१५६-१४) प्रभूयेव प्रभृत्येव (१५६-२६) प्रातेत प्रवर्तेत (१५७-११) देशस्य देशस्त (१५८-२४) दण्डे दण्डं (१५८-२४) निरोधमं निरोधनं (१५८-२८) स्पष्टि स्पष्ट (१६०-२) निरचोनत् निरचिनोत् (१६१-८) मान्दालेनं मान्दोलनं (१६१-१७) अन्तत अन्त (१६२-३०) व्यम व्यय (१६४-११) स्वस्वा स्वस्व (१६४-२१) नामि नाभि (१६५-७) राट्रिष्य राष्ट्रिय (१६८-११) प्रान्पुवन् प्राप्नुवन् (१६८-२६) सादूमन साइमन (१६८-३१) साहमना साइमना (१७०-१६) पूणो पूर्णो (१७१-२६) दीदम् दयम् (१७५-२६) सव सर्व (१८२-१६) पलाटय पलाय्य (१८३-८) पृथङा पृथङ् (१८६-२४) सफलमा सफलता (१६१-२५) दीयित दीयत (१६३-११) मेकढानल्डो मेकडानलो (१६४-११) नाट्टत नादृत (१६५ १७) व्यतिरिध्य व्यतिरिच्य (१६७-२) तोन त: (१६७-३) निश्यि निश्चि (१६६-६) न्ती न्तीय (१६६-१७) त न (२००-२३) न्त्यतार्थं न्त्यार्थं (२०२-६) प्राक्र प्राक् (२०२-२६) समि समिते (२०२-२६) सन्ने सन्नाने (२०५-१) नुक्ल नुकला ध्यम् ध्यत् (२०६-१५) विय विनय (२१०-२) विन्दि वन्दि (२१०-१७) नोऽमा नोऽस्मा (२१४-११) जहयु जह्यु (२२०-२१) मफ्तु माप्नु (२२१-१०) न्टे न्ते (२२१-३०) भापत भारत (२२३-१७) मीही मीहा (२२५-२३) पडिया पीडया (२२६-२) मच् तच् (२२६-२५) दिनाङ्यो दिनाङ्कयो (२३८-२०) शासर शासन (२४८-२५) एटलो एटली (२४६-१) तलत्ये तत्रत्ये (२५०-१६) रब्वो खग्रो (५२-२१) न्त न् (२५४-२४) ताधी ताधीन (२५४-६) यन्तो यन्ती (२५८-८) ।

✵ इति ✵